*Sheth Devchand Lalbhai Jain Pustakoddhar Fund Series, No. 76.*

# TATTVĀRTHĀDHIGAMASŪTRA

*( A Treatise on the Fundamental Principles of Jainism )*

**Part II—Chapters VI—X**

BY

HIS HOLINESS S'RĪ UMĀSVĀTI VĀCHAKA

TOGETHER WITH HIS OWN GLOSS

Elucidated by

S'RĪ SIDDHASENAGAṆI

EDITED WITH

INTRODUCTIONS IN SANSKRIT & ENGLISH

BY

HĪRĀLĀL RASIKDĀS KĀPADIĀ, M.A.,

Translator of Nyāyakusumāñjali, Śṛiṅgāravairāgyataraṅgiṇī, etc.

---

PUBLISHED BY

JIVANCHAND SAKERCHAND JAVERI,

A Trustee of Sheth Devchand Lalbhai Jain Pustakoddhar Fund.



First Edition.] A. D. 1930. [1250 Copies.

**Price Rs. 6-0-0.**

[illegible]

[illegible]



जन्म वि. सं. १९११ श्रावणशुक्ल१५ राजनगरे. दीक्षा वि. स. १९२४ ज्येष्ठकृष्ण २. राजनगरे.
पंन्यासपदं वि. सं. १९५७ आषाढशुक्ल ११ सूर्यपुरे. सूरिपदं वि. सं. १९७५ माघशुक्ल ५ महेशानपुरे.

Lakshmi Art, Bombay 8.

# समर्पणपत्रम् ।

अयि प्रशमपीयूषपयोनिधि-शान्त-तपोमूर्त्ति-सूरिमन्त्राराधक-तपागच्छाधिपति-
प्रातःस्मरणीय-आचार्य्यवर्य-श्री १००८ विजयसिद्धिसूरीश्वरपादाः !

समाकृष्टमस्ति मच्चेतो भगवत्पादानामप्रतिमैः शमदमादिगुणगणैः । सुविहितनामधेयानां भवतां गभीरता, "मुधादायी मुधाजीवी" इत्यादिशास्त्रीयवचनानुसारिण्युपदेशप्रवृत्तिश्चापूर्वा वर्तत इति तु सर्वजनाऽविगानमेव । 'सा मम समग्रस्य कुटुम्बस्य सधर्मजीवनं निर्मातुमतीवोपयोगिन्यभूत्' इत्येतत् सूचयति खलु मां प्रति निरतिशयं वात्सल्यं सदा संस्मरणीयानां श्रीमताम् । समग्रप्राणिगणहितपरायणानां भगवत्पादानां प्राग् दर्शिताया एतस्याः स्तुत्योपकृतेस्तया 'अस्मदीयसंस्थायै श्रीमद्भिर्वितीर्यमाणायाऽनर्घ्यानुमतेर्विश्वोपकारकसर्वोत्तमसाहित्यसंशोधनप्रचारकर्मणि स्वकीयस्वहस्तसंशोधितानेकशास्त्रप्रतिप्रदानादिना मम परोपकारैकनिष्ठैर्मुनिपुङ्गवैर्भवद्भिर्विहितं भूरि भूरि साहाय्यं' तस्य च चिरस्मरणाय महनीयेभ्योऽपि महनीये भवतां कराम्भोजे समर्प्यतेऽयमपूर्वग्रन्थो मया भवदभिलापादृतेऽपि ।

सकलवस्तुतत्त्वप्रज्ञापके श्रीमहावीरदेवशासने द्रव्यानुयोगाद्यनेकभेदभिन्नं ज्ञानादिरत्नत्रयप्रापकमत एव सकलशास्त्रेभ्योऽतिशयितं त्रिभुवनाश्चर्यकरं साहित्यनिधानं वरिवर्ति । तस्य प्रचारकर्मणि चतुस्त्रिंशदतिशयशालि-सकलसुरासुरसंसेवित-सकलोपमातीत-देवाधिदेव-श्रीमहावीरदेवाज्ञापरिपालनपरैः श्रीवीरशासनवियत्प्रकाशनहिमांशुभिर्महर्षिभिः शासनरसिकैः श्राद्धरत्नैश्च कामं कामं व्यवसितं तस्याग्रे मम प्रयत्नास्तु सर्वथाऽकिञ्चित्करा एव, तथापि ते फलेग्रहिणोऽभूवन् तत् कृपावतां भवादृशां कृपाफलमित्येव मन्येऽहम् । साहित्यप्रचारकस्य मम स्वल्पा अपि यत्नाः फलवैपुल्यभाजो भवन्त्विति मनोऽभिलापपूर्वकं विरमाम्यहम् ।

सूर्यपूर्याम्
वि. सं. १९८६
आषाढमासे
अमावास्यां शुक्रवासरे
( 'दिवासा'पर्वदिने )

भवदीयचरणसेवासमुत्सुकः

साकरचन्द्रात्मजो जीवनचन्द्रः ।

# Dedication

TO

## THE CALM, HOLY & AUSTERE

## ĀCHĀRYA S'RĪ 1008 VIJAYASIDDHISŪRĪS'VARA

THE HEAD OF THE TAPĀ-GACHCHA.

Your great and incomparable merits such as control over senses have captivated my heart. Your selflessness and the subjects you select for delivering sermons are indescribable. My entire family owes a deep debt of gratitude to your Holy self for the fatherly tenderness and care with which you have drawn us to the path of religion.

I beg leave to dedicate this invaluable work to you as an humble tribute and holy offering in recognition of the incomparable services you have rendered to the spread of *Jaina* literature by placing at my disposal rare manuscripts that you were careful to go through and correct yourself and by giving me on all occasions and at all times your invaluable sympathy, help, advice and guidance in every matter of difficulty, thus rendering my task of publication as easy and smooth as it should become.

I am paying this tribute as a spontaneous and heart-felt offering in spite of your wishes to the contrary.

Compared with the efforts that the *Jaina* scholars—the ascetics and laymen as well, have made in the past to spread the sacred literature of Jainism far and wide, out of mere love of learning and knowledge and as a matter of pious duty owed by them to Lord *Mahāvīra* of holy and imperishable memory, my publishing work is like a mere drop in the ocean. But I do feel that what little I have been able to do so far is the fruit of your Holiness's blessing and encouragement. With the prayer and wish that my work may grow and prosper by your grace and favour,

I beg to remain,

Your most obedient servant,

JIVANCHAND SAKERCHAND JAVERI.

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिविनेयरत्नानां
न्यायतीर्थन्यायविशारदपदसमलङ्कृतानाम्

## उपाध्यायश्रीमङ्गलविजयानाम्

# अभिप्रायः ।



नमो नमः श्रीप्रभुधर्मसूरये ।

अयि भाग्यवन्तः सज्जनमहोदयाः ! आर्यावर्तेऽस्मिन् प्राक्काले चतुर्थारकलक्षणेऽनेके महात्मानः स्वपरदर्शने सञ्जातास्तथाऽस्मिन् पञ्चमारकेऽपि बहवः स्वपरदर्शनज्ञाः समभूवन्, दर्शनान्यपि षोढा मुख्यतया प्रचलितानि । अपि च तैः सर्वैर्दर्शनकारमहानुभावैः स्वकीय-स्वकीयदर्शने यानि यानि तत्त्वान्यभिमतानि सन्ति तत्प्रतिपादकानि शास्त्राण्यपि स्वानुकूल-युक्तियुक्तानि निपुणबुद्धिशालिगम्यानि निरूपितानि । अधुनाऽपि विद्यन्ते तेषां समस्तानां महाशयानां प्रधानतयोद्देशस्तु मोक्षनिरूपणविषयक एव । किञ्च तैर्निरूपितं शास्त्रं पूर्णमपूर्णं वेति न चर्च्यतेऽप्रस्तुतत्वात्, परन्तु तेषां मध्ये गीर्वाणगिरायां जैनदर्शनविषयकं श्रीउत्तराध्ययन-भगवतीप्रभृतिसूत्रग्रन्थरत्नेभ्यः पूज्यपादभगवदुमास्वातिमहर्षिणा सङ्गृहीतं तत्त्वार्थे-सूत्राख्यं शास्त्रं स्वोपज्ञभाष्ययुक्तं यदाऽऽलोकितं तदा निर्णायीदमेव शास्त्रं सम्पूर्णतया मोक्ष-मार्गनिरूपणपरम् । अत्र प्रतिपादकशैल्यपि अतीव गम्भीरा मुमुक्षोर्मुक्तिमार्गस्याश्वाश्वासनी-भूताऽर्थाद् विश्वासाधायिनी । अत्रत्यः क्रमोऽपि योऽपूर्वो वर्तते सोऽपि स्पष्टतया प्रदर्श्यते—

अस्य दशाध्यायात्मकस्य शास्त्रस्योत्थानभूतं सम्पूर्णतया मोक्षमार्गप्रदर्शकं महामङ्गल-स्वरूपं प्रथमाध्यायस्य प्रथमं सूत्रम्—"सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इत्येव प्रथममुपन्यस्तम् । किञ्च दर्शनान्तरे तु न तादृशः क्रमः, किन्तु ज्ञानमेव केवलं मोक्षसाधकं प्रोक्तम् । यदि च क्रियां विनाऽपि ज्ञानादेव केवलाद् मोक्षप्राप्तिः स्यात् तर्हि समग्रोऽष्टाङ्गयोग-प्रकारो व्यर्थः स्यात्, तस्मात् पूर्णश्रद्धापूर्वकज्ञानचारित्रद्वारा एव मोक्षप्राप्तिरित्युपर्युक्तो मार्ग एव मोक्षसाधकः स्यान्नापरः । किञ्चैतत् सूत्रमवलम्ब्यैव सकलं शास्त्रं प्रवृत्तम्, अर्थादिदमेव सूत्रं सम्पूर्णशास्त्रविरचने बीजभूतम् ।

अधुना विषयविभागोपर्यपि दृष्टिपातः क्रियते । तथाहि—तावत् प्रथमाध्याये सम्यग्-दर्शनज्ञानयोर्निरूपणावसरेऽत्यन्तोपकारिजीवतत्त्व-नय-निक्षेप-प्रमाणप्रभृतीनामपि निरूपणम-त्यन्तगम्भीररूपेण कृतम्, अर्थात् शब्दतः सङ्क्षेपतयाऽर्थतो विशदरूपेण निरूपणमकारि ।

द्वितीयेऽध्याये जीवानां स्वतत्त्वरूपौपशमिकादिभावपञ्चकानां व्याख्यानं जीवस्वरूप-प्रदर्शनपूर्वकं तथेन्द्रियाणां द्रव्यभावभेदपूर्वकनिरूपणसहकृतजन्मयोनि-शरीरपञ्चकानामपि प्ररूपणं सम्यक्तया कृतम् ।

तृतीये नरकस्थानभूतनरकावास-नरकसङ्ख्यानिर्देश-जम्बूद्वीपस्थमेरुभरतादिक्षेत्रप्ररूपणा-पुरस्सरद्वीपसमुद्रपरिधिप्रभृतीनां निरूपणेन सह मनुष्यतिरश्चामपि स्पष्टरूपेण भेदनिरूपणं कृतम् ।

शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिविनेयरत्नानां
न्यायतीर्थन्यायविशारदपदसमलङ्कृतानाम्
## उपाध्यायश्रीमङ्गलविजयानाम्
# अभिप्रायः ।



नमो नमः श्रीप्रभुधर्मसूरये ।

अयि भाग्यवन्तः सज्जनमहोदयाः ! आर्यावर्तेऽस्मिन् प्राक्काले चतुर्थारकलक्षणेऽनेके महात्मानः स्वपरदर्शने सञ्जातास्तथाऽस्मिन् पञ्चमारकेऽपि वहवः स्वपरदर्शनज्ञाः समभूवन्, दर्शनान्यपि षोढा मुख्यतया प्रचलितानि । अपि च तैः सर्वैर्दर्शनकारमहानुभावैः स्वकीय-स्वकीयदर्शने यानि यानि तत्त्वान्यभिमतानि सन्ति तत्प्रतिपादकानि शास्त्राण्यपि स्वानुकूल-युक्तियुक्तानि निपुणबुद्धिशालिगम्यानि निरूपितानि । अधुनाऽपि विद्यन्ते तेषां समस्तानां महाशयानां प्रधानतयोद्देशस्तु मोक्षनिरूपणविषयक एव । किञ्च तैर्निरूपितं शास्त्रं पूर्णमपूर्णं वेति न चर्च्यतेऽप्रस्तुतत्वात्, परन्तु तेषां मध्ये गीर्वाणगिरायां जैनदर्शनविषयकं श्रीउत्तराध्ययन-भगवतीप्रभृतिसूत्रग्रन्थरत्नेभ्यः पूज्यपादभगवदुमास्वातिमहर्षिणा सङ्गृहीतं तत्त्वार्थ-सूत्राख्यं शास्त्रं स्वोपज्ञभाष्ययुक्तं यदाऽऽलोकितं तदा निर्णायीदमेव शास्त्रं सम्पूर्णतया मोक्ष-मार्गनिरूपणपरम् । अत्र प्रतिपादकशैल्यपि अतीव गम्भीरा मुमुक्षोर्मुक्तिमार्गस्याश्वाश्वासनी-भूताऽर्थाद् विश्वासाधायिनी । अत्रत्यः क्रमोऽपि योऽपूर्वो वर्तते सोऽपि स्पष्टतया प्रदर्श्यते—

अस्य दशाध्यायात्मकस्य शास्त्रस्योत्थानभूतं सम्पूर्णतया मोक्षमार्गप्रदर्शकं महामङ्गल-स्वरूपं प्रथमाध्यायस्य प्रथमं सूत्रम्—"सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इत्येव प्रथममुपन्यस्तम् । किञ्च दर्शनान्तरे तु न तादृशः क्रमः, किन्तु ज्ञानमेव केवलं मोक्षसाधकं प्रज्ञप्तम् । यदि च क्रियां विनाऽपि ज्ञानादेव केवलाद् मोक्षप्राप्तिः स्यात् तर्हि समग्रोऽष्टाङ्गयोग-प्रकारो व्यर्थः स्यात्, तस्मात् पूर्णश्रद्धापूर्वकज्ञानचारित्रद्वारा एव मोक्षप्राप्तिरित्युपर्युक्तो मार्ग एव मोक्षसाधकः स्यान्नापरः । किञ्चैतत् सूत्रमवलम्ब्यैव सकलं शास्त्रं प्रवृत्तम्, अर्थादिदमेव सूत्रं सम्पूर्णशास्त्रविरचने बीजभूतम् ।

अधुना विषयविभागोपर्यपि दृष्टिपातः क्रियते । तथाहि—तावत् प्रथमाध्याये सम्यग्-[illegible] निरूपणम-[illegible] मकारि ।

द्वितीयेऽध्याये जीवानां स्वतत्त्वरूपौपशमिकादिभावपञ्चकानां व्याख्यानं जीवस्वरूप-प्रदर्शनपूर्वकं तथेन्द्रियाणां द्रव्यभावभेदपूर्वकनिरूपणसहकृतजन्मयोनि-शरीरपञ्चकानामपि प्ररूपणं सम्यक्तया कृतम् ।

तृतीये नरकस्थानभूतनरकावास-नरकसङ्ख्यानिर्देश-जम्बूद्वीपस्थमेरुभरतादिक्षेत्रप्ररूपणा-पुष्करद्वीपसमुद्रपरिधिप्रभृतीनां निरूपणेन सह मनुष्यतिरश्चामपि स्पष्टरूपेण भेदनिरूपणं कृतम् ।

चतुर्थे देवयोनिप्रदर्शनेन देवविभागो विस्तररूपेण निरूप्याध्यायोऽयं पूर्णीकृतः ।

पञ्चमे जीवानां साक्षात् परम्परया चोपकारिभूतानां धर्मास्तिकायाधर्मास्तिकायाकाशास्ति-कायपुद्गलास्तिकायकालेत्यजीवतत्त्वानां लक्षणभेदप्रभेदादिप्ररूपणपूर्वकं गुणपर्यायाणां निरूपणं कृतम्।

षष्ठसप्तमाष्टमेषु च जीवानां संसारमोक्षावस्थाकारणानां मध्ये मुक्तिपूर्वकं प्रदर्श्य-मास्रवबन्धाख्यं तत्त्वद्वयं विस्तरेण प्रतिपादितम् ।

नवमेऽध्याये मोक्षसंसारावस्थासाधकबाधकानां लक्षणस्वरूपभेदप्रभेदनिरूपणपूर्विका संवरनिर्जराख्यतत्त्वद्वयी प्ररूपिता ।

दशमे मोक्षस्वरूपप्रतिपादकं मोक्षतत्त्वं निरूपितम् ।

किञ्च यथाऽस्य स्वोपज्ञभाष्यभूषितस्य सूत्रस्योपरि अनेकाष्टीकाः सम्प्रत्युपलभ्यन्ते तथैव केवलसूत्रोपर्यपि सम्प्रदायान्तरीया वार्तिकवृत्त्यादिरूपा बह्व्यष्टीका दृष्टिपथमवतरन्ति । तासु सर्वासु टीकासु मदीयं मतन्तु पूज्यपादभगवत्सिद्धसेनगणिविरचितवृत्त्या यादृशमाकृष्टं तादृशं न कयाऽपि टीकया । पठिता अपि प्रायोऽनेकाष्टीकाः, परन्तु न्यायमर्यादापूर्वक-सिद्धान्तप्ररूपणमतीवगम्भीररूपेणात्र यादृशं प्रतिभाति तादृशमन्यत्र न । अत्र तु भवभीरुणा श्रीमता भगवता सिद्धसेनमुनिवरेण तथाविधमपि कष्टसाध्यं कार्यं सम्पूर्णतया कृतम्। वृत्तिरपि सार्धद्वाविंशतिश्लोकसहस्रप्रमाणा विशालकाया गम्भीरार्थप्रतिपादिका दृश्यते । अपरञ्च तत्र सूत्रार्थनिष्कर्षरूपाणि वाक्यान्यपि प्रचुरतयोपलभ्यन्तेऽत एव ज्ञायते प्रौढपाण्डित्यसूचिकेयं वृत्तिः प्राचीनतराऽपि। भाष्यमपि सर्वं विशदरूपेण व्याख्यातमनेन महर्षिणा, अन्यैस्तु स्वकीय-स्वार्थसाधकत्वं तत्राविलोक्य नैतदुमास्वातिप्ररूपितमित्युक्त्वा विलुम्पकैर्विलुम्पितं, परन्तु न तत्र तादृशापलापकार्यकरणे मनागपि अधोदृष्टम्। किञ्च भवभीरुणा श्रीसिद्धसेनगणिना तु पूज्यतया सूत्रसहितं भाष्यं प्रामाणीकृत्य व्याख्यातम्। षडधिकद्विशत (२०६)तमे पृष्ठे भाष्यवृत्तिगतोल्लेखस्य भावार्थस्तु प्रक्षिप्तकारस्य प्रमत्तत्वकथनद्योतकं, न तु पूज्यपादभाष्यकारस्य, यतस्तत्त्वरत्नानामा-करमर्पयितुरुपकारस्थाने दोषारोपणं कः सुधीः कुर्यात् ?। किञ्च वृत्तिकारमहाशयानामाशयान-भिज्ञेन केनचित् पण्डितंमन्येनाक्षेपो वृत्तिकारोपरि कृतः, स तु नितान्तभ्रममूलकोऽवगन्तव्यः ।

अपरञ्चेयं वृत्तिरपि सूत्रभाष्यसमेता जैनसमाजस्य भाग्योदयेन महानुभावैः सज्जन-महोदयैर्देवचन्द्र लालभाइ जैनपुस्तकोद्धारसंस्थाकार्यवाहकैर्विपुलद्रव्यव्ययपूर्वकं महत्पुण्यस्वाय-त्तीकृत्य मुद्रापिता । किञ्च तादृग्ग्रन्थरत्नस्य प्रशंसनीयं संशोधनकार्यं महापरिश्रमपूर्वकमनेक-ग्रन्थसम्पादकानुवादकविवेचकविद्वद्वर्यप्रोफेसर **हीरालाल रसिकदास कापडिया** एम्. ए. इत्युपाधिधारिणा विशिष्टप्रस्तावनाटिप्पण्यादिविषयविभागविशदपूर्वकं कृतं तेन पाठकानां पठनपन्था अतीव सरलः कारितः । यादृशं संशोधनकार्यमन्यैः कर्तुं दुःशकं तादृशमनेन महाशयेन कृतम् । पाठान्तराण्यपि न विस्मृतानि । अन्तत एतत्संस्थाकार्यवाहकश्रेष्ठिवर्य-जीवनचन्द्रसाकरचन्द्रप्रभृतयः श्रद्धापूर्वकसंशोधनकार्यकर्तारः प्रोफेसरहीरालालमहाशया अपि धन्यवादमर्हन्ति । एते सर्वेऽपि एतादृक्साहित्योद्धारकार्यकरणे निरन्तरदक्षा भवन्त्विति शासनदेवं प्रति विज्ञप्यते न्यायतीर्थमुनिमङ्गलविजयेन ।

श्रीवीरम्

# આમુખ



શ્રીતત્ત્વાર્થાધિગમસૂત્રનો બીજો વિભાગ અધ્યાય ૬ થી ૧૦ અદ્યાપિ પ્રસિદ્ધ થયો ન હોતો તે અમે શેઠ દેવચંદ લાલભાઇ જૈન પુસ્તકોદ્ધારે ગ્રંથાંક ૭૬ તરીકે પ્રસિદ્ધ કરવા ભાગ્યશાળી થયા છીયે.

પ્રથમ વિભાગની પેઠે આ દ્વિતીય વિભાગનું કાર્ય પણ પ્રોફેસર **હીરાલાલ રસિકદાસ કાપડિયા** *M. A.* દ્વારા કરાવવામાં આવ્યું છે. તેઓએ ગ્રંથકારનો પરિચય વગેરે પ્રાસંગિક બાબતો ઉપર બન્યો એટલો સુન્દર પ્રકાશ પાડ્યો છે એટલે એ સંબંધે હમારે કશું ઉમેરવા જેવું રહેતું નથી.

પ્રથમ વિભાગ સંબંધે પૌર્વાત્ય અને પાશ્ચાત્ય વિદ્વાનોના અભિપ્રાયો મળ્યા છે તે ઉપરથી વાંચક વર્ગ આ અપૂર્વ ગ્રન્થનું મૂલ્ય આંકી શકશે એમ ધારિયે છિયે. અભિપ્રાયો અંતમાં દાખલ કરવામાં આવ્યા છે.

અમારા પ્રકાશન કાર્યમાં વિના સંકોચે સહાયતા કરનાર પરમ પૂજ્ય આચાર્યવર્ય શ્રીવિજયસિદ્ધિ-સૂરીશ્વરજીના કરકમળમાં પ્રથમ વિભાગની જેમ આ દ્વિતીય વિભાગ પણ સમર્પણ કરી પ્રમોદિત થઇયે છિયે.

દ્વિતીય વિભાગનું પણ પાઠાંતરપૂર્વક શુદ્ધિપત્રક તૈયાર કરી આપવા માટે ન્યાયતીર્થ ન્યાયવિશારદ ઉપાધ્યાય **શ્રીમંગલવિજયજી** મહારાજશ્રીના અમો ઋણી છિયે.

સદર ગ્રંથની પ્રાચીનમાં પ્રાચીન તાડપત્રીની પ્રત પાલણપુરના એક યતિજીના ભંડારમાં છે એવી અમોને ખબર મળતાં તે મંગાવવા બનતો પ્રયાસ સેવ્યો પણ તેમાં ફલીભૂત થઇ શક્યા નહિ. પાલણપુર જઇ ત્યાં લાંબો સમય રોકાઇ કાર્ય કરાવી શકવાની અનુકૂલતા હતી નહિ તેથી તે પ્રતિનો લાભ લઇ શકાયો નથી પણ ભવિષ્યમાં ઉપયોગી થઇ પડે એ આશાએ અમે એની અત્ર ટુંક નોંધ લેવી દુરસ્ત ધારીએ છિયે.

સુરત, ગોપીપુરા,<br>સં ૧૯૮૬ જેઠ સુદ ૧<br>ગુરુવાર<br>તા૦ ૨૯ મે ૧૯૩૦.

લિ૦<br>જીવણચંદ સાકરચંદ જવેરી<br>પોતે અને બીજા ટ્રસ્ટીઓ વતી.



## विषयसूचीपत्रम्—TABLE OF CONTENTS





# किञ्चिद् विज्ञापनम्

चिरत्नग्रन्थरत्नगवेषकाः ! सानन्दं निवेदयामि तत्रभवद्भ्यः शेमुषीशालिभ्यो यदुत महार्थाल्पसूत्रस्य श्रीतत्त्वार्थाधिगमसूत्रेतिनामधेयस्यास्य ग्रन्थरत्नस्य प्रथमविभागप्रस्तावनाप्रान्ते 'द्वितीयं विभागं यथामति संशोध्य धीधनकरकमले समर्पयिष्यामी'ति याऽभिलाषा प्रदर्शिता मया तत्पूर्तिः सञ्जाता सम्प्रति देवगुरुकृपाकटाक्षेण। परं न चायं मे प्रयासो विघ्नविकलः, यतो लघिष्ठभ्रातुः खुशमनलालस्य वर्षद्वयपर्यन्तानारोग्येण न केवलं नानाकदर्थना मम सञ्जाताः, किन्तु तत्परलोकगमनेन चिरस्थायी मर्मस्पर्शी उद्वेगश्चानुभूतो मया।

किञ्च 'श्रीमोहनलालजीजैनसेन्ट्रललाइब्रेरी'सत्कक-संज्ञकप्रत्याधारेणारब्धे अद्यावध्यप्रकाशितैतद्विभागमुद्राप्यमाणपुस्तिकाकर्मणि गरीयांसं तापं समन्वभवम्, अशुद्धिपाठपातादिप्राचुर्यात्। श्रीयुतजीवनचन्द्रद्वारा प्राप्ता श्रीविजयसिद्धिसूरिवरसत्का ख-प्रतिरपि तद्दूरीकरणे न प्रभविष्णुरभूत्। अतः प्रायः सार्धपष्ठाध्यायात् गेतिसंज्ञानिर्धारितस्या मदीयजन्मभूमि'सूर्यपुर'स्य'जैनानन्दपुस्तकालय'प्रत्या आधारेण मुद्राप्यमाणा पुस्तिका कथमपि सम्पूर्णतामानिन्ये।

एवं महता कष्टेन विहितायां पुस्तिकायां 'एशियाटिक् सोसायटी ऑफ् बेन्गॉल्' इति संज्ञया सुप्रसिद्धसंस्थया मुद्रापितस्य घ-संज्ञितस्य पुस्तकस्य साहाय्येन सूत्रभाष्यपाठानां संशोधनसमये महती चिन्ताऽऽपतिता यत् किं करणीयं शेषसन्दिग्धस्थलपरिस्खलनापरिमार्जने। प्रकाशकमहाशयाय निवेदितेऽस्मिन् सङ्कटे तेन कतिपयमासान्तरे कस्याश्चन प्रतेः प्रतिलेखो मह्यं प्रददे। तत्र प्रतिलेखकस्य प्रमादात् लिपेरनभिज्ञत्वाच्च शुद्धा अपि पाठा अशुद्धीभूता दृष्टिगोचरमागताः, तथापि किमपि साहाय्यमलेभि ङ-संज्ञकयाऽनया प्रत्या, अतो मूलप्रतिप्रापणे प्रयत्नोऽकारि किन्तु स न सफलीबभूव।

एवं पुस्तकपञ्चकसाहाय्येन कथमपि निष्पादिता मुद्रणालयोचितपुस्तिका यन्त्रालये एव प्रेषिता। अत्रायं हेतुर्यद् ग्रामानुग्रामविहारकरणप्रवृत्तानामागमोद्धारक-व्याख्याप्रज्ञ-जैनाचार्यश्रीआनन्दसागरसूरिवराणामेकत्र स्थिरताऽभावात् तत्सविधे पुस्तिकाप्रेषणे नावकाशः, विलम्बकरणं तु दुःसहं द्वितीयविभागपाठनतत्परजनानां वारंवारपृच्छनादित्वात्।

सत्यामप्येवंविधपरिस्थित्यां ग्रन्थस्यास्य द्वितीयवेलाशोधनपत्राणि (revised proofs) तु मया प्रहितानि जैनागमप्रसिद्धिसेवाहेवाकिनां सार्वसिद्धान्तप्रवीणानां श्रीमतां आनन्द-

सागरसूरिपादानां सविधे । एभिः सूरिमतल्लिकाभिरादरातिशयादपि साक्षात्कार्यं पाठस्वच्छ-च्छायादिभिः सङ्कलय्य संशोधितानि तानि पत्राणि ।

२४० पृष्ठेषु तु मुद्रितेषु एवंविधमपि साहाय्यं दातुमसमर्था अभूवन् सूरयः विहारादि-व्यग्रचित्ताः। तथापि संशोधनकर्मणि स्वर्गीजन्मकृपापरेण मामका साहाय्यदानेनानुगृहीतोऽस्मि तावता तेभ्यो ददामि शतशो हार्दिकान् धन्यवादान्। अस्योत्तरार्धस्य विभागस्य संशोधने मुख्यत्वेनोपकर्तॄणां दक्षिणविहारिमुनिराजश्रीअमरविजयशिष्यश्रीचतुरविजयानां नामधेयं कीर्तयाम्यनेकशः ।

अत्रेदमपि निवेदनमावश्यकं यद् १०४पृष्ठमुद्रणानन्तरं प्रकाशकेनान्यत् प्रतियुगलं मह्यमदायि । तत्र एका घ-संज्ञका प्रतिः अमदावादस्थडहेलेतिनामकोपाश्रयभाण्डागार-सत्का, ज-संज्ञका तु एतदपेक्षया प्राचीना कतिपयजीर्णपत्रमयी 'जैनानन्दपुस्तकालय'-सत्का यत्सहायतया ग-प्रतिर्लिखितेति मां प्रतिभाति । एतत् प्रतियुगलमभूत् किमप्यु-पयुक्तं सन्देहनिराकरणावसरे । ङ-सञ्ज्ञप्रतिरुपाध्यायानां न्यायतीर्थन्यायविशारदेतिपदवी-द्वयविराजितॄणां श्रीमङ्गलविजयानां यदुपयोगः क्वचिदेव कृतोऽत्र मया ।

अन्तेऽस्य २०६८०श्लोकप्रमाणकस्य ग्रन्थस्य प्रकाशनेन जैनतत्त्वजिज्ञासूनां प्राच्य-पाश्चात्यविपश्चितां साहाय्यकारिणः, मदीयसूचनानुसारेण प्रो. यकोबी-विन्टर्निट्स् लॉयमेन्-गरिनोप्रमुखविद्वद्वरेभ्योऽग्रवचनरूपां प्रस्तावनासम्बन्धिनीं वा लेखसामग्रीं विज्ञप्तिपत्रद्वारा याच-मानस्य च श्रेष्ठिप्रवरस्य श्रीयुतसाकरचन्द्रात्मजजीवनचन्द्रस्य प्रयासमिममनुमोदयन्, ग्रन्थस्य द्वितीयस्यापि विभागस्य शुद्धिपत्रकस्य विधातॄणां न्यायव्याकरणतत्त्वज्ञानविषयकनाना-ग्रन्थप्रणेतॄणां उपाध्यायश्रीमङ्गलविजयानां कृतज्ञतापूर्विकामुपकृतिं संस्मरन् कृपापीयूष-पाथोधिभ्यो विवेकविचक्षणेभ्यः स्खलनासम्बन्धिनीं च क्षमां याचमानो विरमाम्यस्माद् विज्ञा-पनाप्रस्तावाद् विबुधवृन्दारविन्दमकरन्देन्दिन्दरो हीरालालः ।



# PREFACE

It is a matter of great solace to me to mention that I have fortunately succeeded in fulfilling my promise of editing this important and interesting work, though the progress in the direction of completing this arduous task was seriously hampered by the untimely death of my youngest brother *Khushmanlāl.* He appeared for the B. Sc. examination with Chemistry from the Elphinstone College, the Almameter of mine also, in 1921 A. D. and secured the first class. Soon after, he joined the St. Xavier's College as an Assistant Professor of Chemistry, the College wherein, I, too, have worked as Assistant Professor of Mathematics, though, for a term. He continued to discharge his duties till the cruel hand of Death snatched him away from the midst of his relations, friends and acquaintances, on the 28th August 1926, after he had suffered from a protracted illness for about two years. This is not the place where I should even briefly record his career; so, without dilating upon my personal worries and shocks, I had to put up with, owing to the premature deaths of three members of my family who passed away though young, within a period of 15 months, I shall now add a few words in connection with the completion of the press-copy, in addition to what I have said in the preface of the first part of this voluminous work.

It was indeed very difficult for me to prepare the press-copy of this work, since, the manuscripts herein designated as *Ka* and *Kha* were unreliable. I would have been obliged to give up this attempt, after the sixth chapter and a part of the seventh were copied out, had I not succeeded in procuring the Ms. from the *Jaināṇanda Pustakālaya* of Surat which is here named as *Ga.* This, too, did not facilitate my work very much; for, it only partially helped me in clearing some doubts. In course of time, I was supplied by the publisher with a hand-written copy of this work prepared by a scribe, who, ignorant as he must be of the Sanskrit language had even failed to decipher the charactres. Anyhow, this was useful to me in tackling some knotty points, a fact that led me to suggest to the publisher that he should kindly supply me with the original Ms., which I am sorry to mention, proved a fruitless attempt for him.

Under these circumstances, on the one hand, I was inclined to proceed rather slowly with a view that I may get better materials to work with, while on the other, my attention was being drawn to the continuous demand for the second part, from the various sources.

1 A brief sketch is outlined in the St. Xavier's College Magazine ( September 1926 ).

It was after 13 formes of this part were printed that I was supplied by the publisher with a Ms. belonging to the Dehla Bhandar of Ahmedabad which gave me some relief. This is the very Ms. which is here referred to as *Ca.* This will explain the lot of inconvenience I had to undergo in compiling the press-copy. Over and above this, unfortunately, not only was *Śrī Ānandasāgarasūri* unable to go through my press copy but also he could not assist me even by examining the revised proofs; for, this sort of valuable assistance was available only up to the printing of 30 formes. For the rest of the work I was obliged to solicit help from two or three *Munis* out of whom *Śrī Catura-vijaya* deserves to be specially mentioned as he has favoured me by going through the revised proofs of Sanskrit Introduction and a major part of the portions appended to the text.

Befor [illegible] 'ly record my repeated thanks and gratitude to [illegible] an erudite scholar of Jainism, without whose willing and valuable co-operation it would have been indeed extremely difficult for me to complete this work. I shall be failing in my duty if I did not cordially thank *Nyāya-tīrtha Nyāyavis'ārada Upādhyāya Śrī Maṅgala-vijaya* who has exerted himself not only in removing the discrepancies which must have crept in this work owing to my inefficiency, by preparing the errata, but also has furnished the reader with different readings by comparing the printed formes with the Ms. in his possession, here designated as *Cha.* Furthermore, I may offer my heartiest congratulations to the publisher for the service he has rendered to the cause of Jainism by undertaking the publication of this gigantic work of immense value. In the end, I may avail myself of the present opportunity to acknowledge my indebtedness to Pandit *Sukhalal* as well as other authors whose works may have been useful to me in preparing the Introductions.

**H. R. KĀPADĪA.**





# प्रस्तावना

" परब्रह्माकारं सकलजगदाकाररहितं
सरूपं नीरूपं सगुणमगुणं[१] निर्विभु-विभुम् ।
विभिन्नं सम्भिन्नं विगतमनसं साधुमनसं
पुराणं नव्यं चाधिहृदयमधीशं प्रणिदधे ॥ "

इह हि निःसीमसंसारपारावारनिमज्जनत्रस्तानामाधिव्याध्युपाधिग्रस्तानां परिस्फुरज्जन्मजरामरणमोहानां करालकलिकालकवलितशेमुषीसन्दोहानां सङ्क्षिप्तरुचीनां भव्यसत्त्वानां परोपकारसम्पादनमेव सर्वोत्तमा स्वार्थसिद्धिः सौजन्यसौशील्यसारल्यशेवधीनां सार्वसिद्धान्तसारपीयूषपानपीवराणां श्रीजिनेश्वरशासनप्रभावनाप्रभाऽऽविर्भावभास्कराणामिति मत्वा परोपकृतिकर्मकर्मठैः श्वेताम्बरपरम्परानुसारेण पञ्चशतप्रकरणप्रणेतृभिरप्रतिमप्रतिभामण्डलैर्वाचकाखण्डलैः श्रीउमास्वातीतिसुभगनामधेयैर्न केवलं सन्दब्धस्तत्त्वार्थाधिगमसूत्रनामा व्यक्तविषयात्मको महामूल्यो ग्रन्थः, किन्तु सङ्कलितोऽयं भवसन्ततिदारिकाभिरशेषक्लेशनिराकारिकाभिरुपोद्धातरूपिकाभिः सम्बन्धकारिकाभिः, समलङ्कृतश्च गीर्वाणगीर्गुम्फितेन सूत्रार्थप्रदीपकेन सरलसरससुश्लिष्टस्वोपज्ञभाष्येणेति समवगम्यते प्रथमविभागगवेषकैः । अद्यावधियावदनुद्धृतस्यास्य ग्रन्थस्य प्रस्तावना प्रस्तूयते प्रतिज्ञापालनार्थं मन्दमेधसाऽपि मया । अवतार्यते तावन्मीमांसाभूमिकायां प्रश्नोऽयं यत् प्रथमं केन जैनमुनिरत्नेन संस्कृतभाषायां सिद्धान्तप्रणयनमकारि । प्रत्येकतीर्थङ्करशासने द्वादशाङ्गी रच्यते गणधरनामकर्मोदयवर्तिभिर्बीजबुद्धिभिर्गणधरदेवैः । तत्र दृष्टिवादसञ्ज्ञकं द्वादशाङ्गं प्रायो गीर्वाणगीर्गुम्फितं समस्ति । उक्तं च श्रीवर्धमानसूरिभिरवतरणरूपेण आचारदिनकरे निजप्रणयने—

" मुत्तूण[२] दिट्ठिवायं कालियउक्कालियंगसिद्धंतं ।
थीबालवायणत्थं पाययमुइयं जिणवरेहिं ॥"

अनेन निरस्यते मतमिदं केषाञ्चिद् यदुत श्रीवीरनिर्वाणसमयानन्तरमेव जैनैः संस्कृतभाषाज्ञानं सम्पादितम् । अपरञ्च एतन्निरसने निम्नलिखिते गाथे अप्युपयुक्ते—

" सक्कया[३] पागता चेव दुहा भणितीओ आहिया ।
सरमंडलम्मि गिज्जंते पसत्था इसिभासिता ॥"

—स्थानाङ्गे सप्तमे स्थानके ३९४तमे पत्रे

---

१ श्रीसिद्धसेनगणिवरैर्भाष्यकारिकेति नाम निरदेशि विंशतितमे पृष्ठे ।

२-३ छाया—मुक्त्वा दृष्टिवादं कालिकोत्कालिकाङ्गसिद्धान्तम् ।
स्त्रीबालवाचनार्थं प्राकृतमुदितं जिनवरैः ॥
संस्कृता प्राकृता चैव द्विधा भणिती आहिते ।
स्वरमण्डले गीयेते प्रशस्ते ऋषिभाषिते ॥

"सक्कया पायया चेव भणिईओ होंति दोण्णि वा।
सरमंडलम्मि गिज्जंते पसत्था इसिभासिया ॥"[1]

—अनुयोगद्वारे सू० १२७, १३१तमे पत्रे

एवं परिस्थित्यां सत्यां गीर्वाणगिरायां सिद्धान्तग्रन्थानामनिर्माणम्, यत् सन्त्यपि तीर्थानि प्रवर्तितान्यधुनापि । अतः केन प्रथमतोऽपि कृतानि ग्रन्थस्य कोऽवकाशः ? । किञ्च श्रीमन्महावीरस्वामिसत्कानां श्रीइन्द्रभूतिप्रमुखगणधरैः रचितानि चतुर्दश पूर्वाणि विद्यमानानि[2] हुण्डावसर्पिण्या अस्मिन्नरे गीर्वाणभाषामयः कः प्रथमो ग्रन्थ इति जिज्ञासानुरूपं यथेष्टस्थापनासम्भवः, परन्तु वर्तमानकाले समुपलभ्यं साहित्यमाश्रित्य तत्त्वार्थाधिगमग्रन्थकमिदं आद्यं प्राथमिकं स्थानमलङ्करोतीति कथने न मनागपि सन्देहो वर्तते, सर्वेषां पूर्वाणामुच्छेदत्वात् ।

बालस्त्रीमन्दमूर्खाणामप्युपकारिणीं प्राकृतभाषां परित्यज्य कस्माद् इतो गीर्वाणगिराश्रित तत्त्वार्थसूत्र-प्रशमरतिप्रभृतिग्रन्थग्रथनकलानर्तकीनाट्याचार्यैर्वाचकवर्यैरित्यपि प्रश्नः सञ्जायेत, किन्तु तस्य सन्तोषकारकमुत्तरं दातुं नाहमलम् । वाचकवर्यविद्यमानसमये संस्कृतभाषायाः प्राधान्यं, दर्शनान्तरीयसाहित्यस्य एतद्भाषाद्वारा गुम्फनावलोकनं, तेषां संस्कृतभाषाभाषिक्षेत्रेषु विहारः, तेषां ब्राह्मणजातिरित्यादिसम्भावनारूपप्रेरकबलेन तैस्तत्त्वार्थसूत्रस्य स्वोपज्ञभाष्यपूर्वकस्य प्रणयनं कृतं संस्कृतभाषायामिति सम्भाव्यते ।[3]

---

१ छाया भाष्य उपरिवत् ।

२ अन्तिमाश्चतुर्दशपूर्वधराः श्रीस्थूलभद्राः, अन्तिमा दशपूर्वधराः श्रीवज्रस्वामिनः, सार्धनवपूर्वधराः श्री-आर्यरक्षितसूरयोऽन्त्यार्धकपूर्वविदः श्रीदेवर्द्धिगणिक्षमाश्रमणाः । श्रीवीरनिर्वाणात् वर्षसहस्रे व्यतीते पूर्वविच्छेद इति भगवत्यां ( श. २, उ. ८, सू. ६७८ ) निर्देशः । स चायम्—

"जंबुद्दीवे णं भंते ! दीवे भारहे वासे इमीसे ओसप्पिणीए देवाणुप्पियाणं केवतियं कालं पुव्वगए अणुसज्जि-स्सति ? । गोयमा ! णं दीवे भारहे वासे इमीसे उ(ओ?)सप्पिणीए ममं एगं वाससहस्सं पुव्वगए अणुसज्जिस्सति ।"

[ जम्बूद्वीपे भदन्त ! द्वीपे भारते वर्षेऽस्यामवसर्पिण्यां देवानुप्रियाणां कियन्तं कालं पूर्वगतमनुसंस्यति ? । गौतम ! द्वीपे भारते वर्षेऽस्यामवसर्पिण्यां ममैकं वर्षसहस्रं पूर्वगतमनुसंस्यति । ]

किञ्च तित्थोगालिकेऽप्युल्लेखो वरीवर्ति:—

"वोलीणंमि सहस्से, वरिसाणं वीरमोक्खगमणाउ ।
उत्तरवायगवसभे, पुव्वगयस्स भवे छेदो ॥
वरिससहस्से पुण्णे, तित्थोगालिएँ वद्धमाणस्स ।
नासि ही पुव्वगतं, अणुपरिवाडिएँ जं जस्स ॥"

[ व्यतीते सहस्रे वर्षाणां वीरमोक्षगमनात् ।
उत्तरवाचकवृषभे पूर्वगतस्य भवेत् छेदः ॥
वर्षसहस्रे पूर्णे तीर्थोद्गालिते वर्धमानस्य ।
नाशि ही पूर्वगतमनुपरिपाटितो यद् यस्य ॥ ]

३ प्राकृतभाषायां ये साम्प्रदायिका विचारा सुबद्धा आसंस्ते गीर्वाणगिरायां सुप्रसन्नसङ्क्षिप्तसरलशुद्धशैल्या वाचकवर्यैः सफलं गुम्फिताः । अनेनानुमीयते यदुत वाचकवर्यसमयात् प्राक्कालीना जैनमुनिपुङ्गवाः संस्कृतभाषायां ग्रन्थनिर्माणे न केवलं समर्था आसन्, किन्त्वेतस्यां दिशि सफलः प्रयासोऽपि तैः कृतः स्यात् ।

**श्रीदेवगुप्तसूरिविचारः—**

यद्यपि द्वितीये विभागेऽस्मिन् न कोऽपि सम्बन्धः साक्षात् समस्ति श्रीदेवगुप्तसूरिप्रस्तावस्य तथापि प्रथमविभागगतसम्बन्धकारिकाप्रणेतृत्वपरिचयप्रकाशनपटु किमपि वक्तव्यं नासङ्गतिमङ्गति। संशोधनार्थं मया समासादितासु सर्वासु तत्त्वार्थाधिगमसूत्रप्रतिषु श्रीदेवगुप्तीया टीका श्रीसिद्धसेनीयायाः पूर्वमुल्लेखिता दरीदृश्यते। तत्र केनापि कारणेन भवितव्यमिति तर्के सति प्रतिभाति विकल्पोऽयं यदुत श्रीदेवगुप्तसूरयः श्रीसिद्धसेनसूरिभ्यः पूर्वगामिनो ज्यायांसो वा भवेयुः। अथवैतैः प्रणीतायाष्टीकायाः सम्बन्धकारिकाटीकाया एवोपलब्धिः पूर्वोल्लेखने कारणं भवेत्।

**गन्धहस्तिपदपरामर्शः—**

गन्धहस्तिपदमुपलभ्यते श्वेताम्बरीये दिगम्बरीये च साहित्ये। तावत् प्रथमं श्वेताम्बराणां साहित्यं लक्ष्यीकृत्य किञ्चिदुच्यते। शक्रस्तवेत्यपरनामधेये 'नमोत्थुणं' नाम्नि प्राचीने स्तोत्रे 'पुरिसवरगन्धहत्थीणं' इति परमकारुणिकचतुस्त्रिंशदतिशयधारिधर्मदेवश्रीतीर्थङ्करस्य विशेषणं विद्यते, परन्तु न चास्यात्र किमपि विशिष्टं प्रयोजनं वर्तते। वृद्धवादिश्रीदेवसूरिशिष्यरत्नश्रीसिद्धसेनदिवाकराणां गन्धहस्तिरूपेणोल्लेखोऽकारि न्यायाचार्यन्यायविशारदमहामहोपाध्यायश्रीयशोविजयगणिभिः स्वनिर्मिते वीरस्तुतिरूपे न्यायखण्डखाद्ये (श्लो. १६, पृ. १६) निम्नलिखितपङ्क्तिप्रणयनेन—

"अनेनैवाभिप्रायेणाह गन्धहस्ती सम्मतौ[1]"

किन्तु भ्रान्तिमूलकोऽयमुल्लेख इत्यवगम्यते, यतः श्रीयशोविजयान् विहाय न केनापि ग्रन्थकारेण श्रीसिद्धसेनदिवाकराणां विषये तेषां सुनिश्चितां काञ्चन कृतिं तद्गतावतरणसमुद्धरणप्रसङ्गं वाऽऽश्रित्य 'गन्धहस्ती'ति विशेषणं प्रायुज्जि। अपरञ्च श्रीसिद्धसेनदिवाकराणां जीवनवृत्तान्तस्य ये प्राचीना अर्वाचीनाश्च प्रबन्धाः[2] सम्प्राप्यन्ते तत्रापि तेषां पदवीरूपेण उपनामरूपेण वा गन्धहस्तिपदं न दृष्टिपथमवतरति। तेषां दिवाकरेत्युपाधिस्तु दरीदृश्यतेऽन्यान्यस्थलेषु, यथाहि—श्रीहरिभद्रसूरिवरकृते पञ्चवस्तुनामके ग्रन्थे (गा. १०४८)[3] सन्मतितर्कस्य श्रीअभयदेवसूरिकृतायां व्याख्यायां च प्रथमे पृष्ठे[4]।

किञ्च गन्धहस्तिनामधेयाः केऽपि सूरय आसन्नित्यनुमीयते जम्बूद्वीपप्रज्ञप्तेः श्रीशान्तिचन्द्रवाचकविहितप्रमेयरत्नमञ्जूषाऽभिधवृत्तिगतेन निम्नलिखितेन पद्येन—

---

१ एतत्सम्पादकमतेन 'सन्मति' नाम वास्तविकम्।

२ श्रीभद्रेश्वरविरचितकथावलीगतः श्रीसिद्धसेनप्रबन्धः, प्रभावकचरित्रगतो वृद्धवादिप्रबन्धान्तर्गतः श्रीसिद्धसेनप्रबन्धः, प्रबन्धचिन्तामणिगतः श्रीसिद्धसेनप्रबन्धश्च।

३ "आयरियसिद्धसेणेण सम्मईए पइट्ठिअजसेणं। दूसमणि'दिवागर'कप्पत्तणओ तदक्खेणं॥"

४ "सिद्धसेनदिवाकरः तदुपायभूतसम्मत्याख्यप्रकरणे०।"

"सक्कया पायया चेव भणिईओ होंति दोण्णि वा ।
सरमण्डलम्मि गिज्जंते पसत्था इसिभासिया ॥"

—अनुयोगद्वारे सू० १२७, १३१तमे पत्रे

एवं परिस्थित्यां सत्यां गीर्वाणगिरायां सिद्धान्तग्रन्थग्रथनादिकार्यं नाम, यद् अनल्पानि वर्षाणि प्रवर्तितान्यपायानि । अतः केन प्रथममेव सूत्राणि प्रथितानि कोऽनाकारः ? । किञ्च श्रीमहावीरस्वामिगणधरैः श्रीइन्द्रभूतिप्रमुखैर्गणधरैः गुम्फितानि चतुर्दश पूर्वाणि विद्यमानान्यपि हुण्डावसर्पिण्या अस्मिन्नरे गीर्वाणभाषायाः कः प्रथमो ग्रन्थ इति जिज्ञासाकृत्यं सर्वथाऽस्मान्नामभावः, परन्तु वर्तमानकाले समुपलभ्यमानसाहित्याभिन्नं तत्त्वार्थाधिगमसूत्रमिदं प्राथमिकं स्थानमलङ्करोतीति कथने न मनागपि सन्देहो वर्तते, संस्कृतपूर्वाणामुच्छिन्नत्वात् ।

बालस्त्रीमन्दमूर्खाणामप्युपकारिणी प्राकृतभाषा परिहाय कस्माद् वाचकवर्यैरपि तत्त्वार्थसूत्र-प्रशमरतिप्रमुखग्रन्थग्रथनसमये संस्कृतभाषैव स्वीकृतेति प्रश्नः समुपज्ञायेत, किन्तु तस्य सन्तोषकारकमुत्तरं दातुं नाहमलम् । वाचकमुख्यसमये संस्कृतभाषायाः प्राधान्यं, दर्शनान्तरीयसाहित्यस्य एतद्भाषाद्वारा गुम्फनाऽस्मावलोकनं, तेषां संस्कृतभाषाभाषिदेशेषु विहारः, तेषां ब्राह्मणजातिरित्यादिसम्भावनारूपकारणकलापेन तैस्तत्त्वार्थसूत्रस्य स्वोपज्ञभाष्यपूर्वकस्य प्रणयनं कृतं संस्कृतभाषायामिति सम्भाव्यते ।[3]

---

१ छाया प्राग् उपरिवत् ।

२ अन्तिमाश्चतुर्दशपूर्वधराः श्रीस्थूलभद्राः, अन्तिमा दशपूर्वधराः श्रीवज्रस्वामिनः, सार्धनवपूर्वधराः श्री-आर्यरक्षितसूरयोऽन्त्यार्धकपूर्वविदः श्रीदेवर्द्धिगणिक्षमाश्रमणाः । श्रीवीरनिर्वाणात् वर्षसहस्रे व्यतीते पूर्वविच्छेद इति भगवत्यां ( श. २, उ. ८, सू. ६७८ ) निर्देशः । स चायम्—

"जंबुद्दीवे णं भंते ! दीवे भारहे वासे इमीसे ओसप्पिणीए देवाणुप्पियाणं केवतियं कालं पुव्वगए अणुसज्जि-स्सति ? । गोयमा ! णं दीवे भारहे वासे इमीसे च(ओ!)सप्पिणीए ममं एगं वाससहस्सं पुव्वगए अणुसज्जिस्सति ।"

[ जम्बूद्वीपे भदन्त ! द्वीपे भारते वर्षेऽस्यामवसर्पिण्यां देवानुप्रियाणां कियन्तं कालं पूर्वगतमनुसंक्ष्यति ? । गौतम ! द्वीपे भारते वर्षेऽस्यामवसर्पिण्यां ममैकं वर्षसहस्रं पूर्वगतमनुसंक्ष्यति । ]

किञ्च निम्नावतारितोऽप्युल्लेखो वरीवर्ति:—

"वोलीणंमि सहस्से, वरिसाणं वीरमोक्खगमणाउ ।
उत्तरवायगवसभे, पुव्वगयस्स भवे छेदो ॥
वरिससहस्से पुण्णे, तित्थोग्गालिएँ वद्धमाणस्स ।
नासि ही पुव्वगतं, अणुपरिवाडिएँ जं जस्स ॥"

[ व्यतीते सहस्रे वर्षाणां वीरमोक्षगमतात् ।
उत्तरवाचकवृषभे पूर्वगतस्य भवेत् छेदः ॥
वर्षसहस्रे पूर्णे तीर्थोद्गालिते वर्धमानस्य ।
नाशि ही पूर्वगतमनुपरिपाटितो यद् यस्य ॥ ]

३ प्राकृतभाषायां ये साम्प्रदायिका विचारा सुवद्धा आसंस्ते गीर्वाणगिरायां सुप्रसन्नसङ्क्षिप्तसरलशुद्धशैल्या वाचकवर्यैः सफलं गुम्फिताः । अनेनानुमीयते यदुत वाचकवर्यसमयात् प्राक्कालीना जैनमुनिपुङ्गवाः संस्कृतभाषायां ग्रन्थनिर्माणे न केवलं समर्था आसन्, किन्त्वेतस्यां दिशि सफलः प्रयासोऽपि तैः कृतः स्यात् ।

**श्रीदेवगुप्तसूरिविचारः—**

यद्यपि द्वितीये विभागेऽस्मिन् न कोऽपि सम्बन्धः साक्षात् समस्ति श्रीदेवगुप्तसूरिप्रस्तावस्य तथापि प्रथमविभागगतसम्बन्धकारिकाप्रणेतृत्वपरिचयप्रकाशनपट्ठ किमपि वक्तव्यं नासङ्गतिमङ्गति। संशोधनार्थं मया समासादितासु सर्वासु तत्त्वार्थाधिगमसूत्रप्रतिषु श्रीदेवगुप्तीया टीका श्रीसिद्धसेनीयायाः पूर्वमुल्लेखिता दरीदृश्यते । तत्र केनापि कारणेन भवितव्यमिति तर्के सति प्रतिभाति विकल्पोऽयं यदुत श्रीदेवगुप्तसूरयः श्रीसिद्धसेनसूरिभ्यः पूर्वगामिनो ज्यायांसो वा भवेयुः । अथवैतैः प्रणीतायाष्टीकायाः सम्बन्धकारिकाटीकाया एवोपलब्धिः पूर्वोल्लेखने कारणं भवेत् ।

**गन्धहस्तिपदपरामर्शः—**

गन्धहस्तिपदमुपलभ्यते श्वेताम्बरीये दिगम्बरीये च साहित्ये । तावत् प्रथमं श्वेताम्बराणां साहित्यं लक्ष्यीकृत्य किञ्चिदुच्यते । शक्रस्तवेत्यपरनामधेये 'नमोत्थुणं'नाम्नि प्राचीने स्तोत्रे 'पुरिसवरगन्धहत्थीणं' इति परमकारुणिकचतुस्त्रिंशदतिशयधारिधर्मदेवश्रीतीर्थङ्करस्य विशेषणं विद्यते, परन्तु न चास्यात्र किमपि विशिष्टं प्रयोजनं वर्तते । वृद्धवादिश्रीदेवसूरिशिष्यरत्नश्रीसिद्धसेनदिवाकराणां गन्धहस्तिरूपेणोल्लेखोऽकारि न्यायाचार्यन्यायविशारदमहामहोपाध्यायश्रीयशोविजयगणिभिः स्वनिर्मिते वीरस्तुतिरूपे न्यायखण्डखाद्ये (श्लो. १६, पृ. १६) निम्नलिखितपङ्क्तिप्रणयनेन—

"अनेनैवाभिप्रायेणाह गन्धहस्ती सम्मतौ"

किन्तु भ्रान्तिमूलकोऽयमुल्लेख इत्यवगम्यते, यतः श्रीयशोविजयान् विहाय न केनापि ग्रन्थकारेण श्रीसिद्धसेनदिवाकराणां विषये तेषां सुनिश्चितां काञ्चन कृतिं तद्गतावतरणसमुद्धरणप्रसङ्गं वाऽऽश्रित्य 'गन्धहस्ती'ति विशेषणं प्रायुञ्जि । अपरञ्च श्रीसिद्धसेनदिवाकराणां जीवनवृत्तान्तस्य ये प्राचीना अर्वाचीनाश्च प्रबन्धाः सम्प्राप्यन्ते तत्रापि तेषां पदवीरूपेण उपनामरूपेण वा गन्धहस्तिपदं न दृष्टिपथमवतरति । तेषां दिवाकरेत्युपाधिस्तु दरीदृश्यतेऽन्यान्यस्थलेषु, यथाहि—श्रीहरिभद्रसूरिवरकृते पञ्चवस्तुनामके ग्रन्थे (गा. १०४८) सन्मतितर्कस्य श्रीअभयदेवसूरिकृतायां व्याख्यायां च प्रथमे पृष्ठे ।

किञ्च गन्धहस्तिनामधेयाः केऽपि सूरय आसन्नित्यनुमीयते जम्बूद्वीपप्रज्ञप्तेः श्रीशान्तिचन्द्रवाचकविहितप्रमेयरत्नमञ्जूषाऽभिधवृत्तिगतेन निम्नलिखितेन पद्येन—

---

१ एतत्सम्पादकमतेन 'सन्मति' नाम वास्तविकम् ।

२ श्रीभद्रेश्वरविरचितकथावलीगतः श्रीसिद्धसेनप्रबन्धः, प्रभावकचरित्रगतो वृद्धवादिप्रबन्धान्तर्गतः श्रीसिद्धसेनप्रबन्धः, प्रबन्धचिन्तामणिगतः श्रीसिद्धसेनप्रबन्धश्च ।

३ "आयरियसिद्धसेणेण सम्मईए पइट्ठिअजसेणं । दूसमणि'दिवागर'कप्पत्तणओ तदक्खेणं ॥"

४ "सिद्धसेनदिवाकरः तदुपायभूतसम्मत्याख्यप्रकरणे० ।"

"सक्कया पागया चेव भणिईओ होंति दोण्णि वा ।
सरमंडलम्मि गिज्जंते पसत्था इसिभासिया ॥"

—अनुयोगद्वारे सू० १२७, १३१तमे पत्रे

एवं परिस्थितौ सत्यां गीर्वाणगिरायां सिद्धान्तग्रथनमनादृतमासीत्, यत् अत्रत्यानि तीर्थानि प्रवर्तितान्यपाकृतानि । अतः केन प्रथमतया ग्रन्थनिर्मितिः प्रारब्धा कोऽयं कालः ? । किञ्च श्रीमहावीरस्वामिगणानां श्रीइन्द्रभूतिप्रमुखगणधरैः रचितानि चतुर्दश पूर्वाणि विद्यमाना-न्युत्सर्पिण्या अस्मिन्नरे गीर्वाणभाषामयः कः प्रथमो ग्रन्थ इति निर्णायकयथेष्टसाधना-नामभावः, परन्तु वर्तमानकाले समुपलभ्यमानसाहित्यसाक्षिण्य तत्त्वार्थाधिगमसूत्रमिदं आद्यं प्राथमिकं स्थानमलङ्करोतीति कथने न मनागपि सन्देहो वर्तते, गीर्वाणपूर्वाणामुच्छेदात् ।

बालस्त्रीमन्दमूर्खाणामप्युपकारिणी प्राकृतभाषां परिहाय कस्मात् गीर्वाणगिरायामपि तत्त्वार्थसूत्र-प्रशमरतिप्रभृतिग्रन्थग्रथनस्यानन्तर्यकानामाचार्याणामपि प्रश्नः समुप-जायेत, किन्तु तस्य सन्तोषकारकमुत्तरं दातुं नाहमलम् । वाचकवर्याणां समये संस्कृत-भाषायाः प्राधान्यं, दर्शनान्तरीयसाहित्यस्य एतद्भाषाद्वारा सुप्रचारसमवलोकनं, तेषां संस्कृतभाषाभाषिक्षेत्रेषु विहारः, तेषां ब्राह्मणजातिरित्यादिसम्भावनारूपकारणकलापेन तैस्तत्त्वार्थ-सूत्रस्य स्वोपज्ञभाष्यपूर्वकस्य प्रणयनं कृतं संस्कृतभाषायामिति सम्भाव्यते ।[3]

---

१ छाया प्राय उपरिवत् ।

२ अन्तिमाश्चतुर्दशपूर्वधराः श्रीस्थूलभद्राः, अन्तिमा दशपूर्वधराः श्रीवज्रस्वामिनः, सार्धनवपूर्वधराः श्री-आर्यरक्षितसूरयोऽन्त्यार्धकपूर्वविदः श्रीदेवर्द्धिगणिक्षमाश्रमणाः । श्रीवीरनिर्वाणात् वर्षसहस्रे व्यतीते पूर्वविच्छेद इति भगवत्यां ( श. २, उ. ८, सू. ६७८ ) निर्देशः । स चायम्—

"जंबुद्दीवे णं भंते ! दीवे भारहे वासे इमीसे ओसप्पिणीए देवाणुप्पियाणं केवतियं कालं पुव्वगए अणुसज्जि-स्सति ? । गोयमा ! णं दीवे भारहे वासे इमीसे उ(ओ?)सप्पिणीए ममं एगं वाससहस्सं पुव्वगए अणुसज्जिस्सति ।"

[ जम्बूद्वीपे भदन्त ! द्वीपे भारते वर्षेऽस्यामवसर्पिण्यां देवानुप्रियाणां कियन्तं कालं पूर्वगतमनुसंक्ष्यति ? । गौतम ! द्वीपे भारते वर्षेऽस्यामवसर्पिण्यां ममैकं वर्षसहस्रं पूर्वगतमनुसंक्ष्यति । ]

किञ्च तित्थोगालियपइन्नयेऽप्युल्लेखो वरीवर्ति:—

"वोलीणंमि सहस्से, वरिसाणं वीरमोक्खगमणाउ ।
उत्तरवायगवसभे, पुव्वगयस्स भवे छेदो ॥
वरिससहस्से पुण्णे, तित्थोगालिएँ वद्धमाणस्स ।
नासि ही पुव्वगतं, अणुपरिवाडिएँ जं जस्स ॥"

[ व्यतीते सहस्रे वर्षाणां वीरमोक्षगमनतात् ।
उत्तरवाचकवृषभे पूर्वगतस्य भवेत् छेदः ॥
वर्षसहस्रे पूर्णे तीर्थोद्गालिते वर्धमानस्य ।
नाशि ही पूर्वगतमनुपरिपाटितो यद् यस्य ॥ ]

३ प्राकृतभाषायां ये साम्प्रदायिका विचारा सुबद्धा आसंस्ते गीर्वाणगिरायां सुप्रसन्नसङ्क्षिप्तसरलशुद्धशैल्या वाचकवर्यैः सफलं गुम्फिताः । अनेनानुमीयते यदुत वाचकवर्यसमयात् प्राक्कालीना जैनमुनिपुङ्गवाः संस्कृतभाषायां ग्रन्थनिर्माणे न केवलं समर्था आसन्, किन्त्वेतस्यां दिशि सफलः प्रयासोऽपि तैः कृतः स्यात् ।

( ३ ) "तत्र याऽपायसद्द्रव्यवर्तिनी श्रेणिकादीनां सद्द्रव्यापगमे च भवति अपायसहचारिणी सा सादिपर्यवसाना,"
—तत्त्वार्थ(अ. १, सू.७)वृत्तौ (पृ.५९)

( ३ ) "यदुक्तं गन्धहस्तिना तत्र–याऽपायसद्द्रव्यवर्तिनी अपायो–मतिज्ञानांशः सद्द्रव्याणि–शुद्धसम्यक्त्वदलिकानि तद्वर्तिनी श्रेणिकादीनां च सद्द्रव्यापगमे भवत्यपायसहचारिणी सा सादिसपर्यवसाना इति"
—नवपदवृत्तौ ८८तमे पत्रे विशेषशतके च

(४) "प्राणापानावुच्छ्वासनिःश्वासक्रियालक्षणौ"
—तत्त्वार्थ(अ. ८, सू.१२)वृत्तौ (पृ.१६१)

( ४ ) "यदाह गन्धहस्ती–प्राणापानौ उच्छ्वासनिःश्वासौ इति।"
—धर्मसङ्ग्रहणीवृत्तौ ४२तमे पत्रे

( ५ ) "हरयो विदेहाश्च पञ्चालतुल्याः"
—तत्त्वार्थ(अ.३, सू.१०)वृत्तौ (पृ. २५३)

(५) "यदाह तत्त्वार्थमूलटीकाकृत् गन्धहस्ती–
'हरयो विदेहाश्च पञ्चालादितुल्याः' इति"
—बृहत्क्षेत्रसमासविवृतौ १९तमे पत्रे।

( ६ ) "सम्यक्त्वं च मोहशुद्धदलिकानुभवः, प्रायेण तत्प्रवृत्ता क्रिया सम्यक्त्वक्रिया प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणजीवादिपदार्थविषयाश्रद्धा, जिनसिद्धगुरूपाध्याययतिजनयोग्यपुष्पधूपप्रदीपचामरातपत्रनमस्करणवस्त्राभरणान्नपानशय्यादानाद्यनेकवैयावृत्त्याभिव्यङ्ग्या च सम्यक्त्वसद्भावसंवर्धनपद्वी सद्वेद्यबन्धहेतुर्देवादिजन्मप्रतिलम्भकारणम्"
—तत्त्वार्थ(अ. ६, सू.६)वृत्तौ (पृ. ११)

( ६ ) "एतासु च प्रेमद्वेषप्रत्ययक्रियाद्वयस्थाने सम्यक्त्वमिथ्यात्वक्रिये गन्धहस्तिनोक्ते, तयोश्च शुद्धमिथ्यात्वमोहदलिकानुभवप्रवृत्तप्रशमादिलिङ्गगम्यजीवादिपदार्थविषयश्रद्धारूपा, जिनसिद्धाचार्योपाध्यायसाधुयोग्यपुष्पधूपप्रदीपचामरातपत्रनमस्करणवस्त्रान्नपानशय्यादानाद्यनेकवैयावृत्त्याभिव्यङ्ग्या, शुद्धसम्यक्त्वादिभाववृद्धिहेतुर्देवादिजन्मसद्वेद्यबन्धकारणं सम्यक्त्वक्रिया।"
—नवतत्त्वप्रकरणभाष्ये ३१तमे पत्रे

( ७ ) "समन्तानुपातक्रिया स्त्रीपुरुषनपुंसकपशुसम्पातदेशे उपनीयवस्तुत्यागः। प्रमत्तसंयतानां वा भक्तपानादिकेऽनाच्छादितेऽवश्यत्याज्ये समन्तादनुपातो भवति सम्पात्यसत्त्वानाम्।"
—तत्त्वार्थ(अ. ६, सू. ६)वृत्तौ (पृ. १२)

( ७ ) "पूर्वव्याख्यानं तु गन्धहस्त्यभिप्रायेण कृतम्"
—नवतत्त्वप्रकरणभाष्ये ३३तमे पत्रे

तच्चैवम्—"समन्तात् सर्वत उपनिपतनमुपनिपात–आगमनं स्त्र्यादीनां सम्पात्यसत्त्वानां वा यत्र देशे भोजनादौ वा स समन्तोपनिपातः।"
—नवतत्त्वप्रकरणभाष्ये ३०तमे पत्रे

१ श्रीमलयगिरिसूरिकृतेयम्। २ श्रीमलयगिरिसूरिकृतेयं वृत्तिः। ३ श्रीअभयदेवसूरिविरचितमिदम्।

"सर्वानुयोगविज्ञान् [illegible] ।
[illegible] गन्धहस्तिमुख्यान् ॥ २ ॥"

अपरञ्च द्वादशशताब्दीयैः नवाङ्गीटीकाकारैः श्रीअभयदेवसूरिभिः [illegible] द्वितीय [illegible] न्तानां सूत्राणामवतरणपूर्वकं ५९५तमे पृष्ठे [illegible] हेतुवादपदव्याख्यावसरे [illegible] ६१२तमे पृष्ठे [illegible] निर्दिष्टाभ्यां गन्धहस्तीति सुगमनामधेयाः केऽपि मुनिरत्न [illegible]। किञ्च कोट्याचार्यापराभिधानैः श्रीशीलाङ्कसूरिभिः स्वकीयायामाचाराङ्गटीकायां निम्नलिखितौ—

" 'शस्त्रपरिज्ञा'विवरणमतिबहुगहनं च गन्धहस्तिकृतम्" (पृ. १)

" 'शस्त्रपरिज्ञा'विवरणमतिगहनमितीव किल वृत्तं पूज्यैः ।
श्रीगन्धहस्तिमिश्रैर्विवृणोमि ततोऽहमवशिष्टम् ॥" (पृ. ८२)

—उल्लेखौ कृतौ । अनेनापि स्पष्टीभवति पूर्वोक्तं मन्तव्यम् ।

अपरञ्च गन्धहस्तिनामनिर्देशपूर्वकाणि यान्यवतरणानि समुपलभ्यन्ते तानि समग्राणि स्वल्पेन परिवर्तनेन युक्तानि भावसाम्यपुरस्सराणि वाऽधिगम्यन्ते तत्त्वार्थभाष्यस्य श्रीसिंहसूरीणां प्रशिष्यैः श्रीभास्वामिनां शिष्यैः श्रीसिद्धसेनगणिभिर्विरचितायामस्मिन् ग्रन्थे प्रसिद्धिं च नीतायां 'टीकायाम् । तद्यथा—

(१) "निद्रादयो यतः समाधिगताया एव दर्शनलब्धेः उपयोगघाते प्रवर्तन्ते, चक्षुर्दर्शनावरणादिचतुष्टयं तूद्गमोच्छेदित्वान्मूलघातं निहन्ति दर्शनलब्धिमित्यतो० ।"

—तत्त्वार्थ( अ. ८, सू. ८)वृत्तौ
(पृ. १३५)

(२) "या तु भवस्थकेवलिनो द्विविधस्य सयोगाऽयोगभेदस्य सिद्धस्य वा दर्शनमोहनीयसप्तकक्षयादपायसद्द्रव्यक्षयाच्चोदपादि सा सादिरपर्यवसानेति ।"

—तत्त्वार्थ(अ. १, सू. ७)वृत्तौ (पृ. ६०)

(१) "आह च गन्धहस्ती—'निद्रादयः समधिगताया एव दर्शनलब्धेरुपघाते वर्तन्ते, दर्शनावरणचतुष्टयं तूद्गमोच्छेदित्वात् समूलघातं हन्ति दर्शनलब्धिमिति ।"

—प्रवचनसारोद्धारटीकायां
३५८तमे पत्रे

(२) "यदाह गन्धहस्ती—भवस्थकेवलिनो द्विविधस्य सयोगायोगभेदस्य सिद्धस्य वा दर्शनमोहनीयसप्तकक्षयाविर्भूता सम्यग्दृष्टिः सादिरपर्यवसाना इति ।"

—नवपदवृत्तौ ८८तमे पत्रे 'विशेषशतके च

१ "अस्य च सूत्रसमूहस्य व्याख्या गन्धहस्तिप्रभृतिभिर्विहितेति न प्रदर्श्यते ।"

२ "तथा गन्धहस्तिप्रभृतिभिर्विक्रान्तमिति नेह प्रदर्श्यते विस्तरभयात् ।"

३ अत इम एव गणिवरा 'गन्धहस्ति'विरुदधारिण इति पण्डितसुखलालाः ।

४ अयमेव पाठो गन्धहस्तिनामपूर्वको वर्तते श्रीदेवेन्द्रसूरिकृतप्रथमकर्मग्रन्थ( गा. १२ )टीकायाम् ।

५ १२४८तमे वैक्रमीयाब्दे श्रीसिद्धसेनसूरिभी रचितेयम् । ६ श्रीजिनचन्द्रैः श्रीदेवगुप्ताचार्यैस्त्वुत्तरनामधेयैः १०७३तमे वैक्रमीऽब्दे प्रणीतेयम् । ७ उपाध्यायश्रीसमयसुन्दरकृतोऽयं ग्रन्थः ।

अपरञ्च गन्धहस्तिमहाभाष्यकर्तारः श्रीसमन्तभद्राचार्या दिगम्बरीया एवेति सुनिश्चयो न सञ्जायेत निम्नलिखितपद्वीक्षणेनोत्पद्यमानशङ्काया निरसनं विना ।

"अथो गुरुश्चन्द्रकुलेन्दुदेव-कुलादिवासोदितनिर्ममत्वः ।
समन्तभद्रः १७ श्रुतदिष्टशुद्ध-तपस्क्रियः पूर्वगतश्रुतोऽभूत् ॥
वृद्धस्ततोऽभूत् किल देवसूरिः १८, शरच्छते विक्रमतः सपादेः ।"

सहस्रावधानिश्रीमुनिसुन्दरसूरिकृताया गुर्वावल्या अवतरणमिदम् । अनेन श्रीसमन्तभद्रसमयो यो ध्वन्यते स एव दिगम्बरसम्प्रदाये श्रीसमन्तभद्रसमयरूपेण सुप्रतिष्ठितः । अतः समुपतिष्ठति शङ्का यदुत किमिमे श्वेताम्बरीया दिगम्बरीया वा । एवं परिस्थित्यां सत्यां दिगम्बरीयश्रीसमन्तभद्राचार्यैर्गन्धहस्तिनाम्नी टीका प्रणीतेति निर्णयात्मकं कथनं दुःशकं प्रतिभाति ।

वाचकविचारः—

वाचकशब्दस्यार्थत्रितयं समस्ति—(१) पूर्ववित्त्वं, (२) उपाध्यायत्वं, (३) वाचकवंशीयत्वं च । श्रीउमास्वातीनुद्दिश्य उपाध्यायत्वं न सङ्गच्छते, आचार्यरूपेण तेषां सुप्रसिद्धत्वात् । एते वाचकवंशे सञ्जाता अतस्तेषां वाचकत्वं श्रीधनगिरि-सिंहगिरिवत्, न तु विग्रयेत्यपि पक्षो नादरणीयः तत्समये पूर्वानुच्छेदात्, अनधिकारिषु पद्वीप्रदानासम्भवात्, स्वस्य वाचकरूपेण स्वयं ग्रन्थकारकृतनिर्देशाद्, घोपनन्दिक्षमणानामेकादशाङ्गवित्त्वरूपेणैव न तु वाचकपदद्वारोल्लेखात्, उच्चैर्नागरस्य वाचकवंशस्य शाखारूपेण कथनस्यानुपलब्धेश्च । पण्डितसुखलालैर्वाचकवंशीयत्वेनैव तेषां वाचकत्वमिति कल्पना कृताऽस्ति, किन्तु साऽसमीचीना भाष्यगतप्रशस्तेः समुचितानवधारणात् तदुत्पत्तेः, अतः प्राथमिक एव अर्थोऽत्र स्वीकर्तव्यः । किञ्च न कस्यापि श्वेताम्बरमुनिवरस्यास्य विषये विसंवादो दृश्यते ।[7]

भाष्यं तत्कर्तृत्वं च—

---

१ "समन्तभद्रः शान्तारिर्धर्माचार्यो दयानिधिः" इति जिनसहस्रनामगतपर्यायार्थसूचितः समन्तभद्रो नात्र विवक्षितः, तस्य 'जिन'शब्दस्य पर्यायत्वात् । महर्षिबुद्धस्यापि पर्यायोऽयम्, परन्तु सोऽप्यत्रानपेक्षणीयः ।

२ इमे श्वेताम्बराचार्याः ।

३ इयं तु अद्ययावत् नैवोपलब्धा ।

४ एतदुल्लेखः समस्ति निम्नलिखितगाथायाम्

"वायगवरवंसाओ तेवीसइमेण धीरपुरिसेणं । दुद्धरधरेण मुणिणा पुव्वसुयसमिद्धबुद्धीणं ॥"

५ प्रेक्ष्यतां सभाष्यसटीकस्य तत्त्वार्थाधिगमसूत्रस्य प्रथमो विभागः (पृ. १, ३, १०) ।

६ विलोक्यतामाङ्ग्लभाषानिबद्ध उपोद्घातः (पृ. ५) ।

७ सूत्रभाष्यगतविशिष्टताऽपि व्यनक्ति तेषां पूर्ववित्त्वम् ।

(८) "अत एव च भेदः प्रदेशानामवयवानां च, ये न जातुचिद् वस्तुव्यतिरेकेणोपलभ्यन्ते ते प्रदेशाः, ये तु विशकलिताः परिकलितमूर्तयः प्रज्ञापथमवतरन्ति तेऽवयवाः इत्यत० ।"

—तत्त्वार्थ(अ. ५, सू.६)वृत्तौ (पृ. ३२८)

(८) "[illegible] [illegible] ।"

—स्याद्वादमञ्जर्यां ९३तमे पृष्ठे

अथ दिगम्बरसाहित्ये गन्धहस्तिसत्त्वे कीदृशं प्रमाणं वर्तत इति विचार्यते । अर्वाचीनदशैकादशशताब्दीयेषु दिगम्बरीयशिलालेखेषु एतस्य सुमहतो गन्धहस्ति[illegible], परन्तु न चायमुल्लेखोऽत्रोपयुक्तो विशेषतः । दिगम्बरपरम्परानुसारेण आप्तमीमांसादिग्रन्थविधातृभिः श्रीसमन्तभद्राचार्यैस्तत्त्वार्थसूत्रस्य मोक्षशास्त्रेतिनामकस्य या टीका निरमायि सा गन्धहस्तिरूपेण प्रसिद्धिं गता, परन्तु प्रमाणोपलब्धिं विना कथं स्वीक्रियतेऽभिप्रायोऽयम्?। अपरञ्च इयं टीका श्रीसमन्तभद्राचार्याणां कृतिरित्युल्लेखरूपेणापि सर्वार्थसिद्धौ तत्त्वार्थराजवार्तिके वा तस्या नामधेयं किमप्यवतरणं न दृष्टिपथमवतरति, अतः किं फलति?। यदि साऽभविष्यत् तर्हि सा नाशं गता, न केवलं श्रीअकलङ्कदेवसमयात् प्राक्, किन्तु श्रीदेवनन्दीतिमूलनामधेयानां षष्ठशताब्दीयपूज्यपादसमयादपि । परन्तु न सेयं सम्भावना विश्वासभाजनप्राया, यतः श्रीवीरसेनाचार्यैः ७३८तमे शकसंवत्सरे प्रणीतायां धवलाख्यटीकायां वर्तते निम्नलिखितमवतरणमिति न्यायालङ्कारपण्डितवंशीधराः—

"उक्तं च पुनर्गन्धहस्तिभाष्ये उपपदो जन्म प्रयोजनं येषां त इमे औपपादिकाः विजयवैजयन्तजयन्तापराजितसर्वार्थसिद्धाख्यानि पञ्चानुत्तराणि अनुत्तरे स्वौपपादिकाः ऋषिदासधन्य-सुनक्षत्र-कार्तिकेय-नन्द-शालिभद्रा-ऽभय-वारिषेण-चिलातपुत्रा इति ।" अनेन गन्धहस्तिभाष्यस्य विद्यमानता श्रीअकलङ्कदेवसत्तासमयरूपवैक्रमीयनवमशताब्दीपर्यन्तेत्यनुमीयते ।

किञ्च 'गन्धहस्ति'सञ्ज्ञात्मिका टीका तत्त्वार्थसूत्रं विहाय अन्यस्य कस्यचिद् दिगम्बरीयसैद्धान्तिकग्रन्थस्यापि न सम्भवतीति कथने निम्नलिखितादुल्लेखादन्यत् किमपि प्राचीनं प्रमाणं वर्तते इति न मे श्रुतिपथं दृष्टिगोचरतां वा गतम्—

"भगवद्भिरुमास्वातिपादैराचार्यवर्यैरासूत्रितस्य तत्त्वार्थाधिगमस्य मोक्षशास्त्रस्य गन्धहस्त्याख्यं महाभाष्यमुपनिबध्नन्तः स्याद्वादविद्याग्रगुरवः श्रीस्वामिसमन्तभद्राचार्याः ।"

१ श्रीहेमचन्द्रसूरिवरनिर्मिताया स्याद्वादकारिकेत्यपराह्वया अन्ययोगव्यवच्छेदिकाद्वात्रिंशिकाया वृत्तिरियं श्रीमल्लिषेणसूरिप्रणीता । २ प्रेक्ष्यतां दिगम्बरसाहित्यगवेषकश्रीयुतजुगलकिशोररचितः स्वामिसमन्तभद्रनामको निबन्धः ( पृ. १४१-१४३ ) ।

तत्त्वार्थसूत्रे स्वोपज्ञे भाष्ये च कतिपया उल्लेखाः सन्ति ये श्वेताम्बरीयागमादिषु ग्रन्थेषु दिगम्बरीयप्रधानभूतेषु वा न दृष्टिपथमवतरन्ति। ते चेमे—

(१) तत्त्वार्थसूत्रे (१-४) तत्त्वसप्तकस्य निर्देशः। जैनसम्प्रदायद्वये तु पुण्यपापपूर्वकं सप्तकमिदमर्थात् नवतत्त्वनिरूपणम्[1]। एवं सति विरोधप्रसङ्ग इति चेन्न, 'शुभः पुण्यस्य' 'अशुभः पापस्य' इति सूत्रद्वयेन पुण्यपापयोस्तत्त्वरूपेण सूत्रकारैः स्वीकृतिः। किञ्च पुण्यपापयोः फलस्वातन्त्र्यमपि प्रदर्शितं 'सम्यक्त्वहास्यरतिपुंवेदशुभायुर्नामगोत्राणि पुण्यम्' इति सूत्रग्रथनेन।

ननु प्रज्ञापना-स्थानाङ्ग-ऽनुयोगद्वारेषु जीवाजीवेति तत्त्वद्वयं निर्दिष्टम्[2]। किमनेनास्रवादेरपलापो वक्तुं न शक्यते? नैव, किन्तु सत्यमेतद् यदुत पुण्यपापयोः स्वतन्त्रतत्त्वरूपेणाङ्गीकृतिर्न कृता वाचकमुख्यैः, एकनिष्ठदृष्ट्या प्ररूपितं तत्त्वसप्तकम्[3]।

(२) अस्मिन् ग्रन्थे (१-३४) नयानां प्रथमं पञ्चविधता प्रदर्शिता। तदनन्तरं (१-३५) पञ्चमस्य त्रैविध्यं प्रतिपादितम्। तत्र साम्प्रतमित्येकस्य नयस्य सञ्ज्ञा[4] समस्ति साऽन्यत्र कुत्रापि न दृश्यते। एवं नयनिरूपणे वैशिष्ट्यं वर्तते। नैगमस्य सङ्ग्रहव्यवहारयोरन्तर्भावं कृत्वा श्रीसिद्धसेनदिवाकरैर्नयस्य सङ्ख्या षड् निर्धारिता। किञ्च विशेषावश्यकभाष्ये (गा. २२६४) नयपञ्चकप्रपञ्चो विद्यते स औमास्वातिकपरम्पराप्रतिबिम्बरूप इत्यनुमीयते। अनुयोगद्वारे वसतिप्रदेशविषयकनयवर्णनावसरे शब्दसमभिरूढैवम्भूतानां गणनैकरूपेण कृता।

---

१ एतदुल्लेखसमर्थनाय कतिपयान्यवतरणादीनि दीयन्ते, यथाहि—

(अ) "अभिगयजीवाजीवा उवलद्धपुण्णपावा आसवसंवरनिज्जरकिरियाहिगरणबंधप्पमोक्खकुसला" इत्यादि श्रावकज्ञानसमृद्धिवर्णनं **भगवत्याम्**।

(आ) **उत्तराध्ययनसूत्रे** मोक्षमार्गगतिसञ्ज्ञकेऽध्ययने निम्नलिखिता गाथा—

"जीवाजीवा य बंधो य, पुण्णं पावासवो तहा।
संवरो निज्जरा मोक्खो, संते ए तहिया नव ॥ १४ ॥"

(इ) वाचकवर्यप्रणीतायां **प्रशमरतौ** १९०तमपद्यादारभ्य २२१तमपर्यन्तानि पद्यानि।

(ई) श्रीदेवेन्द्रसूरिविनिर्मितधर्मरत्नप्रकरणवृत्त्युद्धृता १०७ गाथाः।

२ "अस्यां **प्रज्ञापनायां** षट्त्रिंशत् पदानि, तत्र प्रज्ञापनाबहुवक्तव्यविशेषचरमपरिणामसञ्ज्ञेषु पञ्चसु पदेषु जीवाजीवानां प्रज्ञापना। प्रयोगपदे क्रियापदे चाश्रवस्य 'कायवाङ्मनःकर्म योग आश्रव' इति वचनात्। कर्मप्रकृतिपदे बन्धस्य प्ररूपणा। समुद्घातपदे केवलिसमुद्घातप्ररूपणायां संवरनिर्जरामोक्षाणां त्रयाणाम्, शेषेषु तु स्थानादिषु पदेषु क्वचित् कस्यचित्" इति **प्रज्ञापनावृत्तौ श्रीमलयगिरिसूरयः**।

३ इदमनुसृत्य कलिकालसर्वज्ञश्रीहेमचन्द्रसूरिभिस्त्रिषष्टिशलाकापुरुषचरिते श्रीदेवानन्दसूरिभिः समयसारे, न्यायतीर्थन्यायविशारदोपाध्यायश्रीमङ्गलविजयैर्जैनतत्त्वप्रदीपे च तत्त्वसप्तकविरचनाऽकारीति प्रतिभाति।

४ सञ्ज्ञाऽभिनवत्वे समीक्ष्यतां पञ्चमे सूत्रे निक्षेपस्थाने न्यासपदप्रयोगः।

भाष्यं स्वोपज्ञं मन्यन्ते न वेति तत्र उभयोः विचारः क्रियते । अत्र भाष्यं स्वोपज्ञं मन्य- न्ते। एकत्रिंशत्सम्बन्धकारिका इत्याद्यारभ्य भाष्यसूत्रस्य विस्तारात्मिका प्रशस्तिश्लोकाः प्रशस्तिश्च भाष्यस्याद्यन्तयोः वर्तते । यदि पूर्वोक्तं युक्तिजालं मूलकर्तुः भाष्यकारस्य भावरूपः पक्षः स्वीक्रियते यदि भाष्यं मन्यते किं तर्हि प्रशस्य सम्बन्धकारिकाणां अवकाश दुःशकम् । श्वेताम्बरटीकाकारैः सिद्धसेनादिभिः स्वोपज्ञं स्वीकृतं, दिगम्बरैस्तु अनादृतम् । एवं सत्यपि मुद्रितसर्वार्थसिद्धिराजवार्तिकयोः श्रीअमृतचन्द्रकृते तत्त्वार्थसारे च पूर्वोक्ता प्रशस्ति श्लोका अष्टादिरूपतया परिवर्तनपूर्वका दृश्यन्ते । अन्तः श्लोकः औमास्वातिक इति मत्वा श्रीहरिभद्रसूरिभिः शास्त्रवार्तासमुच्चयग्रन्थस्य स्वकीयकृतौ ९०३श्लोकस्य स्वोपज्ञवृत्तौ । सम्बन्धकारिकाणामेकोनत्रिंशत्तमा उपयोजिता श्रीमुनिचन्द्रसूरिभिर्धर्मबिन्दुवृत्तौ । कश्चित् आह उक्तं चेत्यादि निर्देशपुरस्सरं समुद्धृतानि वा यानि कतिपयानि पद्यानि भाष्ये दृश्यन्ते तान्यपि भाषाशैलीसमानत्वाद् भाष्यकारस्यैव सम्भवेयुः ।

शैली-साम्प्रदायिकाभिनिवेशा-ऽर्थविकासरूपैस्त्रिभिर्दृष्टिबिन्दुभिः परीक्ष्यमाणयोः भाष्य-सर्वार्थसिद्धयोर्भाष्यस्य प्राचीनता पोस्फुरीति । अस्तु, तुष्यतु दुर्जन इति न्यायेन यदि भाष्यस्य स्वोपज्ञता न स्वीक्रियते तदपि उपलब्धव्याख्यानिकाये भाष्यस्य सर्वोपरि प्राचीनतेति कथने न मनागपि सन्देहो निष्पक्षप्रतिभाशालिनां सम्भवति ।

याकिनीमहत्तरासूनुश्रीहरिभद्रसूरिशेखर-श्रीसिद्धसेनगणिवरप्रभृतिभिः समस्तैः श्वेताम्बरमुनिवर्यैर्भाष्यस्य स्वोपज्ञत्वं स्पष्टतयाऽङ्गीकृतमिति निर्विवादम् । प्रो. यकोबी-प्रो. विन्टर्नित्स्-पं. सुखलालाद्याधुनिकविद्वद्भिरपि तथैव कृतम् । अनेन किं न फलति यदुतेदं मतं प्रामाणिकम्[1] । भवतु, द्वे युक्ती अपि निर्दिश्येते । तावत् कतिपयासु सम्बन्धकारि-कासु भाष्येऽपि कुत्रचिदुपदेक्ष्यामः वक्ष्यामि वक्ष्याम इति प्रतिज्ञाद्वारा ये विषयाः सूचितास्तेषां प्ररूपणं सूत्रेषु दृश्यते, न तु भाष्ये। अतोऽनुमीयते सूत्रभाष्ययोरेककर्तृत्वमर्याद् भाष्यस्य स्वोप-ज्ञता वरीवर्ति। अपरञ्च मूलकारव्याख्याकारयोर्यत्र भिन्नव्यक्तित्वं वर्तते तत्र प्रायः सूत्रपाठानां विसंवादिस्वरूपं तदर्थविषयकं विकल्पजालं सन्दिग्धत्वं सूत्रपाठभेदश्चेति दरीदृश्यते। निदर्शनार्थं समीक्ष्यतां सर्वार्थसिद्धिप्रमुखदिगम्बरटीकासाहित्यं श्रीबादरायणप्रणीतस्य ब्रह्मसूत्रस्य शारीरकसूत्रेत्यपराह्वस्य व्याख्याव्रजं वा । ईदृक्परिस्थितेरभावो भाष्ये समर्थयति तत्स्वोप-ज्ञत्वमिति मे मतिः ।

**सूत्रभाष्ययोर्वैशिष्ट्यम्—**

---

१ सन्तुल्यतामयं निम्नलिखितया श्रीऔपपातिकसूत्रगतया गाथया—

" बीआण पुणरवि अग्गिदड्ढाणं अंकुरुप्पत्तीण भवइ ।
एवामेव सिद्धाणं कम्मबीए दड्ढे पुनरपि जम्मुपत्ती न भवइ ॥ "

यत्रैव भग्नकूपस्तत्रापागच्छन्ति, उपागत्य देवदत्तस्य दारकस्य शरीरकं निष्प्राणं निश्चेष्टं जीवविप्रत्यक्तं पश्यति. दृष्ट्वा 'हा! हा! अहो! अकज्ज' हा! हा! अहो अकार्यम्=अनिष्टं सञ्जातम्? इतिकृत्वा=इति प्रोच्य देवदत्तं दारकं भग्नकूपात् 'उत्तारेंति' उत्तारयन्ति=बहिर्निष्काशयन्ति उत्तार्य धन्यस्य सार्थवाहस्य हस्ते ददति. ॥सू. ८ ॥

मूलम्—तए णं ते नगरगुत्तिया विजयस्स तक्करस्स पयमग्गमणुगच्छमाणा जेणेव मालुयाकच्छए तेणेव उवागच्छंति उवागच्छित्ता मालुयाकच्छयं अणुपविसंति अणुपविसित्ता विजयं तक्करं ससक्खं सहोढं सगेवेज्जं जीवग्गाहं गिण्हति गिण्हित्ता अट्ठि-मुट्ठिजाणुकोप्परपहारसंभग्गमहियगत्तं करेंति, करित्ता अवउडग बंधणं करेंति करित्ता देवदिन्नस्स दारगस्स आभरणं गेण्हंति गेण्हि-

(पडिनिक्खमित्ता जेणेव जिण्णुज्जाणे जेणेव भग्गकूवए तेणेव उवागच्छइ) निकल कर वे फिर वहां आये जहां वह जीर्ण उद्यान और वह भग्नकूप था। उवागच्छित्ता देवदिन्नस्स दारगस्स सरीरगं निप्पाणं निच्चेट्ठं जीवविप्पजढं पासंति पासित्ता हा हा अहो अकज्जमिति कट्टु देवदिन्नं दारगं भग्गकूवाओ उत्तारेंति उत्तारिता धण्णस्स सत्थवाहस्स हत्थे दलयंति) आकर के उन लोगोंने देवदत्त दारक के शरीरको निष्प्राण निश्चेष्ट और जीव से विप्रमुक्त देखा देखकर "हाय हाय यह महान् अनर्थ हुआ" इस प्रकार कहकर देवदत्त दारक को उस भग्नकूएं से बाहर निकाला। बाहर निकाल कर फिर उसे धन्य सार्थवाह के हाथ में सौंप दिया। सूत्र ॥ ८ ॥

શોધ કરતા રાજગૃહ નગરની બહાર નીકળ્યા (पडिनिक्खमित्ता जेणेव जिण्णुज्जाणे जेणेव भग्गकूवए तेणेव उवागच्छइ) બહાર નીકળીને તેઓ ફરતા ફરતા જીર્ણ ઉદ્યાન તેમજ ભગ્ન કૂવાની પાસે આવ્યા. (उवागच्छित्ता देवदिन्नस्स दारगस्स सरीरगं निप्पाणं निच्चेट्ठं जीवविप्पजढं पासंति पासित्ता हा हा अहो अकज्जमिति कट्टु देवदिन्नं दारगं भग्गकूवाओ उत्तारेंति उत्तारित्ता धण्णस्स सत्थवाहस्स हत्थे दलयंति) ત્યાં તેઓએ બાળક દેવદત્તના શરીરને નિષ્પ્રાણ, નિર્જીવ અને નિશ્ચેષ્ટ જોયું અને જોઈને "અરે! અરે!! બહુ ખોટું થયું" આ પ્રમાણે કહીને તેઓએ બાળક દેવદત્તના શરીરને ભગ્ન કૂવામાંથી બહાર કાઢયું. બહાર કાઢીને ધન્ય સાર્થવાહને તે શરીર સોંપી દીધું. ॥ સૂત્ર ॥ ૮ ॥

गोप्तृका धन्येन सार्थवाहेन एवमुक्ताः सन्तः 'सन्नद्धबद्धवम्मियकवया' संनद्धबद्धवर्मितकवचाः संनद्धाः=कृतसन्नाहाः=बन्धनोपयोगिसाधनैः सज्जीभूताः, बद्धाःकशाबन्धनेन, वर्मिताः=शरीरे परिधृताः कवचा यैस्ते तथा,' उप्पीलियसरासणपट्टिया' उत्पीडितशरासनपट्टिकाः—'उप्पीलिय' उत्पीडिताः= गुणारोपणेन नमिताः 'सरासणपट्टिया' शरासनपट्टिका:=धनुः पट्टिका यैस्ते तथा, यावत् 'गहियाउहपहरणा' गृहीतायुधप्रहरणाः 'गहिय' गृहीतानि 'आउह' आयुधानि=धनुरादीनि 'पहरणा' प्रहरणानि=असिकुन्तादीनि यैस्ते तथा, एवम्भूताः सन्तो नगरगोप्तृकाः धन्येन सार्थवाहेन सार्द्धं राजगृहस्य नगरस्य बहूनि 'अइगमणाणि य' अतिगमनानि च प्रवेशमार्गाः, इत्यादि—स्थानानि तेपु यावत् प्रपासु च मार्गणगवेषणं कुर्वन्तो राजगृहान्नगरात्प्रतिनिष्क्रामति, प्रतिनिष्क्रम्य यत्रैव जीर्णोद्यानं

---

नुप्रियों! आप लोक उस देवदत्त दारक की सब ओर चारों दिशाओं में मार्गणकरें गवेषण करें। (तएणं से नगरगुत्तिया धण्णेण सत्थवाहेणं एवं वुत्ता समाणा सन्नद्धबद्धवम्मियकवया उप्पीलियसरासनवट्टिया जाव गहियाउयपहरणा धन्नेणं सत्थवाहेणं सद्धिं रायगिहस्स बहूणि अइगमणाणि य जाव पवासु य मग्गणगवेसणं करेमाणा रायगिहाओ नगराओ पडिणिक्खमंति) धन्य सार्थवाह से इस प्रकार कहे वे नगर रक्षक जन बंधनोपयोगी साधनों से सज्जीभूत हुए कशाबंधन से बद्ध हुए और शरीर पर कवचों को पहिन २ कर अपने २ धनुषों पर प्रत्यंचा आरोपित कर यावत् आयुध और प्रहरणों को लेले कर धन्यसार्थवाह के साथ राजगृह नगर के गमनागमनों के स्थानों की यावत् प्रपा (पियाउ) आदि स्थलोंकी मार्गणा गवेषणा करते हुए राजगृहनगर. से निकले।

---

दत्तनी तमे બધા મળીને ચોમેર તપાસ કરો. ( तएणं से नगरगुत्तिया धण्णेणं सत्थवाहेणं एवं वुत्ता समाणा सन्नद्धबद्धवम्मियकवया उप्पीलियसरासनवट्टिया जाव गहियाउयपहरणा धन्नेण सत्थवाहेण सद्धिं रायगिहस्स बहूणि अइगमणाणि य जाव पवासु य मग्गणगवेसणं करेमाणा रायगिहाओ नगराओ पडिणिक्खमंति) ધન્ય સાર્થવાહની આ રીતે વાત સાંભળીને તે બધા નગર રક્ષકોએ ચોર વગેરે ગુનેગારોને બાંધવા યોગ્ય સાધનો સાથે લીધા, તેમજ કોરડાઓ બાંધ્યા અને શરીરે કવચો પહેરીને પોતપોતાના ધનુષ્યો ઉપર પ્રત્યંચા ચઢાવી આ પ્રમાણે તેઓ બધા આયુધો તેમજ પ્રહરણો લઈને ધન્ય સાર્થવાહની સાથે રાજગૃહ નગરના અવર જવરના સ્થાનોની તેમજ પરબો વગેરે સ્થળોમાં

चरणचिह्न 'अणुगच्छमाणा' अनुगच्छन्तो यत्रैव मालुकाकक्षकस्तत्रैवोपागच्छन्ति, उपागत्य मालुकाकक्षकमनुप्रविशन्ति, अनुप्रविश्य विजयं तस्करं 'ससक्खं' ससाक्ष्य ससाक्षिकमित्यर्थः 'सहोढ' सहोढं=समोपं चौर्यापहृतवस्तुसहितं देवदत्तदारकालङ्कारयुक्तमित्यर्थः, 'सगेवेज्जं' सग्रैवेयकं=ग्रीवाबन्धनसहितं गलबन्धनबद्धं गले रज्जुं बद्धेत्यर्थः, तं 'जीवग्गाहं' जीवग्राहं=जीवन्तं 'गिण्हंति' गृह्णन्ति' गृहीत्वा 'अट्ठिमुट्ठिजाणुकोप्परपहारसंभग्गमहियगत्तं' अस्थिमुष्टिजानुकूर्परप्रहारसंभग्नमथितगात्रम्-अस्थि च मुष्टिश्च जानुनी च कूर्परौ च—अस्थिमुष्टिजानुकूर्पराः, तेषु तैर्वा ये प्रहारास्तैः 'संभग्ग' सम्भग्नं=चूर्णितं 'महिय' मथितं=जर्जरितम् 'गत्तं' गात्रं=शरीरं यस्य स तं=भग्नसकलशरीरसन्धिस्थानं कुर्वन्ति. कृत्वा 'अवउडगबंधणं' अवकोटकबन्धनम्—अवकोटकेन बाह्वोः शिरसश्च पश्चाद्भागा-

---

तक्करस्स पयमग्गमणुगच्छमाणा जेणेव मालुयाकच्छए तेणेव उवागच्छंति) विजयतस्कर के पाद चिह्नों का अनुसरण करते हुए वहां पहुचे जहां वह (मालुका कच्छथा उवागच्छित्ता मालुयाकच्छयं अणुपविसंति) पहुंचकर वे उसमें घुसे (अणुपविसित्ता विजयं तक्करं ससक्खं सहोढ सगेवेज्जं जीवग्गाहं गिण्हंति) घुसकर उन्होंने उसके गलेमें रस्सी बांधकर जीता ही ससाक्ष्य देवदत्त दारक के अलंकार रूप साक्ष्य सहित पकड लिया । गिण्हित्ता अट्ठिमुट्ठि जाणुकोप्परपहारसंभग्गमहियगत्त करेंति )पकडकर उन्होंने उसकी हड्डियों में मुठियों में. घुटनों में,कुहनियो में. खूब प्रहार किये--इससे उसका शरीर का चूर २ हो गया—जर्जरित हो गया । तात्पर्य यह कि उसे इतनी बुरी तरह उन लोगोंने पीटा कि जिससे उसके शरीर की समस्त संधियां भग्न हो गई । (करित्ता अवउडगबंधणं, करेंति

---

तक्करस्स पयमग्गमणुगच्छमाणा जेणेव मालुयाकच्छए तेणेव उवागच्छंति) વિજય નામના ચોરનાં પગના ચિહ્નોને અનુસરતાં માલુકા કક્ષમાં પહોંચ્યા. (उवागच्छित्ता मालुयाकच्छयं अणुपविसंति અને માલુકા કક્ષમાં પેઠા. अणुपविसित्ता विजयं तक्करं ससक्खं सहोढं सगेवेज्जं जीवग्गाहं गिण्हंति) પેસીને તેઓએ વિજય નામના ચોરને સસાક્ષ્ય એટલે બાળક દેવદત્તના ઘરેણાંઓની સાથે જ ગળામાં દેરી બાંધીને જીવતો જ પકડી લીધો. (गिण्हित्ता अट्ठिमुट्ठिजाणुकोप्परपहारं संभग्गमहियगत्तं करेंति) પકડીને તેઓએ ચોરના હાડકાં, મૂઠીઓ, ઢીંચણો અને કોણીઓ ઉપર ખૂબ પ્રહારો કર્યા. એથી તેનું શરીર શિથિલ અને ભૂકા જેવું થઈ ગયું. મતલબ એ છે તેને એવો સખત માર પડયો કે જેથી તેના શરીરના બધા સાંધાઓ તૂટી ગયા.

त्ता विजयस्स तक्करस्स गीवाए बंधंति बंधित्ता मालुया कच्छगाओ पडिनिक्खमंति पडिनिक्खमित्ता जेणेव रायगिहे नयरे तेणेव उवागच्छंति उवागच्छित्ता रायगिहं नगरं अणुपविसंति अणुपविसित्ता रायगिहे नयरे सिंघाडगतियचउक्कचच्चरमहापहपहेसु कसप्पहारे य लयप्पहारे य छिवापहारे य निवाएमाणा २ छारं च धूलिं च कयवरं च उवरिं पक्किरमाणा २ महया २ सद्देणं उग्घोसेमाणा एवं वयंति,—एसणं देवाणुप्पिया! विजए नामं तक्करे जाव गिद्धे विव आमिसभक्खी बालघायए बालमारए, तं नो खलु देवाणुप्पिया! एयस्स केइ राया वा रायपुत्ते वा रायमच्चे वा अवरज्झइ एत्थट्ठे अप्पणो सयाइं कम्माइं अवरज्झंति तिकट्टु जेणामेव चारगसाला तेणामेव उवागच्छंति, उवागच्छित्ता हडिबंधणं करेंति करित्ता भत्तपाणनिरोहं करेंति, करित्ता तिसंझं कसप्पहारे य जाव निवाएमाणा २ विहरंति। तएणं से धण्णे सत्थवाहे मित्तनाइ नियगसयणसंबंधिपरयणेणं सद्धिं रोयमाणे जाव विलवमाणे देवदिन्नस्स दारगस्स सरीरस्स महया इड्ढिसक्कारसमुदएणं नीहरणं करेइ, करेत्ता बहूइं लोइयाइं मयगकिच्चाइं करेइ करित्ता केणइ कालंतरेणं अवगयसोए जाए यावि होत्था ॥ सू. ८ ॥

टीका--'तएणं ते' इत्यादि। ततः खलु तदनु=सज्जीभूतानन्तरं जिगमिषवो ते नगरगोप्तृकाः=नगररक्षकाः विजयस्य तस्करस्य 'पयमग्गं' पदमार्गं=पदन्यासम्

---

तए णं ते नगर गुत्तिया इत्यादि ॥

टीकार्थ--(तएणं) इसके बाद (ते नगर गुत्तिया) वे नगर रक्षक (विजयस्स

---

तएणं ते नगरगुत्तिया इत्यादि!

टीकार्थ- (तएणं) त्यार बाद (ते नगरगुत्तिया) नगर रक्षको (विजयस्स

चरणचिह्न 'अणुगच्छमाणा' अनुगच्छन्तो यत्रैव मालुकाकक्षकस्तत्रैवोपागच्छन्ति, उपागत्य मालुकाकक्षकमनुप्रविशन्ति, अनुप्रविश्य विजयं तस्करं 'ससक्खं' ससाक्ष्यं ससाक्षिकमित्यर्थः 'सहोढं' सहोढं=समीपं चौर्यापहृतवस्तुसहितं देवदत्तदारकालङ्कारयुक्तमित्यर्थः, 'सगेवेज्जं' सग्रैवेयकं=ग्रीवाबन्धनसहितं गलबन्धनबद्धं गले रज्जुं बद्ध्वेत्यर्थः, तं 'जीवग्गाहं' जीवग्राहं=जीवन्तं 'गिण्हंति' गृह्णन्ति' गृहीत्वा 'अट्ठिमुट्ठिजाणुकोप्परपहारसभग्गमहियगत्तं' अस्थिमुष्टिजानुकूर्परप्रहार संभग्न मथितगात्रम्-अस्थि च मुष्टिश्च जानुनी च कूर्परौ च–अस्थिमुष्टिजानुकूर्पराः, तेषु तैर्वा ये प्रहारास्तैः 'सभग्ग' सम्भग्नं=चूर्णितं 'महिय' मथितं=जर्जरितम् 'गत्तं' गात्र=शरीरं यस्य स तं=भग्नसकलशरीरसन्धिस्थानं कुर्वन्ति. कृत्वा 'अवउडगबंधणं' अवकोटकबन्धनम्–अवकोटकेन बाह्वोः शिरसश्च पश्चाद्भागा-

---

तक्करस्स पयमग्गमणुगच्छमाणा जेणेव मालुयाकच्छए तेणेव उवागच्छंति) विजयतस्कर के पाद चिह्नों का अनुसरण करते हुए वहां पहुचे जहां वह (मालुका काच्छथा उवागच्छित्ता मालुयाकच्छयं अणुपविसंति) पहुंचकर वे उसमें घुसे (अणुपविसित्ता विजयं तक्करं ससक्खं सहोढ सगेवेज्जं जीवग्गाहं गिण्हंति) घुसकर उन्होंने उसके गलेमें रस्सी बांधकर जीता ही ससाक्ष्य देवदत्त दारक के अलंकार रूप साक्ष्य सहित पकड लिया। गिण्हित्ता अट्ठिमुट्ठिजाणुकोप्परपहारसंभगमहियगत्त करेंति )पकडकर उन्होंने उस की हड्डियों में मुठियों में. घुटनों में,कुहनियो में. खूब प्रहार किये--इससे उसका शरीर का चूर २ हो गया--जर्जरित हो गया। तात्पर्य यह कि उसे इतनी बुरी तरह उन लोगोंने पीटा कि जिससे उसके शरीर की समस्त संधियां भग्न हो गई। (करित्ता अवउडगबंधणं, करेंति

---

तक्करस्स पयमग्गमणुगच्छमाणा जेणेव मालुयाकच्छए तेणेव उवागच्छंति) विજય નામના ચોરનાં પગના ચિહ્નોને અનુસરતાં માલુકા કક્ષમાં પહોંચ્યા. (उवागच्छित्ता मालुयाकच्छयं अणुपविसंति અને માલુકા કક્ષમાં પેઠા. अणुपविसित्ता विजयं तक्करं ससक्खं सहोढं सगेवेज्जं जीवग्गाहं गिण्हंति) પેસીને તેઓએ વિજય નામના ચોરને સસાક્ષ્ય એટલે બાળક દેવદત્તના ઘરેણાંઓની સાથે જ ગળામાં દોરી બાંધીને જીવતો જ પકડી લીધો. (गिण्हित्ता अट्ठिमुट्ठिजाणुकोप्परपहारं संभग्गमहियगत्तं करेंति) પકડીને તેઓએ ચોરના હાડકાં, મૂઠીઓ, ઢીંચણો અને કોણીઓ ઉપર ખૂબ પ્રહારો કર્યાં. એથી તેનું શરીર શિથિલ અને ભૂકા જેવું થઈ ગયું. મતલબ એ છે તેને એવો સખત માર પડયો કે જેથી તેના શરીરના બધા સાંધાઓ તૂટી ગયા.

टी०—तत् कथं क्षमितव्यमिति चेत्। क्षमितव्यमिति भावे कृत्यः। क्षमाऽपि भाव एव। अतः सामान्यमात्रमाश्रित्य तच्छब्दप्रयोगः। वाक्यार्थस्तु-सा-क्षमा कथं-केन प्रकारेण कर्तव्या ?। एवं मन्यते दुर्जयः क्रोधवेगो मदाकुलस्येव करिणः। चेच्छब्दः शङ्कायाः सूचकः। एवमाशङ्किते आशङ्काम्युदासचिकीर्षया आह—उच्यत इति। क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात्। भावः सद्भावोऽस्तित्वं तच्चिन्तनात् तदुपयोगात् उभयथाऽपि क्रोधो न घटत इति। येन निमित्तेन परप्रयुक्तेनायं मम कोप उत्पद्यते तन्निमित्तं मयि किं सत्यमेवास्ति उताभ्याख्याति परः ?, यदि सत्यमस्त्येतन्निमित्तं किं कोपेन! कृतं खलु मयेदं, नाणीयोऽपि परस्यात्रागः सद्भूतमर्थं प्रकाशयतः, स्वकृतं हि दुश्चरितं तपतीत्येवं चिन्तयेत्। एतदेवाह—भावचिन्तनात्। तावद् विद्यन्ते मय्येते दोषाः किमत्रासौ मिथ्या ब्रवीतीति क्षमितव्यं, तथाऽभावचिन्तनादपि क्षमितव्यमित्यादि, ये दोषाः परेणोपक्षिप्यन्ते मयि नैते विद्यन्ते। अभाव एव, परस्त्वज्ञानादेवमभिधत्ते। अ[1]ज्ञात्वैव दोषानुपक्षिपतीत्यर्थः। एवं च निरपराधमात्मानमवेत्य क्षन्तव्यमेव॥ किञ्चान्यदालम्बनं सहिष्णुत्वे इत्याह—

भा०—परैः प्रयुक्तस्य क्रोधनिमित्तस्यात्मनि भावचिन्तनादभावचिन्तना[2]च्च क्षमितव्यम्। भावचिन्तनात् तावद् विद्यन्ते मयि एते दोषाः किमत्रासौ मिथ्या ब्रवीतीति क्षमितव्यम्। अभावचिन्तना[3]दपि क्षमितव्यम्, नैते विद्यन्ते मयि दोषा यानज्ञानादसौ ब्रवीतीति क्षमितव्यम्। किञ्चान्यत्॥

टी०—गतार्थमेवेदं भाष्यम्।

क्षमाकरणे अन्यान्यालम्बनानि

भा०—क्रोधदोषचिन्तनाच्च क्षमितव्यम्। क्रुद्धस्य हि विद्वेषासादनस्मृतिभ्रंशव्रतलोपादयो दोषा [4]भवन्तीति। किञ्चान्यत्॥

टी०—क्रोधदोषचिन्तनाच्चेत्यादि। क्रुद्धः-कषायपरिणतो विद्वेषी कर्म बध्नाति, परं वा निहन्ति व्यापादयति वा। अतः प्राणातिपातनिवृत्तिव्रतलोपः स्यात्, गुरूनासादयेद्-अधिक्षिपेत्, अतो ज्ञानादिनिर्वाणसाधनपरिहाणिरवश्यंभाविनी। क्रुद्धो वा भ्रष्टस्मृतिको मृषाऽपि भाषेत, विस्मृतप्रव्रज्याप्रतिपत्तिः परेणादत्तमप्याददीत, द्वेषात् परपाखण्डिनीषु ब्रह्मव्रत[5]भङ्गमप्यासेवेत। तथा प्रद्विष्टः सहायबुद्ध्या गृहस्थेष्वविरतेषु मूर्च्छामपि कुर्यात्। आदिग्रहणाद् उत्तरगुणभङ्गमप्याचरेत् कारटक(करटुक?)भक्तालाभे मासक्षपकवत्॥ किञ्चान्यदालम्बनं क्षान्तावित्याह—

---

१ 'अज्ञाचैव' इति ग-च-पाठः। २ 'नाद्वा' इति घ-पाठः। ३ 'दपि नैते मयि' इति ग-पाठः। ४ 'भवन्तीति' इति घ-पाठः। ५ 'भञ्जना' इति ग-पाठः।

भा०—वालस्वभावचिन्तनाच्च परोक्षप्रत्यक्षाक्रोशताडनमारणधर्मभ्रंशा-नामुत्तरोत्तररक्षार्थम्। वाल इति मूढमाह। परोक्षमाक्रोशति वाले क्षमितव्यमेव। एवंस्वभावा हि वाला भवन्ति। दिष्टया च मां परोक्षमाक्रोशति न प्रत्यक्ष-मिति लाभ एव मन्तव्यः। प्रत्यक्षमप्याक्रोशति वाले क्षमितव्यम्। विद्यत एवैतद् वालेषु। दिष्टया च मां प्रत्यक्षमाक्रोशति, न ताडयति, एतदप्यस्ति वालेष्विति लाभ एव मन्तव्यः। ताडयत्यपि वाले क्षमितव्यम्। एवंस्वभावा हि वाला भवन्ति। दिष्टया च मां ताडयति, न प्राणैर्वियोजयतीति। एतदपि विद्यते वालेष्विति। प्राणैर्वियोजयत्यपि वाले क्षमितव्यम्। दिष्टया च मां प्राणैर्वियोजयति, न धर्माद् भ्रंशयतीति क्षमितव्यम्। एतदपि विद्यते वालेष्विति लाभ एव मन्तव्यः। किञ्चान्यत—

टी०—वालस्वभावेत्यादि। वालशब्दोऽवैधेयवचनः, न वयोऽवस्थावाची। तथैव चाह भाष्यकृत्। वालः मूढो निर्विवेक इत्यर्थः। तस्य चैष एव स्वभावो मूढत्वात् यत्किञ्च-नभाषित्वं तत्स्वभावालोचनमन्वेषणं, अतस्तच्चिन्तनाच्च क्षमितव्यमेव। चशब्दः समुच्चयार्थः। उत्तरोत्तररक्षार्थमिति परोक्षाक्रोशात् प्रत्यक्षाक्रोशनमुत्तरं, प्रत्यक्षाक्रोशनात् ताडनं, ताडनान्मारणं, मारणाद् धर्मभ्रंशनं, परोक्षाक्रोशेन क्षमायां प्रत्यक्षाक्रोशनं रक्षितं भवति। एवमुत्तरत्रापि, अस्ति हि कियत्यपि मन्दाक्षमाक्रोष्टुर्मयि ततः परोक्षमाक्रोशति, न प्रत्यक्षम्। दिष्टयेति तृतीयैकवचनप्रतिरूपको निपातः प्रसादवचनः प्रशंसावचनो वा। अयमेव च प्रसादो मम–इदमेव वा साधु यन्मां परोक्षमाक्रोशति, न प्रत्यक्षमित्येष एव लाभः। लौकिकः खलु अयमाभाणकः–अयमेव ( मे ) लाभ इति, एवं सर्वत्र व्याख्या। किञ्चान्यदा-लम्बनमाश्रित्य क्षमा कार्या तदभिधीयते—

भा०—स्वकृतकर्मफलाभ्यागमाच्च। स्वकृतकर्मफलाभ्यागमोऽयं मम, निमि-त्तमात्रं पर इति क्षमितव्यम्। किञ्चान्यत्—

टी०—स्वकृतफलाभ्यागमाच्चेति। जन्मान्तरोपात्तस्य कर्मणः स्वकृतस्यायं विपा-को मम यदाक्रोशति ताडयति वा परः, स तु निमित्तमात्रं कर्मोदयस्य। यस्माद् द्रव्यक्षेत्रकाल-भवभावापेक्षः कर्मणामुदयो भगवद्भिराख्यातः। स्वकृतं च कर्मानुभवितव्यमवश्यन्तया निकाचितं, तपसा वा क्षपणीयमिति। किञ्चान्यदालम्बनं क्षन्तुमनसा विधातव्यमित्याह—

भा०—क्षमागुणांश्चानायासादीननुस्मृत्य क्षमितव्यमेवेति क्षमाधर्मः॥ १॥

---

१ 'विधेयं' इति च-पाठः।

टी०—क्षमागुणांश्चेत्यादि । क्षमायां गुणाः ज्ञानादिवृद्धिदवोऽनायासादयः । तांश्चानुचिन्त्य क्षमामेव विदधीत । आक्रोशो-दुःखहेतुर्वेदः । क्रोधः प्रहरणमहागान्धेश्वमं संरम्भावेशारुणविलोचनस्वेदद्रवप्रवाहप्रहारवेदनादिकः । तद्विपरीतोऽनायासः-स्वस्थता । आदिग्रहणात् तन्मत्यपकर्मप्रायश्चित्ताभावः शुभध्यानाध्ययनभाविता परममाध्यानोत्पादनं स्थिरचित्तप्रसन्नान्तरात्मत्वमित्यादयः । इत्यमनुत्तरतो गुणाः सम्पद्यन्ते क्षममाणस्य, क्षमितव्यमिति क्षमाधर्मः । तथा मार्दवधर्मः मृदुः-अस्तब्धस्तस्य भावः कर्म वा मार्दवम् । तदुपक्रमार्थं नायाह—

भा०—नीचैर्वृत्त्यनुत्सेकौ मार्दवलक्षणम् । मृदुभावो मृदुकर्म वा मार्दवं, मदनिग्रहो मानविघातश्चेत्यर्थः । तत्र मानस्येमान्यष्टौ स्थानानि भवन्ति ॥

टी०—नीचैर्वृत्त्यनुत्सेकाविति । नीचैर्वृत्तिः-अभ्युत्थानासनदानाञ्जलिप्रग्रहणयादि विनयकरणरूपा नीचैर्वर्तनम् । उत्सेकश्चित्तपरिणामो गर्वरूपस्तद्विपर्ययोऽनुत्सेकः । संसारस्वभावं भावयतोऽसमञ्जसविशिष्टजातिकुलादिसम्पदः कदाचिदवाप्यन्ते कदाचिद्धीनास्ततो न गर्वपरिणाममास्कन्दतीत्येवदेवाह—मदनिग्रह इत्यादि । माद्यत्यनेनेति मदः जात्यादिमदस्तस्य ( निग्रहः उदयनिरोधः कदाचिदुदितस्य वा वैफल्यापादनं मानो-मूलप्रकृतिः यद्विजृम्भणादेते प्रादुष्पन्ति जात्यादिमदास्तस्य ) च निर्घातो मूलोत्कर्तनमित्यर्थः । तद्घाते चावश्यम्भावी जात्यादिमदविनाशः । तन्निरूपणार्थमाह-तत्र मानस्येत्यादि । तत्रेति वाक्योपन्यासार्थः । स्थानानि भेदाः । इमानीति प्रत्यक्षीकरोति । परस्यानुभवमुत्पादयति—

अष्टविधता मानस्य

भा०—तद्यथा—जातिः १ कुलं २ रूपम् ३ ऐश्वर्यं ४ विज्ञानं ५ श्रुतं ६ लाभः ७ वीर्यम् ८ इति ॥

टी०—तद्यथेत्यादिनोदाहरति । जात्यादीनि वीर्यान्तान्यष्टौ स्थानानि । तत्र जातिः पित्रन्वयः प्रख्याततमवंशता जातिर्जन्मात्मलाभः पञ्चेन्द्रियादिलक्षणा वा तया गर्वमुद्वहति विशिष्टजातिरहमिति । विदितकर्मपरिणामस्तु निरुणद्धि जातिमदं, स्वकृतकर्मफलानुभाजो जीवा नानाजातीरुच्चावचाः प्रपद्यन्ते इति न श्रेयान् जातिमदः । मात्रन्वयः कुलं उग्रभोजादि वा । तेनापि मदो न युक्तएव जात्यादिभावनावदिति । रूपं शरीरावयवानां सन्निवेशविशेषो लावण्ययुक्तस्तेनापि कश्चिन्माद्यति, तत्प्रतिषेधस्त्वाद्युत्तरकारणालोचनाद् भवति । तत्राद्यं कारणं मातुरोजः पितुः शुक्रम्, उत्तरकारणं जननीग्रस्तान्नपानरसाभ्यवहारो रसहरण्येत्येवमामृशतो न प्रतिभाति रूपमदः । त्वग्-मांसा-ऽस्थि-पुरीष-पूयाद्यशुभप्रायत्वात् । ऐश्वर्यमदो

१ 'द्रव्य' इति च-पाठः । २ 'च' इति घ-पाठः । ३ 'जन्मात्मा जातः पञ्चेन्द्रिया०' इति च-पाठः ।
४ 'भोगादि' इति च-पाठः । ५ 'षेधमुत्तर०' इति ङ-पाठः ।

धनधान्यसम्पत्प्रभवः। धनं रजत-चामीकर-मरकतादि गो-महिष्य-ऽजाविकादि च, व्रीहि-तिल-मुद्ग-माष-कङ्ग्वादि धान्यं तेनापि कर्मानुभावादप्राप्तेन प्राप्तेन वा संरक्ष्यमाणेन क्लेशकारिणा अकाण्डभङ्गुरेणाऽऽयत्यामायासबहुलेन को मद इत्येवं प्रत्याचक्षीत ॥ वाचकेन त्वेतदेव बलसंज्ञया प्रशमरतावुपात्तम्। तच्च त्रिधा–शरीर–स्वजन–द्रव्य-बलम्। इहैश्वर्यग्रहणात् स्वजनद्रव्यबलपरिग्रहः। शरीरबलं तु वीर्यग्रहणात् पृथग् गृहीतं वीर्यबलस्य प्राधान्यप्रकाशनार्थम्। विज्ञानं–बुद्धिश्चतुर्विधा–औत्पत्तिकी, वैनयिकी, कर्मजा, पारिणामिकी चेति। तत्रौत्पत्तिकी अदृष्टाश्रुतपूर्ववस्तुन्युपनते तत्क्षण एव समासादितोपजना (?) अव्याहतफला भरतरोहकादेरिव भवति। गुर्वादिविनयानुष्ठानाभ्यासविशेषप्रभवा वैनयिकी ऐहिकामुष्मिकफलसम्पादिनी प्रस्तुतकार्यनिस्तरणसमर्था धर्मादित्रिवर्गशास्त्रार्थग्राहिणी च पुत्रागमनकाणहस्तिनीपरिज्ञाननैमित्तिकस्यैव। कर्मजा पुनः धीः साधुकारफला, अनाचार्यकं कर्म, तत्र पुनःपुनरुपयोगात् प्रतिक्षणमभ्यस्यतस्तादृशी बुद्धिरुत्पद्यते येन प्रथमादिकृतकर्मातिशायि पाश्चात्यं कर्मोपजायते, सौवर्णिकक्षीवलतन्तुवायादेरिव। पारिणामिकी तु वयोविपाकलब्धजन्मा परमहितनिःश्रेयसफला पश्चात्तयवादिसाधनानुसारिणी भवत्यभयकुमारादेरिव यथासम्भवम्[2]। इत्थं लब्धया बुद्धया अहमेव बुद्धिमानिति मन्यमानः परिभवति शेषं जनम्। मदसमुद्धतस्य परपरिभवपरिवादादात्मोत्कर्षाच्चाशुभं कर्म नीचैर्गोत्रादि बन्धमेति यदनेकभवपरम्परासु परिनिष्ठास्यतीति सापायमवग(म)त्य बुद्धिगर्वमित्थं विचिन्तयेत्–बुद्धयो हि विनयाधानहेतवः सर्वदा, न जातुचित् अहङ्कारस्य कारणीभवन्ति। मानपरस्य च विनयखण्डनमवश्यम्भावि। विनयहीनस्य च धर्मतपसी निष्फले स्यातामिति विज्ञानमदो[3] यत्नेन महता विवर्जनीयः। श्रुतम्–आप्तप्रणीत आगमः तत्परिज्ञानान्माद्यति अहमेवैको जाने, नापर इति। श्रुतमदान्धश्च बालिशमेव परं मन्यते, श्रुतमदं च निजिघृक्षुरित्थमालोचयेत्–प्रकर्षापकर्षवृत्तित्वात् क्षयोपशमस्य सन्ति मत्तोऽन्येऽपि बहुश्रुताः, कदाचिदहमन्ये[4]भ्योऽल्पतरश्रुतोऽतिगहनार्थत्वादागमानामधिगतश्रुतोऽपि वा दुरधिगततदर्थः स्या[5]मिति श्रुतमदत्यागः श्रेयान्। अपि च–चतुर्दशपूर्वधरेष्वपि षट्स्थानकमवघुष्यते यदि, तत्र का कथा शेषश्रुतधरे श्रुतज्ञानावरणक्षयोपशमवैचित्र्याद्, अधिगतसकल-

प्रशमरतौ मतान्तरम्

औत्पत्तिकीप्रमुख-बुद्धिचतुष्टयम्

---

१ उक्तं च तत्र—

जाति–कुल–रूप–बल–बुद्धि–वाल्लभ्यक–श्रुतमदान्धाः।
क्लीबाः परत्र चेह च हितमप्यर्थं न पश्यन्ति ॥ ८० ॥

२ सन्तुल्यतां यदुक्तं नमस्कारनिर्युक्तौ हारिभद्रीये तद्विवरणे च ( ४१४–४३५ पत्राङ्केषु )।

३ 'मादाय' इति च–पाठः। ४ 'भ्योऽल्पतर' इति च–पाठः। ५ 'स्यादिति' इति ङ–पाठः।

टी०—क्षमागुणांश्चेत्यादि । क्षमाया गुणाः ज्ञानादिवृद्धिरनयोऽनायासादयः । तांश्चानुचिन्त्य क्षमामेव विदधीत । आयासो-दुःखहेतुर्देहविशेषः प्रहरणसहायान्वेषणं संरम्भावेशारुणविलोचनस्वेदप्रवाहप्रहारवेदनादिकः । तद्विपरीतोऽनायासः–स्वस्थता । आदिग्रहणात् तत्प्रत्ययकर्मबन्धविरहाभावः शुभध्यानाभ्यासाविघ्नं परमार्थानोत्पादनं स्थिरचित्तसत्वान्तरात्मत्वमित्यादयः । इत्यमनुस्मरतो गुणाः सम्पद्यन्ते क्षममाणस्य, क्षमितव्यमिति क्षमाधर्मः । तथा मार्दवधर्मः मृदुः–अस्तम्भस्तद्भावस्तत्कर्म वा मार्दवम् । तदुपदर्शनायाह—

भा०—नीचैर्वृत्त्यनुत्सेकौ मार्दवलक्षणम् । मृदुभावो मृदुकर्म वा मार्दवं, मदनिग्रहो मानविघातश्चेत्यर्थः । तत्र मानस्येमान्यष्टौ स्थानानि भवन्ति ॥

टी०—नीचैर्वृत्त्यनुत्सेकाविति । नीचैर्वृत्तिः–अभ्युत्थानासनदानाञ्जलिप्रग्रहयथार्हविनयकरणरूपा नीचैर्वर्तनम् । उत्सेकश्चित्तपरिणामो गर्वरूपस्तद्विपर्ययोऽनुत्सेकः । संसारस्वभावं भावयतोऽसमञ्जसविशिष्टजातिकुलादिसम्पदः कदाचिदेवासाद्यन्ते कदाचिद्धीनास्ततो न गर्वपरिणाममास्कन्दतीत्येतदेवाह—मदनिग्रह इत्यादि । माद्यत्यनेनेति मदः जात्यादिमदस्तस्य ( निग्रहः उदयनिरोधः कदाचिदुदितस्य वा वैफल्यापादनं मानो मूलप्रकृतिः यद्विजृम्भणादेते प्रादुष्पन्ति जात्यादिमदास्तस्य ) च निर्घातो मूलोत्कर्तनमित्यर्थः । तद्घाते चावश्यम्भावी जात्यादिमदविनाशः । तन्निरूपणार्थमाह–तत्र मानस्येत्यादि । तत्रेति वाक्योपन्यासार्थः । स्थानानि भेदाः । इमानीति प्रत्यक्षीकरोति । परस्यानुभवमुत्पादयति—

अष्टविधता मानस्य

भा०—तद्यथा—जातिः १ कुलं २ रूपम् ३ ऐश्वर्यं ४ विज्ञानं ५ श्रुतं ६ लाभः ७ वीर्यम् ८ इति ॥

टी०—तद्यथेत्यादिनोदाहरति । जात्यादीनि वीर्यान्तान्यष्टौ स्थानानि । तत्र जातिः पित्रन्वयः प्रख्याततमवंशता जातिर्जन्मोत्तमलाभः पञ्चेन्द्रियादिलक्षणा वा तया गर्वमुद्वहति विशिष्टजातिरहमिति । विदितकर्मपरिणामस्तु निरुणद्धि जातिमदं, स्वकृतकर्मफलानुभाजो जीवा नानाजातीरुच्चावचाः प्रपद्यन्ते इति न श्रेयान् जातिमदः । मात्रन्वयः कुलं उग्रभोजादि वा । तेनापि मदो न युक्तएव जात्यादिभावनावदिति । रूपं शरीरावयवानां सन्निवेशविशेषो लावण्ययुक्तस्तेनापि कश्चिन्माद्यति, तत्प्रतिषेधस्त्वाद्युत्तरकारणालोचनाद् भवति । तत्राद्यं कारणं मातुरोजः पितुः शुक्रम्, उत्तरकारणं जननीग्रस्तान्नपानरसाभ्यवहारो रसहरण्येत्येवमामृशतो न प्रतिभाति रूपमदः । त्वग्-मांसा-ऽस्थि-पुरीष-पूयाद्यशुभप्रायत्वात् । ऐश्वर्यमदो

---

१ 'द्रव्य' इति च-पाठः । २ 'च' इति घ-पाठः । ३ 'जन्मारमा जातः पञ्चेन्द्रिया०' इति च-पाठः । ४ 'भोगादि' इति च-पाठः । ५ 'षेधमुत्तर०' इति ङ-पाठः ।

धनधान्यसम्पत्प्रभवः। धनं रजत-चामीकर-मरकतादि गो-महिष्य-ऽजाविकादि च, व्रीहि-तिल-मुद्ग-माष-कङ्ग्वादि धान्यं तेनापि कर्मानुभावादप्राप्तेन प्राप्तेन वा संरक्ष्यमाणेन क्लेशकारिणा अकाण्डभङ्गुरेणाऽऽयत्यामायासबहुलेन को मद इत्येवं प्रत्याचक्षीत ॥ चापकेन त्वेतदेव बलसंज्ञया प्रशमरतावुपात्तम्। तच्च त्रिधा–शरीर–स्वजन–द्रव्य-बलम्। इहैश्वर्यग्रहणात् स्वजनद्रव्यबलपरिग्रहः। शरीरबलं तु वीर्यग्रहणात् पृथग् गृहीतं वीर्यबलस्य प्राधान्यप्रकाशनार्थम्। विज्ञानं–बुद्धिश्चतुर्विधा–औत्पत्तिकी, वैनयिकी, कर्मजा, पारिणामिकी चेति। तत्रौत्पत्तिकी अदृष्टाश्रुतपूर्ववस्तुन्युपनते तत्क्षण एव समासादितो-पजना (?) अव्याहतफला भरतरोहकादेरिव भवति। गुर्वादिविनयानुष्ठानाभ्यासविशेषप्रभवा वैनयिकी ऐहिकामुष्मिकफलसम्पादिनी प्रस्तुत-कार्यनिस्तरणसमर्था धर्मादित्रिवर्गशास्त्रार्थग्राहिणी च पुत्रागमनकाणहस्तिनीपरिज्ञाननैमित्तिकस्येव। कर्मजा पुनः धीः साधुकारफला, अनाचार्यकं कर्म, तत्र पुनःपुनरुपयोगात् प्रतिक्षण-मभ्यस्यतस्तादृशी बुद्धिरुत्पद्यते येन प्रथमादिकृतकर्मातिशायि पाश्चात्यं कर्मोपजायते, सौवर्णिकक्षीवलतन्तुवायादेरिव। पारिणामिकी तु वयोविपाकलब्धजन्मा परमहितनिःश्रेयसफला पश्चाद्वयवादिसाधनानुसारिणी भवत्यभयकुमारादेरिव यथासम्भवम्[2]। इत्थं लब्धया बुद्ध्या अहमेव बुद्धिमानिति मन्यमानः परिभवति शेषं जनम्। मदसमुद्धतस्य परपरिभवपरि-वादादात्मोत्कर्षाच्चाशुभं कर्म नीचैर्गोत्रादि बन्धमेति यदनेकभवपरम्परासु परिनिष्ठास्यतीति सापायमवग(म)त्य बुद्धिगर्वमित्थं विचिन्तयेत्–बुद्धयो हि विनयाधानहेतवः सर्वदा, न जातु-चित् अहङ्कारस्य कारणीभवन्ति। मानपरस्य च विनयखण्डनमवश्यम्भावि। विनयहीनस्य च धर्मतपसी निष्फले स्यातामिति विज्ञानमदो यत्नेन महता विवर्जनीयः। श्रुतम्–आप्तप्रणीत आगमः तत्परिज्ञानान्माद्यति अहमेवैको जाने, नापर इति। श्रुतमदान्धश्च बालिशमेव परं मन्यते, श्रुतमदं च निजिघृक्षुरित्थमालोचयेत्–प्रकर्षापकर्षवृत्तित्वात् क्षयोपशमस्य सन्ति मत्तो-ऽन्येऽपि बहुश्रुताः, कदाचिदहमन्येभ्योऽल्पतरश्रुतोऽतिगहनार्थत्वादागमानामधिगतश्रुतोऽपि वा दुरधिगततदर्थः स्यामिति श्रुतमदत्यागः श्रेयान्। अपि च–चतुर्दशपूर्वधरेष्वपि षट्स्थानक-मवघुष्यते यदि, तत्र का कथा शेषश्रुतधरे श्रुतज्ञानावरणक्षयोपशमवैचित्र्याद्, अधिगतसकल-

प्रशमरतौ मतान्तरम्

औत्पत्तिकीप्रमुख-बुद्धिचतुष्टयम्

---

१ उक्तं च तत्र—

जाति-कुल-रूप-बल-बुद्धि-वाल्लभ्यक-श्रुतमदान्धाः।
क्लीबाः परत्र चेह च हितमप्यर्थं न पश्यन्ति ॥ ८० ॥

२ सन्तुल्यतां यदुक्तं नमस्कारनिर्युक्तौ हारिभद्रीये तद्विवरणे च ( ४१४–४२५ पत्राङ्केषु )।

३ 'मादाय' इति च-पाठः। ४ 'भ्योऽलभ्यतर' इति च-पाठः। ५ 'स्यादिति' इति ङ-पाठः।

श्रुतेनापि परिहार्यः श्रुतमद इति। लम्भनं लाभः–प्राप्तिरीप्सितस्य सत्कारसम्मानादेः प्रवृ-
त्तिसन्मित्रभूपालस्वजनेभ्यो विज्ञान-तपो-ऽभिजन-शौर्यादिप्रभावादहं लभेयं, अपरः प्रयत्न-
वानपि न लभत इति स्वलाभेन माद्यति। तथा गुरुजनादृतो न प्राप्तोऽहं, अपरस्तु न
कस्मैचिद् रोचते, वचनमप्यस्य नादरयन्तीति गर्वोऽप्ययं लाभमदः। स चैवं निग्रहीतव्यो
लाभान्तरायकर्मोदयादलाभो लाभान्तरायक्षयोपशमाच्च सत्कारादिलाभः, संसारे परि-
भ्रमतो जीवस्य कादाचित्को न तु शाश्वतः, कर्माधीनत्वात्, संसारानुबन्धी चेति लाभम-
दत्यागः श्रेयस्करः। वाल्लभ्यकप्राप्तिरपि कर्मोदयनिमित्तैव, संसारिणां च सुलभेति वाल्लभ्य-
फलाभमदः परिवर्जनीय इति। वीर्य–पराक्रमः शक्तिरुत्साहः सामर्थ्यमतिशयवती चेष्टेति
पर्यायाः। वीर्यान्तरायक्षयोपशमात् प्रादुरस्ति वीर्य-बलविशेषस्तेन वीर्येण माद्यतीति वीर्य-
मदः, तस्य प्रतिक्षेपः संसारानुबन्धित्वचिन्तनात्, संसारानुबन्धी वीर्यमदः कषायरूपत्वात्,
वीर्यस्य चाशाश्वतत्वात्। तथाहि–बलिनोऽपि पुरुषाः क्षणेन निर्बलतामुपपन्ना दृश्यन्ते,
निर्बलाश्च बलवन्तः संस्कारवशादाशु जायन्ते, तथा व्याधि-जरा-मृत्युपद्रुतबलेषु चक्रवर्ति-
रिसीरिणोऽपि सीदन्ति ससुरासुराः, किमुतान्ये पृथग्जना इति? वीर्यमदादुपरमः
श्रेयान्। इतिशब्दो मदस्थानानामियत्तामावेदयति। मौलान्येतावन्ति, सूक्ष्मभेदास्त्वेषां
भूयांस इति॥

सम्प्रति सामान्येन सर्वमदस्थानेषु दोषानाविर्भावयन्नुपसंहरति—

**भा०—एभिर्जात्यादिभिरष्टाभिर्मदस्थानैर्मत्तः परात्मनिन्दाप्रशंसाभि-
रतः तीव्राहङ्कारोपहतमतिरिहामुत्र च अशुभफलमकुशलं कर्मोपचिनोति। उप-
दिश्यमानमपिच श्रेयो न प्रतिपद्यते। तस्मादेषां मदस्थानानां निग्रहो मार्दवं
धर्म इति॥ २॥**

टी०—एभिर्जात्यादिभिरित्यादि। उक्तलक्षणैर्जात्यादिभिर्मत्तः–अहंमानी परनिन्दा-
यामात्मप्रशंसायां च सक्तस्तीव्रेण–अतिशयवताऽहङ्कारेणोपहतबुद्धिर्मलीमसधिषण इह-
परलोकानुभवनीयं कर्मोपचिनोति–बध्नाति अकुशलं–पापमशुभफलम्, अकुशलमपि यद्
कदाचित् कुशलफलतया परिणमत इत्यशुभफलग्रहणम्। सम्यग्दर्शनादि मुक्तिसाधनं श्रेयः।
तच्चाख्यायमानमपि न प्रतिपद्यते–न श्रद्धत्ते। यत एतदेवं तस्मादेषां मदस्थानानां मार्दवं
निग्राहकं, तन्निग्रहाच्च धर्म इति॥

सम्प्रति मायाप्रतिपक्षमार्जवं लक्षयति—

**भा०—भावविशुद्धिरविसंवादनं चार्जवलक्षणम्। ऋजुभावः ऋजुकर्म**

१ 'प्रभृत्य' इति ङ-पाठः। २ 'लभेयमपर' इति ख-पाठः। ३ 'बन्धिचिन्तनात्' इति ग-पाठः।
४ 'विबलतां' इति-घ-पाठः। ५ 'कुशलतया' इति ङ-च-पाठः। ६ 'श्रद्धत्ते' इति ङ-पाठः।

वाऽऽर्जवम् । भावदोषवर्जनमित्यर्थः । भावदोषयुक्तो हि उपधिनिकृतिसंप्रयुक्त इहामुत्र चाशुभफलमकुशलं कर्मोपचिनोति । उपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्मादार्जवं धर्म इति ॥ ३ ॥

टी०—भावविशुद्धिरिति । भावाः–कायवाङ्मानसानि तेषां विशुद्धिः–अवक्रत-शाठ्यविरहितत्वम्, मनसोऽपि परिणामः कायवाचोरुपचर्यते तद्वृत्तानुवृत्तेः । मायावी तु सर्वाभिसन्धानपरतया सर्वाभिशङ्कनीयः कपटपटप्रच्छादितकायादिक्रियः[1] सुहृदेऽपि द्रुह्यति ।

तमेव योगानामविपर्यासं दर्शयति ऋजुभाव इत्यादिना । उपधिनिकृत्योर्विशेषः–उपधिः छद्म छादनं स्वाभिसन्धेः निकारो निकृतिः परबुद्धिपराभवद्वारेण स्वाभिसन्धेः साफल्या-पादनम् । अविसंवादनमविनाशनं अहिंसनमित्यनर्थान्तरम् । विनाशनं–परिणामान्तरापादनं विसंवादनमुच्यते । न विसंवादनमविसंवादनम्, परिणामान्तरानापादनमिति । तस्मादेवं-विधमार्जवं धर्मः ॥

अधुना लोभप्रतिपक्षं शौचलक्षणमाविर्भावयन्नाह —

**भा०—अलोभः शौचलक्षणम् । शुचिभावः शुचिकर्म वा शौचम् ॥**

टी०—अलोभ इति । अलोभः शौचलक्षणम् । लोभस्तु भावतः परमार्थतोऽ-भिष्वङ्गश्चेतनाचेतनमिश्रवस्तुविषयः । लोभदोषाच्च क्रोधमानमायाहिंसाऽनृतस्तेयाऽब्रह्मपरि-ग्रहार्जनमलजालेनोपचीयमान आत्मा भवत्यशुचिः । तत्रालोभो–लोभाभावो न कचिन्मम-त्वम् । अलोभस्य हि लोभदोषविनिर्मुक्तत्वान्निर्भयत्वम् । ततः स्वपरहिताभिप्रवृत्तिरि-त्येवदेव[2] शौचलक्षणं मुख्यमात्मनः ।

एतदेव स्पष्टयति—

**भा०—भावविशुद्धिर्निष्कल्मषता । धर्मसाधनमात्रास्वपि अनभिष्वङ्ग इत्यर्थः । अशुचिर्हि भावकल्मषसंयुक्त इहामुत्र चाशुभफलमकुशलं कर्मोप-चिनोति, उपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्माच्छौचं धर्म इति ॥ ४ ॥**

टी०—भावविशुद्धिर्ममत्वाभावो निःसङ्गता च, अपरद्रोहेणात्मार्थानुष्ठानं, निष्कल्म-षता–निर्मलता भाव( धर्म ? )साधनमात्राः-रजोहरण-मुखवस्त्रिका-चोलपट्टक-पात्रादिलक्षणाः तास्वप्यनभिष्वङ्गो विगतमूर्च्छ इत्यर्थः । यस्मादशुचिर्भावकल्मषसंयुक्तः, भावकल्मषं च लोभकषायस्तस्मात् तत्त्यागः । शौचं धर्म इति, शरीरमहाव्रण[3]प्रक्षालनादि द्रव्यशौचं, तच्च प्रासुकैषणीयेन जलादिना निर्लेपनिर्गन्धितापादनमागमोक्तेन विधिना कार्यमिति ॥

---

1 'कपटप्रच्छादित' इति ङ–पाठः । २ 'हिताहिताभि' इति ङ–पाठः । ३ 'महावर्ण' इति च–पाठः ।

श्रुतेनापि परिहार्यः श्रुतमद इति। लम्भनं लाभः—प्राप्तिरभिप्रेतफलस्य सत्कारसम्मानादेः नृप-तिसन्निधमूलस्वजनेभ्यो विज्ञान-तपो-ऽभिजन-शौर्यादाभिगमादहं लभेयं, अपरः प्रभ-वानपि न लभत इति स्वलाभेन माद्यति। तथा सकलजनस्याहमभिमतो न प्राप्तोऽहं, अयमपरो न कस्मैचिद् रोचते, वचनमप्यस्य नाद्रियन्तीति गर्वोऽप्ययं लाभमदः। स चैवं निगृहीतव्यो लाभान्तरायकर्मोदयादलाभो लाभान्तरायक्षयोपशमाच्च सत्कारादिलाभः, संसारे परि-भ्रमतो जीवस्य कादाचित्को न तु शाश्वतः, कर्माधीनत्वात्, संसारानुबन्धी चेति लाभम-दत्यागः श्रेयस्करः। यल्लब्धस्याप्तिरपि कर्मोदयजनितैव, संसारिणां च सुलभेति वाल्लभ्य-फलाभमदः परिवर्जनीय इति। वीर्यं—पराक्रमः शक्तिरुत्साहः सामर्थ्यमतिशयवती चेष्टेति पर्यायाः। वीर्यान्तरायक्षयोपशमात् प्रादुरस्ति वीर्य-बलविशेषस्तेन वीर्येण माद्यतीति वीर्य-मदः, तस्य प्रतिक्षेपः संसारानुबन्धित्वचिन्तनात्, संसारानुबन्धी वीर्यमदः कषायरूपत्वात्, वीर्यस्य चाशाश्वतत्वात्। तथाहि—बलिनोऽपि पुरुषाः क्षणेन निर्बलतामुपयान्तो दृश्यन्ते, निर्बलाश्च बलवन्तः संस्कारवशादाशु जायन्ते, तथा व्याधि-जरा-मृत्युप्रभृतिबलेषु चक्रवर्तिह-रिसीरिणोऽपि सीदन्ति ससुरासुराः, किमुतान्ये पृथग्जना इति? वीर्यमदाद् व्युपरमः श्रेयान्। इतिशब्दो मदस्थानानामियत्तामावेदयति। मौलान्येतावन्ति, सूक्ष्मभेदास्त्वेषां भूयांस इति॥

सम्प्रति सामान्येन सर्वमदस्थानेषु दोषानाविर्भावयन्नुपसंहरति—

भा०—एभिर्जात्यादिभिरष्टाभिर्मदस्थानैर्मत्तः परात्मनिन्दाप्रशंसाभि-रतः तीव्राहङ्कारोपहतमतिरिहामुत्र च अशुभफलमकुशलं कर्मोपचिनोति। उप-दिश्यमानमपिच श्रेयो न प्रतिपद्यते। तस्मादेषां मदस्थानानां निग्रहो मार्दवं धर्म इति ॥ २ ॥

टी०—एभिर्जात्यादिभिरित्यादि। उक्तलक्षणैर्जात्यादिभिर्मत्तः—अहंमानी परनिन्दा-यामात्मप्रशंसायां च सक्तस्तीव्रेण—अतिशयवताऽहङ्कारेणोपहतबुद्धिर्मलीमसधिषण इह-परलोकानुभवनीयं कर्मोपचिनोति—बध्नाति अकुशलं—पापमशुभफलम्, अकुशलमपि बद्धं कदाचित् कुशलफलतया परिणमत इत्यशुभफलग्रहणम्। सम्यग्दर्शनादि मुक्तिसाधनं श्रेयः। तच्चाख्यायमानमपि न प्रतिपद्यते—न श्रद्धत्ते। यत एतदेवं तस्मादेषां मदस्थानानां मार्दवं निग्राहकं, तन्निग्रहाच्च धर्म इति॥

सम्प्रति मायाप्रतिपक्षमार्जवं लक्षयति—

भा०—भावविशुद्धिरविसंवादनं चार्जवलक्षणम्। ऋजुभावः ऋजुकर्म

---

१ 'प्रभत्व' इति ङ-पाठः। २ 'लभेयमपर' इति घ-पाठः। ३ 'बन्धिचिन्तनात्' इति ग-पाठः।
४ 'विबलतां' इति-घ-पाठः। ५ 'कुशलतया' इति ङ-च-पाठः। ६ 'श्रद्धते' इति ङ-पाठः।

ग्राम्यमग्राम्यम् । पदार्थांश्च विवक्षितानभिव्याहरतीति पदार्थाभिव्याहारम्, अग्राम्यत्वात् पदार्थानभिव्याहरतीति । विद्वज्जनाभिमतानित्यग्राम्यपदार्थाभिव्याहारं, सीभरं विकत्थनं विमर्दकरं, न सीभरमसीभरं आश्वेव प्रस्तुतार्थपरिसमाप्तिकारि । अरागद्वेषयुक्तमिति मायालोभाभ्यां कोपमानाभ्यां चायुक्तम् ॥

**भा०—सूत्रमार्गानुसारप्रवृत्तार्थमर्थ्यमर्थिजनभावग्रहणसमर्थमात्मपरार्थानुग्राहकं निरुपधं देशकालोपपन्नमनवद्यमर्हच्छासनप्रशस्तं यतं मितं याचनप्रच्छनं प्रश्नव्याकरणमिति सत्यधर्मः ॥ ५ ॥**

टी०—सूचनात् सूत्रं–गणधरप्रत्येकबुद्धस्थविरग्रथितं तस्य यो मार्गः–उत्सर्गापवादलक्षणः तदनुसारेण प्रवृत्तार्थ–प्रस्तुतोऽर्थात् अनपेतं अर्थ शुश्रूषुर्जनोऽर्थी तस्य भावः–चित्तं तद्ग्रहणसमर्थं–तदावर्जनसमर्थम् । तदेवंविधमात्मपरानुग्रहसमर्थं भवति । निरुपधं मायारहितम् । उपधा–भावदोषः । देशे यद् यत्र यस्यार्थस्य प्रसिद्धं तद्देशोपपन्नमविरुद्धम्, कालोपपन्नं यद् यत्र काले भण्यमानं न परस्योद्वेगकारि भवति, प्रस्तावापेक्षमित्यर्थः । अनवद्यम्–अगर्हितम् । अर्हच्छासनं द्वादशाङ्गं प्रवचनं तत्र तेन वा प्रशस्तम् अनुज्ञातं यत् तत् प्रयत्नसहितो मुखवसनाच्छादितवदनविवरः पाणितलस्थगितमुखो वा[2] । मितमिति यावता विवक्षितकार्यप्रतिपत्तिस्तावदेव, न त्वपरिमितं, याचनमभीक्ष्णावग्रहादिविषयं, प्रच्छनमुत्पन्नसन्देहस्य मार्गादिसूत्रार्थविषयं प्रश्नव्याकरणमन्येन पृष्टः प्रवचनाविरुद्धं व्याकरोतीति । तदेवमनृतपरुषाद्यपोह्य तद्विपर्ययेण सत्यमन्वेष्यमिति । याचनप्रच्छनप्रश्नव्याकरणेषु च त्रिष्वेव प्राधान्येन साधोर्वाग्व्यापारो, नान्यत्र निष्प्रयोजनत्वात्, स्वाध्यायवाचनाद्यपि न कर्तव्यमिति चेत्, न तत्, आत्मसंस्कारार्थो वाचनादिर्यत्नः । संस्कृतात्मा च त्रिष्वेव याचनादिषु व्याप्रियत इति । अथवा मुमुक्षोर्मुक्त्यर्थे यत्ने यदुपकारकं वचनं न तस्यास्ति निषेध इति ॥

सम्प्रति संयमोऽभिधीयते—

**भा०—योगनिग्रहः संयमः । स[3] सप्तदशविधः । तद्यथा—पृथिवीकायिकसंयमः, अप्कायिकसंयमः, तेजस्कायिकसंयमः, वायुकायिकसंयमः, वनस्पतिकायिकसंयमः, द्वीन्द्रियसंयमः, त्रीन्द्रियसंयमः, चतुरिन्द्रियसंयमः, पञ्चेन्द्रियसंयमः ॥**

संयमस्य सप्तदशविधत्वम्

टी०—योगनिग्रहः संयम इति । योगा–मनोवाक्कायलक्षणास्तेषां निग्रहः–प्रवचनोक्तविधिना नियमः एवमेव गन्तव्यमेवं स्थातव्यमेवं चिन्तयितव्यं एवं भाषितव्यमिति एष

---

१ 'तार्थं तदन्यतममर्थं' इति ग-पाठः । २ अत्र पाठप्रपातो न वेति विचार्यताम् । ३ 'सप्त०' इति ग-पाठः ।

अवसरप्राप्तं पञ्चमं धर्मं निर्दिदिक्षुराह—

भा०—सत्यर्थे भवं वचः सत्यं, सद्भ्यो वा हितं सत्यम्, तदननृतम्, अपरुषमपिशुनमनसभ्यमचपलमनाविलमविरलमसम्भ्रान्तं मधुरमभिजातमसन्दिग्धं स्फुटमौदार्ययुक्तमग्राम्यपदार्थाभिव्याहारमसीभरमरागद्वेषयुक्तम् ॥

टी०—सन्-विद्यमानोऽर्थोऽभिधेयो तस्मिन् सत्यर्थे भवं, दिगादित्वात् यत्, यथा-ऽवस्थितार्थप्रतिपत्तिकारि सत्यम्[1] ॥ नन्वेवं सति लुब्धकस्य मृगाख्यानमपि सत्यं स्यात्, किं (एवं ?) तर्हि सच्छब्दः प्रशंसार्थः । प्रशस्तोऽर्थः सन् न पापहेतुः तस्मिन् सति भवं सत्यं, पक्षान्तरसमाश्रयणं वा, सद्भ्यो वा हितं सत्यमिति, सन्तो जीवा एव गृह्यन्ते, हितशब्दोपादानात् । न ह्यजीवसम्बन्धि किञ्चिद्धितमस्ति, अतोऽप्रशस्तार्थव्यावृत्तिः । सामान्येन वा जीवाजीवेभ्यो हितम् । अनेकपर्यायकलापभाजोऽर्थाः । तेषां यथाऽवस्थितविवक्षितपर्यायप्रतिपादनं सत्यं, एतदेव तेभ्यो हितं यद् यथार्थप्रतिपादनमिति, तस्येदानीं सत्यवचनस्य विशेषगुणानाचष्टे-तदनृतमिति । अनृतं-भूतनिह्नवः अभूतोद्भावनं विपरीतकटुकसावद्यादिवचनं, नानृतम् । ननु च सत्यपर्याय एवायम् । सत्यमेतत्, तथापि वक्ष्यमाणोत्तरगुणप्राप्त्यर्थं पुनर्वचनम् । परुषं-रूक्षं स्नेहरहितं (निष्ठुरं) परपीडाकारि । न परुषमपरुषम् । तत्राविनयेषु माध्यस्थ्यभावना, विनयेषु तु सौम्या वागपरुषम्, पिशुनं-प्रीतिविच्छेदकारि द्वयोर्बहूनां वा सत्यासत्यदोषाख्यानात् । न पिशुनमपिशुनम् । सभार्हं-सभ्यं, न सभार्हमसभ्यं-सभासु विगर्हितं विदग्धसभासु गुह्यप्रकटनामोद्घाटनवचनवत् । तस्य प्रतिषेधो नासभ्यमनसभ्यम् । चपलः-अनालोचितभाषी, तद्वचनमपि चपलं, तच्च दोषाक्षेपि भवति । आविलं-कलुषं, कषायवशवर्तिनो वचनं न आविलमनाविलं, प्रसन्नवचनमितियावत् । विरलं-विश्रम्यभाषणम् । सविच्छेदत्वाच्च श्रोतुरनादरवाक्यव्याहरणाच्च श्रवणवैरस्यं करोति । न विरलमविरलमनुसन्ततमिति । सम्भ्रान्तं[2] तु त्रासकरं, न सम्भ्रान्तमसम्भ्रान्तं अतित्वरितं वा सम्भ्रान्तमनुच्छ्वसन्[3] भाषते च यत् अव्यक्तवर्णपदलोपत्वादप्रत्यायकं वा श्रुतिविरसाक्षरमप्ररोचकमेव स्यात् । मधुरमिति प्रसन्नपदघटितं श्रुतिसुखं, सुखावबोधार्थं च अनभिमानं[4]-विनयसहितं . अभिजातं-सप्रश्रयं सविनयं सन्दिग्धम्-आकाङ्क्षाविनिवर्तने अक्षमं, तद्विपरीतमसन्दिग्धमाकाङ्क्षाविच्छेदकारि, निराकाङ्क्षमिति । अस्फुटम् अनिश्चितार्थ[5]त्वादालूनविशीर्णप्रायं, (वि)निश्चितार्थं तु स्फुटम् । अनौदार्यम्-अत्यौद्धत्यप्रदीपकं, तद्विपरीतमौदार्यम् । अप्रधानार्थं अनौदार्यं उदारार्थप्रतिबद्धत्वादुदारं तद्भाव औदार्यं तद्युक्तमौदार्ययुक्तम् । विद्वज्जनमनोऽनुरञ्जनेऽसमर्थं ग्राम्यं, न

---

१ 'व्याप्त्यर्थं' इति च-पाठः । २ 'न्तमुत्रास' इति च-पाठः । ३ 'अनुच्छ्वसं' इति ङ-पाठः ।
४ 'अनभिमतमविनय' इति च-पाठः । ५ 'मविनिश्चिता' इति ङ-पाठः ।

ग्राम्यमग्राम्यम्। पदार्थांश्च विवक्षितानभिव्याहरतीति पदार्थाभिव्याहारम्, अग्राम्यत्वात् पदार्थानभिव्याहरतीति। विद्वज्जनाभिमतानित्यग्राम्यपदार्थाभिव्याहारं, सीभरं विकत्थनं विमर्दकरं, न सीभरमसीभरं आश्वेव प्रस्तुतार्थपरिसमाप्तिकारि। अरागद्वेषयुक्तमिति मायालोभाभ्यां कोपमानाभ्यां चायुक्तम्॥

भा०—सूत्रमार्गानुसारप्रवृत्तार्थमर्थ्यमर्थिजनभावग्रहणसमर्थमात्मपरार्थानुग्राहकं निरुपधं देशकालोपपन्नमनवद्यमर्हच्छासनप्रशस्तं यतं मितं याचनप्रच्छनं प्रश्नव्याकरणमिति सत्यधर्मः॥ ५॥

टी०—सूचनात् सूत्रं-गणधरप्रत्येकबुद्धस्थविरग्रथितं तस्य यो मार्गः-उत्सर्गापवादलक्षणः तदनुसारेण प्रवृत्तार्थं-प्रस्तुतार्थात् अनपेतं अर्थ्यं शुश्रूषुर्जनोऽर्थी तस्य भावः-चित्तं तद्ग्रहणसमर्थं-तदावर्जनसमर्थम्। तदेवंविधमात्मपरानुग्रहसमर्थं भवति। निरुपधं मायारहितम्। उपधा-भावदोषः। देशे यद् यत्र यस्यार्थस्य प्रसिद्धं तद्देशोपपन्नमविरुद्धम्, कालोपपन्नं यद् यत्र काले भण्यमानं न परस्योद्वेगकारि भवति, प्रस्तावापेक्षमित्यर्थः। अनवद्यम्-अगर्हितम्। अर्हच्छासनं द्वादशाङ्गं प्रवचनं तत्र तेन वा प्रशस्तम् अनुज्ञातं यत् तत् प्रयत्नसहितो मुखवसनाच्छादितवदनविवरः पाणितलस्थगितमुखो वा[1]। मितमिति यावता विवक्षितकार्यप्रतिपत्तिस्तावदेव, न त्वपरिमितं, याचनमभीक्ष्णावग्रहादिविषयं, प्रच्छनमुत्पन्नसन्देहस्य मार्गादिसूत्रार्थविषयं प्रश्नव्याकरणमन्येन पृष्टः प्रवचनाविरुद्धं व्याकरोतीति। तदेवमनृतपरुषाद्यपोह्य तद्विपर्ययेण सत्यमन्वेष्यमिति। याचनप्रच्छनप्रश्नव्याकरणेषु च त्रिष्वेव प्राधान्येन साधोर्वाग्व्यापारो, नान्यत्र निष्प्रयोजनत्वात्, स्वाध्यायवाचनाद्यपि न कर्तव्यमिति चेत्, न तत्, आत्मसंस्कारार्थो वाचनादिर्यत्नः। संस्कृतात्मा च त्रिष्वेव याचनादिषु व्याप्रियत इति। अथवा मुमुक्षोर्मुक्त्यर्थे यत्ने यदुपकारकं वचनं न तस्यास्ति निषेध इति॥

सम्प्रति संयमोऽभिधीयते—

भा०—योगनिग्रहः संयमः। स[2] सप्तदशविधः। तद्यथा—पृथिवीकायिकसंयमः, अप्कायिकसंयमः, तेजस्कायिकसंयमः, वायुकायिकसंयमः, वनस्पतिकायिकसंयमः, द्वीन्द्रियसंयमः, त्रीन्द्रियसंयमः, चतुरिन्द्रियसंयमः, पञ्चेन्द्रियसंयमः॥

संयमस्य सप्तदशविधत्वम्

टी०—योगनिग्रहः संयम इति। योगा-मनोवाक्कायलक्षणास्तेषां निग्रहः-प्रवचनोक्तविधिना नियमः एवमेव गन्तव्यमेवं स्थातव्यमेवं चिन्तयितव्यं एवं भाषितव्यमिति एष

१ 'तार्थं तदन्यतममर्थं' इति ग-पाठः। २ अत्र पाठप्रपातो न वेति विचार्यताम्। ३ 'सप्त०' इति ग-पाठः।

अवसरप्राप्तं पञ्चमं धर्माङ्गं निर्दिदिक्षुराह—

भा०—सत्यर्थे भवं वचः सत्यं, सद्भ्यो वा हितं सत्यम्, तदननृतम्, अपरुषमपिशुनमनसभ्यमचपलमनाविलमविरलमसम्भ्रान्तं मधुरमभिजातमस-न्दिग्धं स्फुटमौदार्ययुक्तमग्राम्यपदार्थाभिव्याहारमसीभरमरागद्वेषयुक्तम् ॥

टी०—सन्-विद्यमानोऽर्थोऽनेकधर्मा तस्मिन् सत्यर्थे भवं, दिगादित्वात् यत्, यथा-ऽवस्थितार्थप्रतिपत्तिकारि सत्यम् ॥ नन्वेवं सति लुब्धकाय मृगाख्यानमपि सत्यं स्यात्, किं (एवं ?) तर्हि सच्छब्दः प्रशंसार्थः । प्रशस्तोऽर्थः सन् न पापहेतुः तस्मिन् सति भवं सत्यं, पक्षान्तरसमाश्रयणं वा, सद्भ्यो वा हितं सत्यमिति, सन्तो जीवा एव गृह्यन्ते, हितशब्दो-पादानात्। न ह्यजीवसम्बन्धि किञ्चिद्धितमस्ति, अतोऽप्रशस्तार्थव्यावृत्तिः । सामान्येन वा जीवाजीवेभ्यो हितम्। अनेकपर्यायकलापभाजोऽर्थाः । तेषां यथाऽवस्थितविवक्षितपर्यायप्रति-पादनं सत्यं, एतदेव तेभ्यो हितं यद् यथार्थप्रतिपादनमिति, तस्येदानीं सत्यवचनस्य विशेष-गुणानाचष्टे-तदनृतमिति । अनृतं-भूतनिह्नवः अभूतोद्भावनं विपरीतकटुकसावद्यादिवचनं, नानृतम्। ननु च सत्यपर्याय एवायम्। सत्यमेतत्, तथापि वक्ष्यमाणोत्तरगुणप्राप्त्यर्थं पुनर्वच-नम्। परुषं-रूक्षं स्नेहरहितं (निष्ठुरं) परपीडाकारि । न परुषमपरुषम् । तत्राविनयेषु माध्य-स्थ्यभावना, विनयेषु तु सौम्या वागपरुषम्, पिशुनं-प्रीतिविच्छेदकारि द्वयोर्बहूनां वा सत्या-सत्यदोषाख्यानात्। न पिशुनमपिशुनम् । सभार्हं-सभ्यं, न सभार्हमसभ्यं-सभासु विगर्हितं विदग्धसभासु गुह्यप्रकटनामोद्घाटनवचनवत् । तस्य प्रतिषेधो नासभ्यमनसभ्यम् । चपलः-अनालोचितभाषी, तद्वचनमपि चपलं, तच्च दोषाक्षेपि भवति । आविलं-कलुषं, कषायवशव-र्तिनो वचनं न आविलमनाविलं, प्रसन्नवचनमितियावत्। विरलं-विश्रम्यभाषणम् । सविच्छे-दत्वाच्च श्रोतुरनादरवाक्यव्याहरणाच्च[1] वर्णवैरस्यं करोति । न विरलमविरलमनुसन्ततमिति । सम्भ्रान्तं[2] तु त्रासकरं, न सम्भ्रान्तमसम्भ्रान्तं अतित्वरितं वा सम्भ्रान्तमनुच्छ्वसन्[3] भाषते च यत् अव्यक्तवर्णपदलोपत्वादप्रत्यायकं वा श्रुतिविरसाक्षरमप्ररोचकमेव स्यात् । मधुरमिति प्रसन्न-पदघटितं श्रुतिसुखं, सुखावबोधार्थं च अनभिमानं[4]-विनयसहितं अभिजातं-सप्रश्रयं सविनयं सन्दिग्धम्-आकाङ्क्षाविनिवर्तने अक्षमं, तद्विपरीतमसन्दिग्धमाकाङ्क्षाविच्छेदकारि, निराकाङ्क्षमिति । अस्फुटम् अनिश्चितार्थत्वादालूनविशीर्णप्रायं, (वि)निश्चितार्थं[5] तु स्फुटम् । अनौदार्यम्-अत्यौद्धत्यप्रदीपकं, तद्विपरीतमौदार्यम् । अप्रधानार्थं अनौदार्यं उदारार्थप्रति-बद्धत्वादुदारं तद्भाव औदार्यं तद्युक्तमौदार्ययुक्तम् । विद्वज्जनमनोऽनुरञ्जनेऽसमर्थं ग्राम्यं, न

१ 'व्याप्त्यर्थं' इति च-पाठः । २ 'न्तमुत्रास' इति च-पाठः । ३ 'अनुच्छ्वसं' इति ङ-पाठः ।
४ 'अनभिमतमविनय' इति च-पाठः । ५ 'मविनिश्चिता' इति ङ-पाठः ।

ग्राम्यमग्राम्यम् । पदार्थांश्च विवक्षितानभिव्याहरतीति पदार्थाभिव्याहारम्, अग्राम्यत्वात् पदार्थानभिव्याहरतीति । विद्वज्जनाभिमतानित्यग्राम्यपदार्थाभिव्याहारं, सीभरं विकत्थनं विमर्दकरं, न सीभरमसीभरं आश्वेव प्रस्तुतार्थपरिसमाप्तिकारि । अरागद्वेषयुक्तमिति मायालोभाभ्यां कोपमानाभ्यां चायुक्तम् ॥

**भा०—सूत्रमार्गानुसारप्रवृत्तार्थमर्थ्यमर्थिजनभावग्रहणसमर्थमात्मपरार्थानुग्राहकं निरुपधं देशकालोपपन्नमनवद्यमर्हच्छासनप्रशस्तं यतं मितं याचनप्रच्छनं प्रश्नव्याकरणमिति सत्यधर्मः ॥ ५ ॥**

टी०—सूचनात् सूत्रं—गणधरप्रत्येकबुद्धस्थविरग्रथितं तस्य यो मार्गः—उत्सर्गापवादलक्षणः तदनुसारेण प्रवृत्तार्थ—प्रस्तुतार्थात् अनपेतं अर्थं शुश्रूषुर्जनोऽर्थी तस्य भावः—चित्तं तद्ग्रहणसमर्थं—तदावर्जनसमर्थम् । तदेवंविधमात्मपरानुग्रहसमर्थं भवति । निरुपधं मायारहितम् । उपधा—भावदोषः । देशे यद् यत्र यस्यार्थस्य प्रसिद्धं तद्देशोपपन्नमविरुद्धम्, कालोपपन्नं यद् यत्र काले भण्यमानं न परस्योद्वेगकारि भवति, प्रस्तावापेक्षमित्यर्थः । अनवद्यम्—अगर्हितम् । अर्हच्छासनं द्वादशाङ्गं प्रवचनं तत्र तेन वा प्रशस्तम् अनुज्ञातं यत् तत् प्रयत्नसहितो मुखवसनाच्छादितवदनविवरः पाणितलस्थगितमुखो वा[1] । मितमिति यावता विवक्षितकार्यप्रतिपत्तिस्तावदेव, न त्वपरिमितं, याचनमभीक्ष्णावग्रहादिविषयं, प्रच्छनमुत्पन्नसन्देहस्य मार्गादिसूत्रार्थविषयं प्रश्नव्याकरणमन्येन पृष्टः प्रवचनाविरुद्धं व्याकरोतीति । तदेवमनृतपरुषाद्यपोह्य तद्विपर्ययेण सत्यमन्वेष्यमिति । याचनप्रच्छनप्रश्नव्याकरणेषु च त्रिष्वेव प्राधान्येन साधोर्वाग्व्यापारो, नान्यत्र निष्प्रयोजनत्वात्, स्वाध्यायवाचनाद्यपि न कर्तव्यमिति चेत्, न तत्, आत्मसंस्कारार्थो वाचनादिर्यत्नः । संस्कृतात्मा च त्रिष्वेव याचनादिषु व्याप्रियत इति । अथवा मुमुक्षोर्मुक्त्यर्थे यत्ने यदुपकारकं वचनं न तस्यास्ति निषेध इति ॥

सम्प्रति संयमोऽभिधीयते—

**भा०—योगनिग्रहः संयमः । स[3] सप्तदशविधः । तद्यथा—पृथिवीकायिकसंयमः, अप्कायिकसंयमः, तेजस्कायिकसंयमः, वायुकायिकसंयमः, वनस्पतिकायिकसंयमः, द्वीन्द्रियसंयमः, त्रीन्द्रियसंयमः, चतुरिन्द्रियसंयमः, पञ्चेन्द्रियसंयमः ॥**

संयमस्य सप्तदशविधत्वम्

टी०—योगनिग्रहः संयम इति । योगा—मनोवाक्कायलक्षणास्तेषां निग्रहः—प्रवचनोक्तविधिना नियमः एवमेव गन्तव्यमेवं स्थातव्यमेवं चिन्तयितव्यं एवं भाषितव्यमिति एष

---

1 'वार्थं तदन्यतममर्थं' इति ग-पाठः । २ अत्र पाठप्रपातो न वेति विचार्यताम् । ३ 'सप्त०' इति ग-पाठः ।

संयमोऽभिधीयते, स सप्तदशविध इति। स इत्युपसंहारः संयमः सप्तदशप्रकारो भवति। तद्यथेत्यनेन तान् प्रकारानभिमुखीकरोति। पृथिवीकायिकसंयमः पृथिवी कायः-शरीरं येषां ते पृथिवीकायाः। कथं पृथिवीकायिकाः? उच्यते—पृथिवीकायशब्दस्य जातिशब्दत्वाद् भवति मत्वर्थीयः कृष्णसर्पवल्मीक इति यथा। अथवा धारणाद् भवन्ति "इङ्धार्योः शत्रकृच्छ्रिणि" ( पा० अ० ३, पा० २, सू० १३० ) इति। पृथिवीकायिकजातौ जीवेषु संयमः-सम्यग् यमः-उपरमो निवृत्तिरित्यर्थः। ये जीवाः पृथिवीशरीराः तेषां संघट्ट-परितापनोपद्रवणानि मनो-वाक्-कायैः कृतकारितानुमतिभिश्च परिहरतीत्यर्थः। एवं सर्वत्र यावत् पञ्चेन्द्रियसंयमः।

पृथ्वीकायिकशब्दस्य सिद्धिः

भा०—प्रेक्ष्यसंयमः, उपेक्ष्यसंयमः, अपहृत्यसंयमः, प्रमृज्यसंयमः, कायसंयमः, वाक्संयमः, मनःसंयमः, उपकरणसंयम इति संयमो धर्मः ॥ ६ ॥

टी०—प्रेक्ष्येति। प्रेक्ष्यसंयम इत्यत्र क्रियापदाध्याहारः। प्रेक्ष्य क्रियामाचरन् संयमेन युज्यते। प्रेक्ष्येति चक्षुषा दृष्ट्वा स्थण्डिलं बीजजन्तुहरितादिरहितं पश्चादूर्ध्वनिषदनत्वग्वर्तनस्थानानि विदधीतेत्येवमाचरतः संयमो भवति। उपेक्ष्यसंयम इति व्यापार्याऽव्यापार्य चेत्यर्थः। एवं च संयमो भवति, साधून् व्यापारयतः प्रवचनविहितासु क्रियासु संयम इति व्यापारणमेवोपेक्षणं गृहस्थान् स्वक्रियासु अव्यापारयत उपेक्षमाणस्य—औदासीन्यं भजतः संयमो भवति। अपहृत्यसंयम इति। प्रोज्झ्य—परिवर्ज्य संयमं लभते, वस्त्रपात्राद्यतिरिक्तमनुपकारकं चरणस्य वर्जयतः संयमलाभः, भक्तपानादि वा संसक्तं विधिना परित्यजत इति। प्रमृज्य संयम इति प्रेक्षिते स्थण्डिले रजोहृत्या प्रमार्जनमनुविधाय स्थानादि कार्यं पथि वा गच्छतः सचित्ताचित्तमिश्रपृथिवीकायरजोऽनुरञ्जितचरणस्य स्थण्डिलात् स्थण्डिलं सङ्क्रामतोऽस्थण्डिलाद् वा स्थण्डिलं प्रमृज्य चरणौ संयमभावत्वमगार्यादिरहितेऽन्यथा त्वप्रमार्जयत एव संयमः। कायसंयम इति। धावन-वल्गन-प्लवनादिनिवृत्तिः, शुभक्रियासु च प्रवृत्तिः। वाक्संयमो हिंस्र-परुषादिनिवृत्तिः, शुभभाषायां च प्रवृत्तिः। मनःसंयमोऽभिद्रोहाऽभिमानेर्ष्यादिनिवृत्तिः, धर्मध्यानादिषु च प्रवृत्तिः। उपकरणसंयम इत्यजीवकायसंयमः। अजीवकायैश्च पुस्तकादिः, तत्र यदा ग्रहणधारणशक्तिसम्पन्नाजोऽभूवन् पुरुषाः दीर्घायुषश्च तदा नासीत् प्रयोजनं पुस्तकैः, दुष्षमानुभावात् तु परिहीनैर्ग्रहणधारणादिभिरस्ति निर्युक्त्यादिपुस्तकग्रहणानुज्ञेत्येवं यथा कालमपेक्ष्यासंयमः संयमो वा भवतीत्येवं संयमो धर्मः ॥

पुस्तकग्रहणे हेतुः

१ 'यत्रोपरमः' इति ग-पाठः। २ 'निपद्यत्वेन' इति ङ-पाठः। ३ 'क्षणं महर्गं गृहस्था' इति ग-पाठः। ४ 'एष' इति च-पाठः। ५ 'कायसंयमश्च' इति ग-पाठः।

सम्प्रति तपः प्रस्तावायातमुच्यते—

भा०—तपो द्विविधम् । तत् परस्ताद् (अ० ९, सू० १९-२०) वक्ष्यते[1] । प्रकीर्णकं चेदमनेकविधम् ।

टी०—तपो द्विविधमित्यादि । तपतीति[2] तपः । कर्तर्यसुन् वा । संयमात्मनः शेषाशयविशोधनार्थं बाह्याभ्यन्तरतपनं[3] तपः । शरीरेन्द्रियतापनात् कर्मनिर्दहनाच्च तपः । अपर आह—" विशेषेण कायमनस्तापविशेषात् तपः " । द्विविधमिति बाह्यमाभ्यन्तरं वा (च) । बाह्यमिति बाह्यद्रव्यापेक्षत्वात् तीर्थिकगृहस्थादिकार्यत्वाच्च । आभ्यन्तरं त्वन्यतीर्थिकानभ्यस्तत्वादन्तःकरणव्यापारस्य प्राधान्याद् बाह्यद्रव्यानपेक्षत्वाच्च । अन्ये त्वाहुः—"परप्रत्यक्षं बाह्यम् । स्वप्रत्यक्षमाभ्यन्तरम्" । अथवा आतापनादिः कायक्लेशस्तपो बहिर्लक्ष्यत इति बाह्यम् । अनशनादिभ्यो[ वा तेभ्यो ]ऽपि च बहिस्तरां वर्तत इति तदुपलक्षितं बाह्यम् । नैवं प्रायश्चित्तादि । तत् परस्ताद्—उपरिष्टाद् वक्ष्यते—अनशनावमौदार्यादि प्रायश्चित्तविनयादि च यथाक्रमम् । इह त्वशून्यार्थं पुरुषविशेषचरितं प्रकीर्णकं कालाहारादिनियतमनेकविधं तद्यथेत्यादिना दर्शयति—

तपोलक्षणे मतान्तरम्

भा०—तद्यथा—यववज्रमध्ये चन्द्रप्रतिमे द्वे । कनकरत्नमुक्तावल्यस्तिस्रः । सिंहविक्रीडिते द्वे ॥

टी०—यववज्रमध्ये चन्द्रप्रतिमे द्वे इति । मध्यशब्दः प्रत्येकमभिसम्बध्यते—यवमध्या[4] वज्रमध्या[5] च । चन्द्रप्रतिमे इति चन्द्रतुल्ये । यथा चन्द्रस्य कलावृद्धिः प्रतिदिनमेवं भिक्षाकवलवृद्धिः । यथा चन्द्रस्य हानिः प्रतिदिनं तथा भिक्षाकवलहानिरिति । तत्र यवमध्या[6] चन्द्रप्रतिमा शुक्लप्रतिपदारम्भादमावास्यान्ता, प्रतिपद आरभ्य यथा चन्द्रस्य कलावृद्धिः (तथा भिक्षाकवलवृद्धिः), कवलवृद्धिर्वा यावत् पौर्णमास्यां पञ्चदश कवलाः । ततः कृष्णप्रतिपद्यपि पञ्चदशैव । एवमेकैककवलहान्या यावदमावास्यायामेकः कवल इत्येषा यवमध्या ।

वज्रमध्या कृष्णप्रतिपदारम्भा, कृष्णप्रतिपदि पञ्चदशकवलानभ्यवहरति । तत्राप्येकैककवलहानिर्यावदमावास्यायामेकः कवलः, शुक्लप्रतिपद्यप्येक एवेति । द्वितीयादिष्वेकैकवृद्धिर्यावत् पौर्णमास्यां पञ्चदशेत्येषा वज्रमध्या ।

---

१ 'वक्ष्यति' इति ग-पाठः । २ 'तप्यतीति' इति ग-पाठः । ३ 'तापनं तपः' इति ङ-पाठः । ४-५ 'यवस्येव मध्ये स्थूलस्य पर्यन्तभागयोस्तु तनुकस्य मध्यं यस्याः सा यवमध्या, वज्रस्येव मध्ये तनुकस्य पर्यन्तयोस्तु स्थूलस्य मध्यं यस्याः सा वज्रमध्या' इति श्रीनेमिचन्द्रसूरिवरविरचितस्य प्रवचनसारोद्धारस्य श्रीसिद्धसेनसूरिकृतटीकायां (४४०तमे पत्राङ्के) ।

६ यवमध्यां चन्द्रप्रतिमामुद्दिश्य प्रोक्तम्—

" एकैकां वर्धयेद् भिक्षां, शुक्ले कृष्णे च ह्रापयेत् ।
भुञ्जीत नामावास्याया-मेष चान्द्रायणो विधिः ॥"

संयमोऽभिधीयते, स सप्तदशविध इति। स इत्थंरूपः संयमः सप्तदशप्रकारो भवति। तद्यथेत्यनेन तान् प्रकारानभिमुखीकरोति। पृथिवीकायिकसंयमः पृथिवी कायः-शरीरं येषां ते पृथिवीकायाः। एवं पृथिवीकायिकाः? उच्यते—

पृथ्वीकायिकशब्दस्य सिद्धिः

पृथिवीकायशब्दस्य जातिशब्दत्वात् भवतीह मत्वर्थीयः कृष्णसर्पवल्मीक इति यथा। अथवा शत्रन्ताद् भवति "इङ्धार्योः शत्रकृच्छ्रिणि" (पा० अ० ३, पा० २, सू० १३०) इति। पृथिवीकायिकानां जीवानां संयमः-सम्यग् यमः-उपरमो निवृत्तिरित्यर्थः। ये जीवाः पृथिवीशरीराः तेषां संघट्ट-परितापनापद्रावणानि मनो-वाक्-कायैः कृतकारितानुमतिभिश्च परिहरतीत्यर्थः। एवं सर्वत्र यावत् पञ्चेन्द्रियसंयमः।

भा०—प्रेक्ष्यसंयमः, उपेक्ष्यसंयमः, अपहृत्यसंयमः, प्रमृज्यसंयमः, कायसंयमः, वाक्संयमः, मनःसंयमः, उपकरणसंयम इति संयमो धर्मः ॥ ६ ॥

टी०—प्रेक्ष्येति। प्रेक्ष्यसंयम इत्यत्र क्रियापदाध्याहारः। प्रेक्ष्य क्रियामाचरन् संयमेन युज्यते। प्रेक्ष्येति चक्षुषा दृष्ट्वा स्थण्डिलं बीजजन्तुहरितादिरहितं पश्चादूर्ध्वनिषद्यात्वग्वर्तनस्थानानि विदधीतेत्येवमाचरतः संयमो भवति। उपेक्ष्यसंयम इति व्यापार्याऽव्यापार्य चेत्यर्थः। एवं च संयमो भवति, साधून् व्यापारयतः प्रवचनविहितासु क्रियासु संयम इति व्यापारणमेवोपेक्षणं गृहस्थान् स्वक्रियासु अव्यापारयत उपेक्षमाणस्य-औदासीन्यं भजतः संयमो भवति। अपहृत्यसंयम इति। प्रोज्झ्य-परिवर्ज्य संयमं लभते, वस्त्रपात्राद्यतिरिक्तमनुपकारकं चरणस्य वर्जयतः संयमलाभः, भक्तपानादि वा संसक्तं विधिना परित्यजत इति। प्रमृज्य संयम इति प्रेक्षिते स्थण्डिले रजोहृत्या प्रमार्जनमनुविधाय स्थानादि कार्यं पथि वा गच्छतः सचित्ताचित्तमिश्रपृथिवीकायरजोऽनुरञ्जितचरणस्य स्थण्डिलात् स्थण्डिलं सङ्क्रामतोऽस्थण्डिलाद् वा स्थण्डिलं प्रमृज्य चरणौ संयमभावस्तमगार्यादिरहितेऽन्यथा त्वप्रमार्जयत एव संयमः। कायसंयम इति। धावन-वल्गन-प्लवनादिनिवृत्तिः, शुभक्रियासु च प्रवृत्तिः। वाक्संयमो हिंस्र-परुषादिनिवृत्तिः, शुभभाषायां च प्रवृत्तिः। मनःसंयमोऽभिद्रोहा-ऽभिमानेर्ष्यादिनिवृत्तिः, धर्मध्यानादिषु च प्रवृत्तिः। उपकरणसंयम इत्यजीवकायसंयमः।

पुस्तकग्रहणे हेतुः

अजीवकायेषु पुस्तकादिः, तत्र यदा ग्रहणधारणशक्तिसम्पन्नाजोऽभूवन् पुरुषाः दीर्घायुषश्च तदा नासीत् प्रयोजनं पुस्तकैः, दुष्षमानुभावात् तु परिहीनैर्ग्रहणधारणादिभिरस्ति निर्युक्त्यादिपुस्तकग्रहणानुज्ञेत्येवं यथा कालमपेक्ष्यासंयमः संयमो वा भवतीत्येवं संयमो धर्मः ॥

---

१ 'यत्रोपरमः' इति ग-पाठः। २ 'निषद्यत्वेन' इति ङ-पाठः। ३ 'क्षणं प्रहणं गृहस्था' इति ग-पाठः। ४ 'एव' इति च-पाठः। ५ 'कायसंयमश्च' इति ग-पाठः।

सम्प्रति तपः प्रस्तावायातमुच्यते—

भा०—तपो द्विविधम् । तत् परस्ताद् ( अ० ९, सू० १९-२० ) वक्ष्यते[1] । प्रकीर्णकं चेदमनेकविधम् ।

टी०—तपो द्विविधमित्यादि । तपतीति[2] तपः । कर्तर्यसुन् वा । संयमात्मनः शेषाशयविशोधनार्थं बाह्याभ्यन्तरतपनं[3] तपः । शरीरेन्द्रियतापनात् कर्मनिर्दहनाच्च तपः । अपर आह—"विशेषेण कायमनस्तापविशेषात् तपः" । द्विविधमिति बाह्यमाभ्यन्तरं वा (च) । बाह्यमिति बाह्यद्रव्यापेक्षत्वात् तीर्थिकगृहस्थादिकार्यत्वाच्च । आभ्यन्तरं त्वन्यतीर्थिकानभ्यस्तत्वादन्तःकरणव्यापारस्य प्राधान्याद् बाह्यद्रव्यानपेक्षत्वाच्च । अन्ये त्वाहुः—"परप्रत्यक्षं बाह्यम् । स्वप्रत्यक्षमाभ्यन्तरम्" । अथवा आतापनादिः कायक्लेशस्तपो बहिर्लक्ष्यत इति बाह्यम् । अनशनादिभ्यो[ वा तेभ्यो ]ऽपि च बहिस्तरां वर्तत इति तदुपलक्षितं बाह्यम् । नैवं प्रायश्चित्तादि । तत् परस्ताद्–उपरिष्टाद् वक्ष्यते–अनशनावमौदार्यादि प्रायश्चित्तविनयादि च यथाक्रमम् । इह त्वशून्यार्थं पुरुषविशेषचरितं प्रकीर्णकं कालाहारादिनियतमनेकविधं तद्यथेत्यादिना दर्शयति—

तपोलक्षणे मतान्तरम्

भा०—तद्यथा—यववज्रमध्ये चन्द्रप्रतिमे द्वे । कनकरत्नमुक्तावल्यस्तिस्रः । सिंहविक्रीडिते द्वे ॥

टी०—यववज्रमध्ये चन्द्रप्रतिमे द्वे इति । मध्यशब्दः प्रत्येकमभिसम्बध्यते–यवमध्या[4] वज्रमध्या[5] च । चन्द्रप्रतिमे इति चन्द्रतुल्ये । यथा चन्द्रस्य कलावृद्धिः प्रतिदिनमेवं भिक्षाकवलवृद्धिः । यथा चन्द्रस्य हानिः प्रतिदिनं तथा भिक्षाकवलहानिरिति । तत्र यवमध्या[6] चन्द्रप्रतिमा शुक्लप्रतिपदारम्भादमावास्यान्ता, प्रतिपद आरभ्य यथा चन्द्रस्य कलावृद्धिः ( तथा भिक्षाकवलवृद्धिः ), कवलवृद्धिर्वा यावत् पौर्णमास्यां पञ्चदश कवलाः । ततः कृष्णप्रतिपद्यपि पञ्चदशैव । एवमेकैककवलहान्या यावदमावास्यायामेकः कवल इत्येषा यवमध्या ।

वज्रमध्या कृष्णप्रतिपदारम्भा, कृष्णप्रतिपदि पञ्चदशकवलानभ्यवहरति । तत्राप्येकैककवलहानिर्यावदमावास्यायामेकः कवलः, शुक्लप्रतिपद्यप्येक एवेति । द्वितीयादिष्वेकैकवृद्धिर्यावत् पौर्णमास्यां पञ्चदशेत्येषा वज्रमध्या ।

---

१ 'वक्ष्यति' इति ग-पाठः । २ 'तप्यतीति' इति ग-पाठः । ३ 'तापनं तपः' इति ङ-पाठः ।

४-५ 'यवस्येव मध्ये स्थूलस्य पर्यन्तभागयोस्तु तनुकस्य मध्यं यस्याः सा यवमध्या, वज्रस्येव मध्ये तनुकस्य पर्यन्तयोस्तु स्थूलस्य मध्यं यस्याः सा वज्रमध्या' इति श्रीनेमिचन्द्रसूरिवरविरचितस्य प्रवचनसारोद्धारस्य श्रीसिद्धसेनसूरिकृतटीकायां ( ४४०तमे पत्राङ्के ) ।

६ यवमध्यां चन्द्रप्रतिमामुद्दिश्य प्रोक्तम्—

"एकैकां वर्धयेद् भिक्षां, शुक्ले कृष्णे च ह्रापयेत् ।
भुञ्जीत नामावास्याया-मेष चान्द्रायणो विधिः ॥"

न्ताशुचिः । ततोऽपि पित्तस्थानप्राप्तो मलनामापन्नोऽशुचिरेव । ततो वाय्वाशयं प्राप्तः समीरणेन विभज्यमानः पृथक् मलः पृथग् रस इति द्वयीं परिणतिमापद्यते । तत्र मलात् मूत्र-पुरीष-दूषिका-स्वेद-लालादयो मलाः प्रादुष्यन्ति। रसाच्छोणित-मांस-मेदो-ऽस्थि-मज्जा-शुक्राणि जायन्ते । सर्वं चैतत् कफादिशुक्रान्तमशुच्येव, तस्मादाद्युत्तरकारणा-शुचित्वादशुचि शरीरमिति निगमयति ॥

अशुचित्वे हेत्वन्तरमाह—

भा०—किञ्चान्यत्—अशुचिभाजनत्वात् अशुचीनां सत्यपि भाजनं शरीरं कर्ण-नासा-ऽक्षि-दन्त-मल-स्वेद-श्लेष्म-पित्त-मूत्र-पुरीषादीनामवस्करभूतं तस्मादशुचीति ॥ किञ्चान्यत्-अशुच्युद्भवत्वात् एषामेव कर्णमलादीनामुद्भवः शरीरं तत उद्भवन्तीति । अशुचौ च गर्भे सम्भवतीत्यशुचि शरीरम् ॥ किञ्चान्यत्-अशुभपरिणामपाकानुबन्धादार्तवे बिन्दोराधानात् प्रभृति सत्यपि शरीरं कलला-ऽर्बुदपेशी-घनव्यूह-सम्पूर्णगर्भ-कौमार-यौवन-स्थविर-भावजनकेनाशुभपरिणामपाकेनानुबद्धं दुर्गन्धि पूतिस्वभावं दुरन्तं तस्मादशुचि ॥

टी०—किञ्चान्यत्। अशुचिभाजनत्वादिति । अशुचीनि कर्णमलादीनि तेषामवस्करभूतम्। अवस्करो वर्चःस्थानं पाद(पायुः)क्षालनकं तदिव यत् तदवस्करभूतं तस्मादशुचीति। किञ्चान्यत्–अशुच्युद्भवत्वादिति हेत्वन्तरम्। एषामेव कणमलादीनामशुचीनामुद्भव आकरः शरीरं यस्मात् तत उद्भवन्ति–उत्पद्यन्ते एते कर्णमलादयः, अनन्तरेण हेतुना उत्पन्नानां कर्णमलादीनामाश्रयः शरीरमिति प्रतिपादितम्। अनेन पुनर्हेतुना शरीरादेव कर्णमलादय उत्पद्यन्त इति प्रतिपाद्यते। अथवाऽयं विशेषः-अशुचौ च गर्भे सम्भवतीत्यशुचि शरीरम्। गर्भः–उदरमध्यम्। चशब्दो वाशब्दार्थे। अशुचौ वा गर्भे पुरीषादिप्राये सम्भवति–उत्पद्यते यस्माच्छरीरं तस्मादशुचीति । किञ्चान्यदित्ययमपरो हेतुरशुचित्वे। अशुभपरिणामपाकानुबन्धादिति । अशुभः परिणामो यस्य पाकस्य तेनानुबन्धित्वात् अनुगतत्वात् । तमेवाशुभपरिणामं पाकं प्रकाशयति (आर्तव इत्यादिना) आर्तवम्–ऋतौ (भवं) शोणितं तस्मिन् आर्तवे सति। बिन्दोराधानात् प्रभृतीति। बिन्दुः–शुक्रावयवस्तदाधानात्–तत्प्रक्षेपात् प्रभृति औदारिकं कललादिभावेन परिणमते। अर्बुदं–घनव्यूहोऽवयवविभागः । सर्वश्चायमशुभपरिणामः पाकः कललाद्यवयवरूपस्तेनानुबद्धं दुर्गन्धि–अशुभगन्धम्। अत एव पूतिस्वभावं कौथस्वभावम् । दुरन्तमिति । पर्यवसानेऽपि कृम्यादिपुञ्जो वा गृध्र-सारमेय-वायसादिभक्ष्यं वा भस्मान्तमस्थिशकलानि वा। एवमिदं दुष्टा(२१)न्तं शरीरं यतस्तस्मादशुचीति ॥

१ 'अशुचि परि०' इति ङ-पाठः। २ 'बन्धाद् दुर्गन्धपूति' इति ग-पाठः। ३ 'अशुचिभाजनवदिति' ङ-पाठः। ४ 'वर्ज्यस्थानं' इति ङ-पाठः। ५ काथस्व०' इति ग–पाठः। ६ 'कृष्णादि' इति क–पाठः।

भा०—किञ्चान्यत्–अशक्यप्रतीकारत्वात् । अशक्यप्रतीकारं खल्वपि शरीरस्याशुचित्वम्, उद्वर्तन-रूक्षण स्नाना-ऽनुलेपन-धूप-प्रघर्ष वासयुक्ति माल्यादिभिरप्यस्य न शक्यमशुचित्वमपनेतुम् ।

टी०—किञ्चान्यदिति प्रकारान्तरेणाशुचित्वप्रतिपादनम् । अशक्यप्रतीकारत्वादिति । अशक्यः प्रतीकारो यस्याशुचित्वस्य । अशुच्यपनयनप्रकारश्च लोके जलक्षालनादिना प्रसिद्धः । उद्वर्तनकं प्रतीतम् । रूक्षणं रोध्रकषायादिभिः । स्नानं जलेन । अनुलेपनं चन्दनादिकम् । धूपो विशिष्टसुगन्धिद्रव्यसमवायः । प्रघर्षोऽङ्गघर्षणकम् । वासयुक्तिः पटवासादिकम् । माल्यं मालार्हं पुष्पम् । आदिग्रहणात् कर्पूरोशीरतुरुष्ककस्तूरिकाग्रहः । एभिरप्यस्य शरीरकस्य विशिष्टद्रव्यैरशुचित्वमपनेतुं न शक्यम् । कुतः ?

भा०—अशुच्यात्मकत्वात् शुच्युपघातकत्वाच्चेति । तस्मादशुचि शरीरमिति । एवं ह्यस्य चिन्तयतः शरीरे निर्वेदो भवतीति । निर्विण्णश्च शरीर(रे जन्म)प्रहाणाय घटत इत्यशुचित्वानुप्रेक्षा ॥ ६ ॥

टी०—अशुच्यात्मकत्वादिति । अशुचिरात्मा–स्वभावो यस्य तदशुच्यात्मकम् । अशुचिस्वभावस्य पुरीषादेरिव अशक्यप्रतीकारम् अशुचित्वापनयनम् । शुच्युपघातकत्वाच्चाशुचि शरीरम् । शुचीनि द्रव्याणि शाल्योदनदधिक्षीरादीनि, तान्यप्यात्मसम्पर्कादुपहन्ति-अशुचीकरोति । तथा कर्पूर-चन्दन-काश्मीरजादीनि सुगन्धिद्रव्याणि संश्लेषमात्रादेव पूतीकरोति, अतोऽन्विष्यमाणं सर्वप्रकारं शरीरमेवाशुचि । परमार्थतो नापरं किञ्चित् स्वतोऽशुचि समस्ति शरीरकं वा शरीरसम्पृक्तं वा विहायेति । एवं ह्यस्य चिन्तयत इत्यादिना अशुचित्वानुप्रेक्षायाः फलमाह—निर्वेदः–अप्रीतिः अरतिः–उद्वेगः । शरीरके निर्विण्णश्च न शरीरसंस्कारार्थमायतते । जन्मप्रहाणायैव तु घटते इत्यशुचित्वानुप्रेक्षा ॥ ६ ॥

आस्रवानुप्रेक्षास्वभावप्रकाशनायाह—

भा०—आस्रवान् इहामुत्रापाययुक्तान् महानदीस्रोतोवेगतीक्ष्णान् अकुशलागमकुशलनिर्गमद्वारभूतान् इन्द्रियादीन् अवद्यतश्चिन्तयेत् ।

टी०—आस्रूयते-यैः कर्मादीयते त आस्रवास्ते इन्द्रियादयस्तानास्रवानिह लोके । अमुत्रेति परलोके । अपायो–दोषः पीडा दुःखं तेनापायेन युक्तान् । महानदी–गङ्गादिका

---

१ 'घातत्वा०' इति ग–पाठः । २ 'भवति' इति घ–पाठः । ३ 'दधिपूरदधि०' इति ङ–पाठः ।

तस्याः स्रोतः-प्रवाहः तस्य वेगः-(सं)सर्पणविशेषः तद्वत् तीक्ष्णान्। यथा स नदीप्रवाहः तृणकाष्ठादि पतितमपहरति, एवमेते चक्षुरादयः स्वप्रवाहपतितमात्मानमपहरन्ति, सन्मार्गाद् भ्रंशयन्ति। अकुशलं-पापं सामान्येन वा कर्मबन्धस्तस्यागमः-प्रवेशस्तद्द्वारभूतान्, कुशलस्य च पुण्यस्य दशविधधर्मस्य निर्गमद्वारभूतान्। इन्द्रियमादिर्येषां ते इन्द्रियादयस्तानपायतः-सम्पयतो जीवस्यापकारिणश्चिन्तयेत्। अथवा अवद्यं-गर्हितं गर्हितान् पापान् इत्येवं चिन्तयेत्।

उत्तरार्धस्य अर्थद्वयम्

तद्यथेत्यादिना सोदाहरणानास्रवान् दर्शयति—

भा०—तद्यथा—स्पर्शनेन्द्रियप्रसक्तचित्तः सिद्धोऽनेकविद्याबलसम्पन्नोऽप्याकाशगोऽष्टाङ्गमहानिमित्तपारगो गार्ग्यः सत्यकिर्निधनमाजगाम। तथा प्रभूतयवसोदकप्रमाथावगाहादिगुणसम्पन्नविचारिणश्च मदोत्कटा बलवन्तो हस्तिनो हस्तिबन्धकीषु स्पर्शनेन्द्रियसक्तचित्ता ग्रहणमुपगच्छन्ति। ततो बन्ध वध-दमन-(वाहन)निहननाऽङ्कुशपार्ष्णिप्रतोदाभिघातादिजनितानि तीव्राणि दुःखान्यनुभवन्ति। नित्यमेव स्वच्छन्दप्रचारसुखस्य वनवासस्यानुस्मरन्ति। तथा मैथुनसुखप्रसङ्गादाहितगर्भाऽश्वतरी प्रसवकाले प्रसवितुमशक्नुवती तीव्रदुःखाभिहता अवशा मरणमभ्युपैति। एवं सर्व एव स्पर्शनेन्द्रियप्रसक्ता इहामुत्र च विनिपातमृच्छन्तीति॥

टी०—सिद्धविद्यः सोऽनेकेन विद्याबलेन युक्तोऽपि वियद्विचारी अङ्गस्वरलक्षणादि अष्टाङ्गनिमित्तं तस्य पारङ्गतो गार्ग्य इति गोत्राख्या सत्यकिः स्त्रीष्वासक्तचित्तो निधनं-विनाशमुपजगामेति। तथेत्यपरमुदाहरणम्। यवसः-चरणीयविशेषः तस्य प्रमाथो भञ्जनमर्दनाभ्यवहारलक्षणः। उदके च स्वेच्छयाऽवगाहः। अवगाहादिगुणसम्पन्नेति। आदिग्रहणात् सिंहादिव्यालरहितत्वम्। एवंविधवनविचारिणो मदेन दुष्टतरा हस्तिनः। हस्तिबन्धकीष्विति गणि(करेणु?)कानां संज्ञा। तास्वनेकप्रकारं चाटुकरणस्पर्शनादिभिः प्रौढयोषित इव मनुजान् प्रतारयन्ति हस्तिमूर्खान्। बन्धः-संयमनं वधः-ताडनं दमनं-शिक्षाग्रहणं पश्चाद् (वाहनं) निहननं-अङ्कुशाभिघातः प्रतोदः-प्राजनकस्तेनाभिघातः। आदिग्रहणादतिभारारोपणं, युद्धकाले च शस्त्राभिघातः। तथेति दृष्टान्तान्तरमाह—तथा मैथुनेति। मैथुनसुखप्रसङ्गेनाहितः-धृतो गर्भो यस्या अश्वतरी-वेगसरी प्रसवकाले मरणमभ्युपैत्यवशा। एवमित्यादिना दार्ष्टान्तिकमर्थमुपसंहरति। एवमुक्तेन न्यायेन लोकद्वयेऽपि विनाशमृच्छन्ति-प्राप्नुवन्तीति।

---

१ 'मार्गात्' इति ङ-पाठः। २ 'वन्तोऽपि हस्ति०' इति घ-पाठः। ३ 'स्वयूथस्य स्वच्छन्द' इति घ-पाठः। ४ 'मूर्तान्' इति ङ-च-पाठः।

भा०—तथा जिह्वेन्द्रियप्रसक्ताः मृतहस्तिशरीरस्थस्रोतोवेगोढवायसवत् हेमन्तघृतकुम्भप्रविष्टमूषिकवत् गोष्ठप्रसक्तह्रदवासिकूर्मवत् मांसपेशीलुब्धश्येनवत् बडिशागलमांसगृद्धमत्स्यवच्चेति ॥ तथा घ्राणेन्द्रियप्रसक्ता ओषधिगन्धलुब्धपन्नगवत् पललगन्धानुसारिमूषकवच्चेति ॥ तथा चक्षुरिन्द्रियप्रसक्ताः स्त्रीदर्शनप्रसङ्गादर्जुनकचोरवत् दीपालोकनलोलपतङ्गवद् विनिपातमृच्छन्तीति चिन्तयेत् ॥ तथा श्रोत्रेन्द्रियप्रसक्तास्तित्तिरि-कपोत-कपिञ्जलवत् गीतसङ्गीतध्वनिलोलमृगवद् विनिपातमृच्छन्तीति चिन्तयेत्। एवं हि चिन्तयन्नास्रवनिरोधाय घटत इत्यास्रवानुप्रेक्षा ॥ ७ ॥

जिह्वादिविषयग्रस्तानां विडम्बनाः

टी०—तथेत्यास्रवान्तरेऽपि दोपदर्शनम् । सामयिकानि च वायसाद्युदाहरणानि। बडिशो–गलः तत्र मांसम्। तथेत्यपरास्रवगतदोपोद्घाटनमुदाहरणद्वयेन । तथाऽपरत्रास्रवे दोषोपपादनम्। अर्जुनचोरः श्यामायां निवेशितदृष्टिर्निधनं गत इति सामयिकमेवाख्यानकम्। तथेत्ययमप्यास्रवः सदोष इति कथयति । तित्तिरः पञ्जरस्थः तित्तिरीशब्दश्रवणादागतो युयुत्सार्थी पाशेन बध्यते । एवं कपोत-कपिञ्जलादेरपि, गीतमेकक एव गोयाखेटके गायति, सङ्गीतकं तु वंशकांस्यादियुक्तम् । एवमेतानास्रवान् दोषबहुलानेव चिन्तयेत्। एवं च परिचिन्तयन्नास्रवनिरोधायैव घटत इत्यास्रवानुप्रेक्षा ॥ ७ ॥

गीतसङ्गीतयोर्विशेषः

संवरानुप्रेक्षानिरूपणायाह—

भा०—संवरांश्च महाव्रतादीन् गुप्त्यादिपरिपालनाद् गुणतश्चिन्तयेत् । सर्वे ह्येते यथोक्तास्रवदोषाः संवृतात्मनो भवन्तीति चिन्तयेत्। एवं ह्यस्य चिन्तयतो मतिः संवरायैव घटत इति संवरानुप्रेक्षा ॥ ८ ॥

टी०—संवरांश्च महाव्रतादीनित्यादि । आस्रवद्वाराणां पिधानमास्रवदोषपरिवर्जनं संवरः । तांश्च संवरान् प्राणातिपातनिवृत्त्यादीन् गुप्त्यादिपरिपालनादिति। गुप्त्यादयः परिपालनाः–परिपालका येषां महाव्रतादीनाम् । आदिग्रहणादुत्तरगुणपरिग्रहः । इतरत्रादिग्रहणात् समितिग्रहणम् । तान् गुणतश्चिन्तयेत् । गुणा–उपकारिणस्तान् गुणान् इत्येवं चिन्तयेत्। सर्वे ह्येते इत्यादि गतार्थं भाष्यम् ॥ ८ ॥

निर्जराऽनुप्रेक्षास्वरूपावधारणमधुना—

निर्जरायाः पर्यायाः

भा०—निर्जरा वेदना विपाक इत्यनर्थान्तरम् ।

---

१ 'हैमनघृत' इति च-पाठः । २ 'बडिशामिषगृद्ध०' इति घ-पाठः । ३ 'लोकलोक' इति घ-पाठ । ४ 'अर्जुन' इति च-पाठः । ५ 'पालना' इति च-पाठः । ६ 'गुणवतः' इति ग-पाठः ।

तस्याः स्रोतः-प्रवाहः तस्य वेगः-(सं)सर्पणविशेषः तद्वत् तीक्ष्णान्। यथा स नदीप्रवाहः तृणकाष्ठादि पतितमपहरति, एवमेते चक्षुरादयः स्वप्रवाहपतितमात्मानमपहरन्ति, सन्मार्गाद् भ्रंशयन्ति। अकुशलं-पापं सामान्येन वा कर्मबन्धस्तस्यागमः-प्रवेशस्तद्द्वारभूतान्, कुशलस्य च पुण्यस्य द्वारविषयमस्य निर्गमद्वारभूतान्। इन्द्रियादीनां तु इन्द्रियादयस्तानपायतः-सम्पयतो जीवस्यापकारिणश्चिन्तयेत्। अथवा अवद्यं-गर्हितं गर्हितान् पापान् इत्येवं चिन्तयेत्।

उत्तरार्धस्य अर्थकथनम्

तद्यथेत्यादिना सोदाहरणानास्रवान् दर्शयति—

भा०—तद्यथा—स्पर्शनेन्द्रियप्रसक्तचित्तः सिद्धोऽनेकविद्याबलसम्पन्नोऽप्याकाशगोऽष्टाङ्गमहानिमित्तपारगो गार्ग्यः सत्यकिर्निधनमाजगाम। तथा प्रभूतयवसोदकप्रमाथावगाहादिगुणसम्पन्नविचारिणश्च मदोत्कटा बलवन्तो हस्तिनो हस्तिबन्धकीषु स्पर्शनेन्द्रियसक्तचित्ता ग्रहणमुपगच्छन्ति। ततो बन्ध-वध-दमन-(वाहन)निहननाङ्कुशपार्ष्णिप्रतोदाभिघातादिजनितानि तीव्राणि दुःखान्यनुभवन्ति। नित्यमेवं स्वच्छन्दप्रचारसुखस्य वनवासस्यानुस्मरन्ति। तथा मैथुनसुखप्रसङ्गादाहितगर्भाऽश्वतरी प्रसवकाले प्रसवितुमशक्नुवती तीव्रदुःखाभिहता अवशा मरणमभ्युपैति। एवं सर्व एव स्पर्शनेन्द्रियप्रसक्ता इहामुत्र च विनिपातमृच्छन्तीति॥

टी०—सिद्धविद्यः सोऽनेकेन विद्याबलेन युक्तोऽपि वियद्विचारी अङ्गस्वरलक्षणादि अष्टाङ्गनिमित्तं तस्य पारङ्गतो गार्ग्य इति गोत्राख्या सत्यकिः स्त्रीष्वासक्तचित्तो निधनं-विनाशमुपजगामेति। तथेत्यपरमुदाहरणम्। यवसः-चरणीयविशेषः तस्य प्रमाथो भञ्जनमर्दनाभ्यवहारलक्षणः। उदके च स्वेच्छयाऽवगाहः। अवगाहादिगुणसम्पन्नेति। आदिग्रहणात् सिंहादिव्यालरहितत्वम्। एवंविधवनविचारिणो मदेन दुष्टतरा हस्तिनः। हस्तिबन्धकीष्विति गणि(करेणु?)कानां संज्ञा। तास्वनेकप्रकारं चाटुकरणस्पर्शनादिभिः प्रौढयोषित इव मनुजान् प्रतारयन्ति हस्तिमूर्खान्। बन्धः-संयमनं वधः-ताडनं दमनं-शिक्षाग्रहणं पश्चाद् (वाहनं) निहननं-अङ्कुशाभिघातः प्रतोदः-प्राजनकस्तेनाभिघातः। आदिग्रहणादतिभारारोपणं, युद्धकाले च शस्त्राभिघातः। तथेति दृष्टान्तान्तरमाह—तथा मैथुनेति। मैथुनसुखप्रसङ्गेनाहितः-धृतो गर्भो यस्या अश्वतरी-वेगसरी प्रसवकाले मरणमभ्युपैत्यवशा। एवमित्यादिना दार्ष्टान्तिकमर्थमुपसंहरति। एवमुक्तेन न्यायेन लोकद्वयेऽपि विनाशमृच्छन्ति-प्राप्नुवन्तीति।

---

१ 'मार्गात्' इति ङ-पाठः। २ 'वन्तोऽपि हस्ति०' इति घ-पाठः। ३ 'स्वयूथस्य स्वच्छन्द' इति घ-पाठः। ४ 'मूर्तान्' इति ङ-च-पाठः।

भा०—तथा जिह्वेन्द्रियप्रसक्ताः मृतहस्तिशरीरस्थस्रोतोवेगोढवायसवत् हेमन्तघृतकुम्भप्रविष्टमूषिकवत् गोष्ठप्रसक्तहृदवासिकूर्मवत् मांसपेशीलुब्धश्येनवत् बडिशागतमांसगृद्धमत्स्यवच्चेति ॥ तथा घ्राणेन्द्रियप्रसक्ता ओषधिगन्धलुब्धपन्नगवत् पललगन्धानुसारिमूषकवच्चेति ॥ तथा चक्षुरिन्द्रियप्रसक्ताः स्त्रीदर्शनप्रसङ्गादर्जुनकचोरवत् दीपालोकनलोलपतङ्गवद् विनिपातमृच्छन्तीति चिन्तयेत् ॥ तथा श्रोत्रेन्द्रियप्रसक्तास्तित्तिरि-कपोत-कपिञ्जलवत् गीतसङ्गीतध्वनिलोलमृगवद् विनिपातमृच्छन्तीति चिन्तयेत्। एवं हि चिन्तयन्नास्रवनिरोधाय घटत इत्यास्रवानुप्रेक्षा ॥ ७ ॥

जिह्वादिविषयग्रस्तानां विडम्बनाः

टी०—तथेत्यास्रवान्तरेऽपि दोषदर्शनम् । सामयिकानि च वायसाद्युदाहरणानि। बडिशो-गलः तत्र मांसम्। तथेत्यपरास्रवगतदोषोद्घाटनमुदाहरणद्वयेन । तथाऽपरत्रास्रवे दोषोपपादनम्। अर्जुनचोरः श्यामायां निवेशितदृष्टिर्निधनं गत इति सामयिकमेवाख्यानकम्। तथेत्ययमप्यास्रवः सदोष इति कथयति । तित्तिरः पञ्जरस्थः तित्तिरीशब्दश्रवणादागतो युयुत्सार्थी पाशेन बध्यते । एवं कपोत-कपिञ्जलादेरपि, गीतमेरुकएव गौर्याखेटके गायति, सङ्गीतकं तु वंशकांस्यादियुक्तम्। एवमेतानास्रवान् दोषबहुलानेव चिन्तयेत्। एवं च परिचिन्तयन्नास्रवनिरोधायैव घटत इत्यास्रवानुप्रेक्षा ॥ ७ ॥

गीतसङ्गीतयोर्विशेषः

संवरानुप्रेक्षानिरूपणायाह—

भा०—संवरांश्च महाव्रतादीन् गुप्त्यादिपरिपालनाद् गुणतश्चिन्तयेत्। सर्वे ह्येते यथोक्तास्रवदोषाः संवृतात्मानो भवन्तीति चिन्तयेत्। एवं ह्यस्य चिन्तयतो मतिः संवरायैव घटत इति संवरानुप्रेक्षा ॥ ८ ॥

टी०—संवरांश्च महाव्रतादीनित्यादि । आस्रवद्वाराणां पिधानमास्रवदोषपरिवर्जनं संवरः । तांश्च संवरान् प्राणातिपातनिवृत्त्यादीन् गुप्त्यादिपरिपालनादिति। गुप्त्यादयः परिपालनाः—परिपालका येषां महाव्रतादीनाम्। आदिग्रहणादुत्तरगुणपरिग्रहः। इतरत्रादिग्रहणात् समितिग्रहणम्। तान् गुणतश्चिन्तयेत्। गुणा–उपकारिणस्तान् गुणान् इत्येवं चिन्तयेत्। सर्वे ह्येते इत्यादि गतार्थं भाष्यम् ॥ ८ ॥

निर्जराऽनुप्रेक्षास्वरूपावधारणमधुना—

निर्जरायाः पर्यायाः

भा०—निर्जरा वेदना विपाक इत्यनर्थान्तरम्।

---

१ 'हैमनघृत' इति च-पाठः। २ 'बडिशामिषगृद्ध०' इति घ-पाठः। ३ 'लोकलोक' इति घ-पाठ। ४ 'अर्जुन' इति च-पाठः। ५ 'पालना' इति च-पाठः। ६ 'गुणवतः' इति ग-पाठः।

टी०—निर्जरा वेदनेत्यादि। निर्जरणं निर्जरा आत्मप्रदेशेभ्योऽनुभूतरसकर्मपुद्गलप-रिशटना। निर्जरायाः एकार्थाविमौ वेदना विपाक इति। तत्र वेदना अनुभवः तस्याः स्वादनं विपचनं विपाकः। कर्मपुद्गलानां उदयावलिकाप्रवेशेऽनुभूतरसानामुत्तरकालं परिशाटः। विपच्यमाना विपकाः परिशटन्ति।

भा०—स द्विविधः-अबुद्धिपूर्वः कुशलमूलश्च। तत्र नरकादिषु कर्मफल-विपाकोदयोऽबुद्धिपूर्वकस्तमवद्यतोऽनुचिन्तयेत् अकुशलानुबन्ध इति॥

विपाकस्य द्वैविध्यम्

टी०—स द्विविधः इति विपाकाभिसम्बन्धः। निर्जरया सहैकार्थत्वात्। तद्द्वैविध्य-प्रदर्शनायाह—अबुद्धीत्यादि। तत्राबुद्धिपूर्वः बुद्धिः पूर्वा यस्य कर्म शाटयामीत्येवंलक्षणा बुद्धिः प्रथमं यस्य विपाकस्य स बुद्धिपूर्वः न बुद्धिपूर्वोऽबुद्धिपूर्वः, तत्र तयोर्विपाकयोरयं तावदबुद्धिपूर्वः नरकतिर्यङ्मनुष्यामरेषु कर्म ज्ञानावरणादि तस्य यत् फलमाच्छादकादिरूपं तद्विपाकः—तदुदयस्तस्मात् कर्मफलाद् विपच्यमानाद् यो विनिर्जरणलक्षणो विपाकः। सति तस्मिन् कर्मफले विपच्यमाने स भवत्यबुद्धिपूर्वकः। न हि तैस्तपः परीषहजयो वा नारकादिभिर्मनीषितः। तमेवंविधं विपाकमवद्यतः पापं संसारानुबन्धिनमेव चिन्तयेत्, नहि तादृशा निर्जरया मोक्षः शक्योऽधिगन्तुमिति। एतदेवाह—अकुशलानुबन्ध इति। यस्मादुपभुज्यापि तत् कर्मफलं पुनः संसार एव भ्रमितव्यम्।

भा०—तपःपरीषहजयकृतः कुशलमूलः। तं गुणतोऽनुचिन्तयेत् शुभानुबन्धो निरनुबन्धो वेति। एवमनुचिन्तयन् कर्म निर्जरणायैव घटत इति निर्जरा-ऽनुप्रेक्षा॥ ९॥

टी०—यः पुनः कुशलमूलो विपाकस्तपसा द्वादशविधेन परीषहजयेन वा कृतः सोऽवश्यंतयैव बुद्धिपूर्वकः। तमेवंविधं गुणत इति। गुणम्—उपकारकमेव चिन्तयेत्। यस्मात् स तादृशो विपाकः शुभमनुबध्नाति, अमरेषु तावदिन्द्रसामानिकादिस्थानानि अवाप्नोति। मनुष्येषु च चक्रवर्तिबलमहामण्डलिकादिपदानि लब्ध्वा ततः सुखपरम्परया मुक्तिमवाप्स्यतीति शुभानुबन्धो निरनुबन्धो वेति। वाशब्दः पूर्वविकल्पापेक्षः। तपःपरीषहजयकृतो विपाकः सकलकर्मक्षयलक्षणः साक्षान्मोक्षायैव कारणीभवतीति॥ ननु च यदि बुद्धिपूर्वको देवादिफलः शुभानुबन्धो विपाकस्तत आगमेन सह विरोधः "नो इह लोगट्ठयाए तवं अहिट्ठेज्जा" (अ० ९, उ० ४, सू० ४) भण्यते, न मुमुक्षुणा देवादिफलमिष्टं, सहितं(?) मोक्षार्थमेव घटते, यदान्तरालिकं फलं देवादि तदानुषङ्गिकं, इक्षुवनसेके तृणादिसेकवत्।

१ 'परिशटनं' इति ङ-पाठः। २ 'वा निर्जरणक' इति ग-पाठः। ३ 'महितै' इति च-पाठः।
४ 'देवादिकृतः' इति ङ-पाठः। ५ दशवैकालिकाख्येन। ६ छाया—न इह लोकार्थं तपः अधितिष्ठेत्।

मनीषितं तु तेन तपःपरीषहजयाभ्यां मोक्षः प्राप्यः। तत्र या प्रवृत्तिस्तपसि परीषहजये वा सा बुद्धिपूर्विका विपाकहेतुरिति । तस्मादेवमनुचिन्तयन् कर्मनिर्जरणायैव घटते इति निर्जरानुप्रेक्षा ॥ ९ ॥

पञ्चास्तिकायात्मकमित्यादिना लोकानुप्रेक्षास्वरूपं निरूपयति—

**भा०—पञ्चास्तिकायात्मकं विविधपरिणाममुत्पत्तिस्थित्यन्यतानुग्रहप्रलय-युक्तं लोकं चित्रस्वभावमनुचिन्तयेत्। एवं ह्यस्य चिन्तयतस्तत्त्वज्ञानविशुद्धि-र्भवतीति लोकानुप्रेक्षा ॥ १० ॥**

**टी०—पञ्चास्तिकायात्मकमित्यादिना।** पञ्चास्तिकाया धर्मा-ऽधर्मा-ऽऽकाश-पुद्गल-जीवाख्यास्ते आत्मानः–स्वरूपमस्येति, लोकमित्युपरिष्टाद् वक्ष्यति । विविधो–नानाप्रकारः परिणामो यस्येति, तमेवंविधपरिणामं दर्शयति—उत्पत्तिस्थितीत्यादि। उत्पत्तिर्द्विविधा–प्रतिक्षणवर्तिनी कालान्तरवर्तिनी च। प्रतिक्षणवर्तिनी च अविभाव्यान्त्य-प्रलयानुमेया, प्रतिक्षणमन्यथाऽन्यथा चोत्पद्यन्ते परिणमन्ते भावा अस्ति-कायाः । कालान्तरवर्तिनी मृद्द्रव्यं पिण्डाद्याकारेण मृद्भावं प्रक्षीणमपहाय पिण्डादिरूपेण परिणमते । स्थितिः–अवस्थानं [ अस्तिकाय इति ] अस्तिकायरूपेण सर्वदा व्यवस्थानात् । धर्मास्तिकायादिव्यपदेशमजहतः ते सर्वदा व्यवतिष्ठन्ते वचनार्थपर्यायैः । अन्यता तूत्पत्तिस्थितिभ्यामन्यत्वं–विनाशः । सोऽपि द्विविधः–क्षणिकः कालान्तरवर्ती च । विवक्षितक्षणाद् द्वितीयक्षणेऽन्यत्वमवश्यम्भावीत्यवस्थान्तरापत्तिरेव विनाशः, न निरन्वयः क्वचिदस्ति प्रलयः। स्थित्युत्पत्ती अनुग्रहकारिण्यौ सत्त्वानाम्। घटो हि समुत्प-न्नस्तिष्ठंश्च जलाहरणधारणादिरूपेणानुगृह्णाति । प्रलयोऽपि कालान्तरभावी भवत्यनुग्राहको विनाशसंज्ञितः। कुण्डलार्थिनः कटकविनाशवत्। अत एव(भिः?) उत्पत्त्यादिभिर्युक्तमुत्पत्त्या-दिपरिणतिस्वभावं लोकं जीवाजीवाधारलक्षणं क्षेत्रम् । अत एव चित्रस्वभावमिति । चित्रो–नानाप्रकारः स्वभावः–स्वरूपं यस्य सुखदुःखप्रकर्षापकर्षरूपत्वात् वैचित्र्याच्च कर्म-परिणतेः । एवं ह्यस्य चिन्तयतस्तत्त्वज्ञानविशुद्धिर्भवतीति लोकानुप्रेक्षा । एवम्–उक्तेन प्रकारेण लोकस्वरूपमभिध्यायतस्तत्त्वेषु जीवाजीवादिषु पदार्थेषु विशुद्धं–निर्मलं शङ्कादिदोषरहितं ज्ञानं भवति। यथा भगवद्भिरुक्तम् (आवश्यके ?)—"सव्व(व्वाइं) ठाणाइं असासयाइं" ति । न क्वचिदस्मिन् व्यावर्णितलक्षणे लोके किञ्चित् स्थानमस्ति शाश्वतं यत्रात्यन्तिकी निर्वृतिरात्मनो भवतीत्याह। परलोकनिरपेक्षस्य च मोक्षायैव चेतोवृत्तिरनुगुणा भवतीति लोकानुप्रेक्षा ॥

उत्पत्तेर्द्वैविध्यम्

---

१ 'उत्पत्तिस्थित्यनन्तानुग्रहप्रलययुक्त' इति ङ-पाठः । २ 'प्रकीर्णमय' इति ङ-च-पाठः । ३ छाया—सर्वाणि स्थानानि अशाश्वतानि इति । ४ 'यत्रौत्पत्तिकी' इति घ-पाठः ।

टी०—निर्जरा वेदनेत्यादि । निर्जरणं निर्जरा आत्मप्रदेशेभ्योऽनुभूतरसकर्मपुद्गल-परिशटना । निर्जराया एकार्थाभिधायी वेदना विपाक इति । तत्र वेदना अनुभवः तस्याः स्वरूपं विपचनं विपाकः । कर्मपुद्गलानां उदयावलिकाप्रवेशेऽनुभूयमानानामुदयकाले परिशाटः । विपच्यमाना विपाकाः परिशटन्ति ।

भा०—स द्विविधः-अबुद्धिपूर्वः कुशलमूलश्च । तत्र नरकादिषु कर्मफल-विपाकोदयोऽबुद्धिपूर्वकस्तमवद्यतोऽनुचिन्तयेत् अकुशलानुबन्ध इति ॥

विपाकस्य द्वैविध्यम्

टी०—स द्विविधः इति विपाकाभिसम्बन्धः । निर्जरया सहैकार्थत्वात् । तद्द्वैविध्य-प्रदर्शनायाह-अबुद्धीत्यादि । तत्राबुद्धिपूर्वः बुद्धिः पूर्वा यस्य कर्म क्षपयामीत्येवंरूपा बुद्धिः प्रथमं यस्य विपाकस्य स बुद्धिपूर्वः न बुद्धिपूर्वोऽबुद्धिपूर्वः, तत्र तयोर्विपाकयोरयं तावदबुद्धिपूर्वः नरकतिर्यग्मनुष्यामरेषु कर्म ज्ञानावरणादि तस्य यत् फलमाच्छादकादिरूपं तद्विपाकः-तदुदयस्तस्मात् कर्मफलाद् विपच्यमानाद् यो निर्जरणलक्षणो विपाकः । सति तस्मिन् कर्मफले विपच्यमाने स भवत्यबुद्धिपूर्वकः । न हि तैस्तपः परीषहजयो वा नारकादिभिर्मनीषितः । तमेवंविधं विपाकमवद्यतः पापं संसारानुबन्धिनमेव चिन्तयेत्, नहि तादृशा निर्जरया मोक्षः शक्योऽधिगन्तुमिति । एतदेवाह—अकुशलानुबन्ध इति । यस्मादुपभुज्यापि तत् कर्मफलं पुनः संसृतावेव भ्रमितव्यम् ।

भा०—तपःपरीषहजयकृतः कुशलमूलः । तं गुणतोऽनुचिन्तयेत् शुभानुबन्धो निरनुबन्धो वेति । एवमनुचिन्तयन् कर्म निर्जरणायैव घटत इति निर्जरा-ऽनुप्रेक्षा ॥ ९ ॥

टी०—यः पुनः कुशलमूलो विपाकस्तपसा द्वादशविधेन परीषहजयेन वा कृतः सोऽवश्यंतयैव बुद्धिपूर्वकः । तमेवंविधं गुणत इति । गुणम्–उपकारकमेव चिन्तयेत् । यस्मात् स तादृशो विपाकः शुभमनुबध्नाति, अमरेषु तावदिन्द्रसामानिकादिस्थानानि अवाप्नोति । मनुष्येषु च चक्रवर्तिबलमहामण्डलिकादिपदानि लब्ध्वा ततः सुखपरम्परया मुक्तिमवाप्स्यतीति शुभानुबन्धो निरनुबन्धो वेति । वाशब्दः पूर्वविकल्पापेक्षः । तपःपरीषह-जयकृतो विपाकः सकलकर्मक्षयलक्षणः साक्षान्मोक्षायैव कारणीभवतीति ॥ ननु च यदि बुद्धिपूर्वको देवादिफलः शुभानुबन्धो विपाकस्तत आगमेन सह विरोधः " नो इह लोगट्ठयाए तवं अहिट्ठेज्जा" (अ० ९, उ० ४, सू० ४) भण्यते, न मुमुक्षुणा देवादिफलमिष्टं, सहितं(?) मोक्षार्थमेव घटते, यदान्तरालिकं फलं देवादि तदानुषङ्गिकं, इक्षुवनसेके तृणादिसेकवत् ।

---

१ 'परिशटनं' इति ङ-पाठः । २ 'वा निर्जरणक' इति ग-पाठः । ३ 'महितै' इति च-पाठः । ४ 'देवादिकृतः' इति ङ-पाठः । ५ दशवैकालिकाख्येन । ६ छाया—न इह लोकार्थं तपः अधितिष्ठेत् ।

मनीषितं तु तेन तपःपरीषहजयाभ्यां मोक्षः प्राप्यः। तत्र या प्रवृत्तिस्तपसि परीषहजये वा सा बुद्धिपूर्विका विपाकहेतुरिति । तस्मादेवमनुचिन्तयन् कर्मनिर्जरणायैव घटते इति निर्जरानुप्रेक्षा ॥ ९ ॥

पञ्चास्तिकायात्मकमित्यादिना लोकानुप्रेक्षास्वरूपं निरूपयति—

**भा०—पञ्चास्तिकायात्मकं विविधपरिणाममुत्पत्तिस्थित्यन्यतानुग्रहप्रलय-युक्तं लोकं चित्रस्वभावमनुचिन्तयेत् । एवं ह्यस्य चिन्तयतस्तत्त्वज्ञानविशुद्धि-र्भवतीति लोकानुप्रेक्षा ॥ १० ॥**

टी०—पञ्चास्तिकायात्मकमित्यादिना । पञ्चास्तिकाया धर्मा-ऽधर्मा-ऽऽकाश-पुद्गल-जीवाख्यास्ते आत्मानः—स्वरूपमस्येति, लोकमित्युपरिष्टाद् वक्ष्यति । विविधो—नानाप्रकारः परिणामो यस्येति, तमेवंविधपरिणामं दर्शयति—उत्पत्तिस्थितीत्यादि । उत्पत्तिर्द्विविधा—प्रतिक्षणवर्तिनी कालान्तरवर्तिनी च । प्रतिक्षणवर्तिनी च अविभाव्यान्त्य-प्रलयानुमेया, प्रतिक्षणमन्यथाऽन्यथा चोत्पद्यन्ते परिणमन्ते भावा अस्ति-कायाः । कालान्तरवर्तिनी मृद्द्रव्यं पिण्डाद्याकारेण मृद्भावं प्रक्षीणमपहाय पिण्डादिरूपेण परिणमते । स्थितिः—अवस्थानं [ अस्तिकाय इति ] अस्तिकायरूपेण सर्वदा व्यवस्थानात् । धर्मास्तिकायादिव्यपदेशमजहतः ते सर्वदा व्यवतिष्ठन्ते वचनार्थपर्यायैः । अन्यता तूत्पत्तिस्थितिभ्यामन्यत्वं—विनाशः । सोऽपि द्विविधः—क्षणिकः कालान्तरवर्ती च । विवक्षितक्षणाद् द्वितीयक्षणेऽन्यत्वमवश्यम्भावीत्यवस्थान्तरापत्तिरेव विनाशः, न निरन्वयः क्वचिदस्ति प्रलयः । स्थित्युत्पत्ती अनुग्रहकारिण्यौ सत्त्वानाम् । घटो हि समुत्प-न्नस्तिष्ठंश्च जलाहरणधारणादिरूपेणानुगृह्णाति । प्रलयोऽपि कालान्तरभावी भवत्यनुग्राहको विनाशसंज्ञितः । कुण्डलार्थिनः कटकविनाशवत् । अत एव(भिः?) उत्पत्त्यादिभिर्युक्तमुत्पत्त्या-दिपरिणतिस्वभावं लोकं जीवाजीवाधारलक्षणं क्षेत्रम् । अत एव चित्रस्वभावमिति । चित्रो—नानाप्रकारः स्वभावः—स्वरूपं यस्य सुखदुःखप्रकर्षापकर्षरूपत्वात् वैचित्र्याच्च कर्म-परिणतेः । एवं ह्यस्य चिन्तयतस्तत्त्वज्ञानविशुद्धिर्भवतीति लोकानुप्रेक्षा । एवम्-उक्तेन प्रकारेण लोकस्वरूपमभिध्यायतस्तत्त्वेषु जीवाजीवादिषु पदार्थेषु विशुद्धं—निर्मलं शङ्कादिदोषरहितं ज्ञानं भवति । यथा भगवद्भिरुक्तम् (आवश्यके ?)—"सव्व(व्वाइं) ठाणाइं असासयाइं" ति । न क्वचिदस्मिन् व्यावर्णितलक्षणे लोके किञ्चित् स्थानमस्ति शाश्वतं यत्रात्यन्तिकी निर्वृतिरात्मनो भवतीत्याह । परलोकनिरपेक्षस्य च मोक्षायैव चेतोवृत्तिरनुगुणा भवतीति लोकानुप्रेक्षा ॥

(मार्जिने: उत्पत्तेर्द्वैविध्यम्)

---

१ 'उत्पत्तिस्थित्यनन्तानुग्रहप्रलययुक्त' इति ङ-पाठः । २ 'प्रक्षीणमय' इति ङ-च-पाठः । ३ छाया—सर्वाणि स्थानानि अशाश्वतानि इति । ४ 'यत्रौत्पत्तिकी' इति घ-पाठः ।

अनादौ संसारे इत्यादिना बोधिदुर्लभतानुप्रेक्षां निरूपयति—

भा०—अनादौ संसारे नरकादिषु तेषु तेषु भवग्रहणेष्वनन्तकृत्वः परिवर्तमानस्य जन्तोर्विविधदुःखाभिहतस्य मिथ्यादर्शनाद्युपहतमतेर्ज्ञानदर्शनावरणमोहान्तरायोदयाभिभूतस्य।

टी०—अनादाविति सर्वकालावस्थायिनि । संसारे [illegible]रूपेण नरकादिष्वित्याह, तेषु तेषु भवग्रहणेष्विति । तेष्वेव नरक-तिर्यङ्-मनुष्या-मरभवग्रहणेषु पुनः पुनर्भ्रमणात् परिभ्रमतोऽनन्तकृत्वः प्राणिनः शारीरमानसैर्नानाप्रकारैर्दुःखैरभिद्रुतस्य तत्त्वार्थाश्रद्धानाविरतिप्रमादकषायादिभिरुपहतमतेः, ज्ञानावरणाद्युदयाभिभूतस्य-ज्ञानावरणादिकर्मचतुष्टयं घातिकर्म विशेषतो मोहनीयं सम्यग्दर्शनादिगुणस्य विघातकमित्येतदाह ।

भा०—सम्यग्दर्शनादिविशुद्धो बोधिर्दुर्लभो भवतीत्यनुचिन्तयेत् । एवं ह्यस्य बोधिदुर्लभत्वमनुचिन्तयतो बोधिं प्राप्य प्रमादो न भवतीति बोधिदुर्लभत्वानुप्रेक्षा ॥ ११ ॥

टी०—सम्यग्दर्शनादीत्यादि । सम्यग्दर्शनविरत्यप्रमादकषायविशुद्धो बोधिर्दुर्लभो भवतीति विभक्तिविपरिणामेनाभिसम्बन्धनीयम् । जन्तुना दुर्लभ इति । बोधिशब्देनात्र चारित्रमेव विवक्षितम् । अथवा पाठान्तरं सम्यग्दर्शनादिर्विशुद्धो बोधिः सम्यग्दर्शनादिरेव बोधिरपगतसकलशङ्कादिदोषरहितो दुःखेन लभ्यत इति । एवं बोधिदुर्लभत्वमनुचिन्तयतो बोधिं प्राप्य प्रमादो न भवतीति बोधिदुर्लभत्वानुप्रेक्षा ॥

पाठभेदः

स्वाख्यातधर्मानुप्रेक्षाप्रतिपादनायाह—

भा०—सम्यग्दर्शनद्वारः पञ्चमहाव्रतसाधनो द्वादशाङ्गोपदिष्टतत्त्वो गुप्त्यादिविशुद्धव्यवस्थानः संसारनिर्वाहकः।

टी०—सम्यग्दर्शनद्वार इत्यादि । तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तत् द्वारं-मुखं यस्य धर्मस्येति । नहि सम्यग्दर्शनप्रतिष्ठामन्तरेण महाव्रतादिलाभः समस्ति । प्रागेव सम्यग्दर्शनं द्वारभूतं धर्मानुष्ठानस्येति प्रतिपादयति, सम्यग्दर्शनद्वारेण धर्मावगाह इति । पञ्च महाव्रतानि साधनं यस्येत्यनेन समस्तमूलोत्तरगुणपरिग्रहः । आचारादीनि दृष्टिवादपर्यन्तानि द्वादशाङ्गानि—अर्हत्प्रणीतागमः तेनोपदिष्टं तत्त्वं-स्वरूपं यस्य [illegible], चरणकरणलक्षणस्येत्यर्थः । [illegible] तिपरिपालनविशुद्धं व्यवस्थानमस्येति । [illegible]: समितिभिश्च परिपालनं [illegible] मलं व्यवस्थानं-स्वरूपावस्थानं यस्य स

[illegible]

' धर्माचार्यस्य' इति ङ-पाठः ।

तथोक्तः। संसारो नरकादिगतिचतुष्टयं तस्मान्निर्वाहको निस्तारकः। न चासावभावीभवति मुक्तावस्थायामित्याह—

भा०—निःश्रेयसप्रापको भगवता परमर्षिणाऽर्हताऽहो स्वाख्यातो धर्म इत्येवमनुचिन्तयेत्। एवं ह्यस्य धर्मस्वाख्याततत्वमनुचिन्तयतो मार्गाच्यवने तदनुष्ठाने च व्यवस्थानं भवतीति धर्मस्वाख्याततत्वानुचिन्तनानुप्रेक्षा ॥ १२ ॥ ७ ॥

टी०—निःश्रेयसप्रापक इति। निश्चितं श्रेयो निःश्रेयसं—स्वात्मन्येवावस्थानं समस्तकर्मापेतस्य निःश्रेयसमुच्यते तस्य प्रापकः, तस्य पर्यायान्तरस्योत्पादक इत्यर्थः। यशोविभवादियुक्तो भगवान्, परमर्षिरिति समधिगतसकलज्ञानस्तीर्थकरनामकर्मोदयात् तीर्थस्य प्रणायकः चन्दनपूजाद्यर्होऽर्हन् तेनामोघवचनेन स्वाख्यातो अहो इत्याश्चर्यं नापरेण केनचिदेवं कथितः, सुप्रभृतसर्गोपवादलक्षणः, ख्यातो धर्म इत्येवमस्य धर्मस्वाख्याततत्वमनुचिन्तयतो मार्गाच्यवने तदनुष्ठाने वाऽवस्थानं भवतीति। मार्गो—रत्नत्रयं मुक्तेः पन्थाः तस्मादच्यवनम्—अप्रच्यवनमनपेतत्वम्। तदिति मार्गस्य सम्बन्धः, तस्यानुष्ठानं—श्रद्धानं स्वाध्यायक्रिया चरणम्। एतदेव परमार्थतोऽच्यवनं मार्गाद् यथोक्तक्रियाऽनुष्ठानमित्येषा धर्मस्वाख्याततत्वानुचिन्तनानुप्रेक्षा ॥ ७ ॥

भा०—उक्ता अनुप्रेक्षाः। परीषहान् वक्ष्यामः—

टी०—उक्ता अनुप्रेक्षाः सोदाहरणाः। सम्प्रति परीषहान् वक्ष्याम इति प्रतिजानीते—

परीषहसहने हेतू

सूत्रम्—मार्गाच्यवन-निर्जरार्थं परिषोढव्याः परीषहाः ॥ ९-८ ॥

भा०—सम्यग्दर्शनादेर्मोक्षमार्गादच्यवनार्थं कर्मनिर्जरार्थं च परिषोढव्याः परीषहा इति ॥ ८ ॥

टी०—अर्थशब्दः प्रत्येकमभिसम्बध्यते—मार्गाच्यवनार्थं निर्जरार्थं च। परीषहाधिसहने मार्गाच्यवनं प्रयोजनम्। कदाचित् क्लिष्टचित्तः क्लीबत्वात् सहनासमर्थः सन्मार्गात् प्रच्यवेतापि अतस्तत्सहनादरः मार्गः, तस्य तु सम्यगधिसहमानस्य गिरेरिव निष्प्रकम्पचेतसो निराकुलध्यानस्य जायते कर्मनिर्जरा। एतदेवाह—सम्यग्दर्शनादेरित्यादिना। तत्त्वार्थश्रद्धानादिलक्षणो मार्गो निर्वृतेरात्यन्तिक्याः, तस्या मार्गान्मा प्रच्योष्महीति सह्यन्ते

१ 'निःसारकः' इति च-पाठः। २ 'मर्षिणाऽहो ख्यातो धर्म' इति ग-पाठः। ३ 'स्वाख्याततत्त्व०' इति घ-पाठः। ४ 'आत्मन्येव' इति ङ-पाठः। ५ 'विभावादि' इति घ-पाठः। ६ 'कुलस्य ध्यानैक(?)जायते' इति ग-च-पाठः। ७ 'श्रद्धानाश्रद्धानादि' इति ग-पाठः।

अनादौ संसारे इत्यादिना बोधिदुर्लभत्वानुप्रेक्षां निरूपयति—

भा०—अनादौ संसारे नरकादिषु तेषु तेषु भवग्रहणेष्वनन्तकृत्वः परिवर्तमानस्य जन्तोर्विविधदुःखाभिहतस्य मिथ्यादर्शनाद्युपहतमतेर्ज्ञानदर्शनावरणमोहान्तरायोदयाभिभूतस्य ।

टी०—अनादाविति सर्वकालावस्थायिनि । संसारे किंरूपेण नरकादिष्वित्याह, तेषु तेषु भवग्रहणेष्विति । तेष्वेव नरक-तिर्यङ्-मनुष्या-ऽमरभवग्रहणेषु पुनः पुनश्चक्रवत् परिभ्रमतोऽनन्तकृत्वः प्राणिनः शारीरमानसैर्नानाप्रकारैर्दुःखैरालीढस्य तत्त्वार्थाश्रद्धानाविरतिप्रमादकषायादिभिरुपहतमतेः, ज्ञानावरणाद्युदयाभिभूतस्य—ज्ञानावरणादि कर्मचतुष्टयं घातिकर्म विशेषतो मोहनीयं सम्यग्दर्शनादिमार्गस्य विघातकमित्येतदाह ।

भा०—सम्यग्दर्शनादिविशुद्धो बोधिर्दुर्लभो भवतीत्यनुचिन्तयेत् । एवं ह्यस्य बोधिदुर्लभत्वमनुचिन्तयतो बोधिं प्राप्य प्रमादो न भवतीति बोधिदुर्लभत्वानुप्रेक्षा ॥ ११ ॥

टी०—सम्यग्दर्शनादीत्यादि । सम्यग्दर्शनविरत्यप्रमादकषायविशुद्धो बोधिर्दुर्लभो भवतीति विभक्तिविपरिणामेनाभिसम्बन्धनीयम् । जन्तुना दुर्लभ इति । बोधिशब्देनात्र चारित्रमेव विवक्षितम् । अथवा पाठान्तरं सम्यग्दर्शनादिर्विशुद्धो बोधिः सम्यग्दर्शनादिरेव बोधिरपगतसकलशङ्कादिदोषरहितो दुःखेन लभ्यत इति । एवं बोधिदुर्लभत्वमनुचिन्तयतो बोधिं प्राप्य प्रमादो न भवतीति बोधिदुर्लभत्वानुप्रेक्षा ॥

पाठभेदः

स्वाख्यातधर्मानुप्रेक्षाप्रतिपादनायाह—

भा०—सम्यग्दर्शनद्वारः पञ्चमहाव्रतसाधनो द्वादशाङ्गोपदिष्टतत्त्वो गुप्त्यादिविशुद्धव्यवस्थानः संसारनिर्वाहकः ।

टी०—सम्यग्दर्शनद्वार इत्यादि । तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं तत् द्वारं-मुखं यस्य धर्मस्येति । नहि सम्यग्दर्शनप्रतिष्ठामन्तरेण महाव्रतादिलाभः समस्ति । प्रागेव सम्यग्दर्शनं द्वारभूतं धर्मानुष्ठानस्येति प्रतिपादयति, सम्यग्दर्शनद्वारेण धर्मावगाह इति । पञ्च महाव्रतानि साधनं यस्येत्यनेन समस्तमूलोत्तरगुणपरिग्रहः । आचारादीनि दृष्टिवादपर्यन्तानि द्वादशाङ्गानि—अर्हदाप्तप्रणीतागमः तेनोपदिष्टं तत्त्वं-स्वरूपं यस्य धर्मस्य, चरणकरणलक्षणस्येत्यर्थः । गुप्तिसमितिपरिपालनविशुद्धं व्यवस्थानमस्येति । गुप्तिभिः समितिभिश्च परिपालनं—परिरक्षणं विशुद्धं-निर्मलं व्यवस्थानं-स्वरूपावस्थानं यस्य स

१ स्वरूपे इति ग-पाठः । २ ' दर्शनाधारभूतं ' इति ङ-पाठः । ३ ' धर्माचार्यस्य' इति ङ-पाठः ।

उष्णमापतितं सम्यक् सहेत। न चातपत्राद्युष्णवारणायाददीतेति। दंशमशकादिभिः दश्यमानोऽपि न ततः स्थानादपगच्छेत्, न च तदपनयनार्थं धूमादिना यतेत, न च व्यजनादिना निवारयेदित्येवं दंशमशकपरीषहजयः कृतः स्यात्, नान्यथेति।

नाग्न्यपरीषहस्तु न निरुपकरणतैव दिगम्बरभौतादिवत्। किं तर्हि? प्रवचनोक्तविधानेन नाग्न्यम्। प्रवचने तु द्विप्रकारः कल्पः-जिनकल्पः स्थविरकल्पश्च। तत्र स्थविरकल्पे परिनिष्पन्नः, क्रमेण धर्मश्रवणसमनन्तरं प्रव्रज्याप्रतिपत्तिः। ततो द्वादश वर्षाणि सूत्रग्रहणं पश्चात् द्वादश वर्षाण्यर्थग्रहणं ततो द्वादशवर्षाण्यनियतवासी देशदर्शनं कुरुते। कुर्वन्नेव च देशदर्शनं निष्पादयति शिष्यान्। शिष्यनिष्पत्तेरनन्तरं प्रतिपद्यते अभ्युद्यतविहारम्। स च

स्थविरकल्पः

त्रिविधः-जिनकल्पः शुद्धः परिहारो यथालन्दश्च। तत्र जिनकल्पप्रतिपत्तियोग्य एव जिनकल्पं प्रतिपत्तुकामः प्रथममेव तपःसत्त्वादिभावनाभिरात्मानं भावयति। भावितात्मा च द्विविधे परिकर्मणि प्रवर्तते। यदि पाणिपात्रलब्धिरस्ति ततस्तदनुरूपमेव परिकर्माचेष्टते। अथ पाणिपात्रलब्धिर्नास्ति ततः प्रतिग्रहधारित्वपरिकर्मणि प्रवर्तते। तत्र यः पाणिपात्रलब्धिसम्पन्नस्तस्योपधिरवश्यंतया रजोहरणं मुखवस्त्रिका च। कल्पग्रहणात् त्रिविधश्चतुर्विधः पञ्चविधो वा। प्रतिग्रहधारिणस्तु नवप्रकारोऽवश्यंतया, कल्पग्रहणाद् दशविध एकादशविधो (द्वादशविधो) वा उपधिरागमाभिहितः। एवंविधं नाग्न्यमिष्टम्। दशविधसामाचार्या चेमाः पञ्च तेषां सामाचार्यः आप्रच्छनं मिथ्यादुष्कृतमावश्यका निशीथि-(षेधि?)का गृहस्थोपसम्पच्च। उपरितनी वा त्रिप्रकारा सामाचारी आवश्यकादिका। श्रुतसम्पदपि तेषामाचारवस्तु नवमस्य पूर्वस्य जघन्यतः। तत्र हि कालपरिज्ञानं न्यक्षेण, उत्कर्षेण दश पूर्वाणि भिन्नानि, न सम्पूर्णानि। वज्रर्षभनाराचसंहननाश्च ते वज्रकुड्यकल्पधृतयः। स्थितिरपि तेषां क्षेत्रादिका अनेकभेदा। क्षेत्रतस्तावद् जन्मना सद्भावेन च सर्वास्वेव कर्मभूमिषु, संहरणतः कदाचित् कर्मभूमावकर्मभूमौ वा, अवसर्पिण्यां कालतः तृतीयचतुर्थयोः समयोर्जन्मतः त्रिचतुर्थपञ्चमीषु सद्भावः। चतुर्थ्यां लब्धजन्मा पञ्चम्यां प्रव्रजति। उत्सर्पिण्यां दुष्षमादिषु त्रिषु कालविभागेषु जन्म, द्वयोस्तु सद्भावः। सामायिकच्छेदोपस्थाप्ययोर्जिनकल्पप्रतिपत्तिश्चरणयोः। एवं तीर्थपर्यायागमवेदादिकाऽपि स्थितिरुपयुज्यागमानुसारेण वाच्या।

कल्पे उपधिः

ननु चाचेलक्यादिर्दशविधः कल्पः। तत्राचेलक्यं स्फुटमेवोक्तम्। तत्र च मध्यमतीर्थवर्तिनां सामायिकसंयतानां चतुर्विधः कल्पोऽवस्थितोऽवश्यंतया करणीयः। यथाऽऽह—

अवस्थितकल्पस्य चातुर्विध्यम्

"शय्यातरपिण्डत्यागः कृतिकर्म च तथा व्रतादेशः।
पुरुषज्येष्ठत्वं हि, चत्वारोऽवस्थिताः कल्पाः॥ १॥"

१ 'आणाया०' इति च-पाठः। २ 'तत्र महणं' इति ङ-पाठः। ३ 'स्थापनयोः' इति ग-पाठः।
४ 'षेधादि' इति ङ-पाठः।

परीषहाः । तथा ज्ञानावरणादिकर्मनिर्जरार्थं च परिषोढव्याः निर्जरा(प्रस्थान)प्रतिबन्धककर्मक्षयहेतवः परिषोढव्याः, परीषहा इति निर्वचनम् । समन्तादापतन्तः क्षुत्पिपासादयो द्रव्यक्षेत्रकालभावापेक्षाः सोढव्याः—सहितव्याः परीषहा उच्यन्ते । "कृत्यल्युटो बहुलं" ( पा० अ० ३, पा० ३, सू० ११२ ) इति करणाधिकरणयोरन्यत्रापि कर्मणि घञ्प्रत्ययः । परिषह्यन्त इति परीषहाः ॥ ८ ॥

कियन्तस्ते किंनामानः किंस्वरूपाश्चेत्याह—

भा०—तद्यथा—

टी०—तद्यथेति सङ्ख्यादिनिरूपणोपक्रमणम् ।

२२ परीषहाः

सूत्रम्—क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याऽऽक्रोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाऽज्ञानादर्शनानि ॥ ९–९ ॥

टी०—क्षुत्पिपासेति सूत्रम् । क्षुत्पिपासादयः परीषहा द्वाविंशतिर्नामतः क्षुदादिनामानः । स्वरूपमपि शब्दार्थेनावेदितमेव । सङ्ख्यादीनां त्रयाणामपि प्रदर्शनं करोति भाष्यकारः—

भा०—क्षुत्परीषहः १ पिपासा २ शीतं ३ उष्णं ४ दंशमशकं ५ नाग्न्यं ६ अरतिः ७ स्त्रीपरीषहः ८ चर्यापरीषहः ९ निषद्या १० शय्या ११ आक्रोशः १२ वधः १३ याचनं १४ अलाभः १५ रोगः १६ तृणस्पर्शः १७ मलं १८ सत्कारपुरस्कारः १९ प्रज्ञाऽज्ञाने २०–२१ अदर्शनपरीषहः २२ इति ॥

टी०—क्षुद्वेदनामुदितां शेषवेदनातिशायिनीं सम्यग् विषहमानस्य जठरान्त्रविदाहिनीमागमविहितेन विधिना क्षुधां[1] शमयतोऽनेषणीयं च[2] परिहरतः क्षुत्परीषहजयो भवति । अनेषणीयग्रहणे तु न विजितः स्यात् क्षुत्परीषहः । एवं पिपासापरीषहः । एषणीयभावे तु प्राणिदयालुना समस्तमनेषणीयं परिहरता शरीरस्थितिः कार्या । शीतपरीषहजयस्तु शीते पतति महत्यपि जीर्णवसनः परित्राणवर्जितो नाकल्प्यानि वासांसि गृह्णाति शीतत्राणाय । आगमविहितेन विधिना एषणीयमेव कल्पादि गवेषयेत् परिभुञ्जीत वा । नापि शीतार्तोऽग्निं ज्वालयेत् । अन्यज्वालितं वा नासेवेत । एवमनुतिष्ठता शीतपरीषहजयः कृतो भवति । एवमुष्णतप्तोऽपि जलावगाहनस्नानव्यजनवातादि वर्जयेत्, अभिधारितच्छायादि वा । अत

1 'क्षुधादि' इति च-पाठः । 2 'ऽनैषणायां च०' इति ङ-च-पाठः ।

उष्णमापतितं सम्यक् सहेत। न चातपत्राद्युष्णवारणायाददीतेति। दंशमशकादिभिः दश्यमानोऽपि न ततः स्थानादपगच्छेत्, न च तदपनयनार्थं धूमादिना यतेत, न च व्यजनादिना निवारयेदित्येवं दंशमशकपरीषहजयः कृतः स्यात्, नान्यथेति।

नाग्न्यपरीषहस्तु न निरुपकरणतैव दिगम्बरभौतादिवत्। किं तर्हि? प्रवचनोक्तविधानेन नाग्न्यम्। प्रवचने तु द्विप्रकारः कल्पः–जिनकल्पः स्थविरकल्पश्च। तत्र स्थविरकल्पे परिनिष्पन्नः, क्रमेण धर्मश्रवणसमनन्तरं प्रव्रज्याप्रतिपत्तिः। ततो द्वादश वर्षाणि सूत्रग्रहणं पश्चात् द्वादश वर्षाण्यर्थग्रहणं ततो द्वादशवर्षाण्यनियतवासी देशदर्शनं कुरुते। कुर्वन्नेव च देशदर्शनं निष्पादयति शिष्यान्। शिष्यनिष्पत्तेरनन्तरं प्रतिपद्यते अभ्युद्यतविहारम्। स च त्रिविधः–जिनकल्पः शुद्धः परिहारो यथालन्दश्च। तत्र जिनकल्पप्रतिपत्तियोग्य एव जिनकल्पं प्रतिपत्तुकामः प्रथममेव तपःसत्त्वादिभावनाभिरात्मानं भावयति। भावितात्मा च द्विविधे परिकर्मणि प्रवर्तते। यदि पाणिपात्रलब्धिरस्ति ततस्तदनुरूपमेव परिकर्माचेष्टते। अथ पाणिपात्रलब्धिर्नास्ति ततः प्रतिग्रहधारित्वपरिकर्मणि प्रवर्तते। तत्र यः पाणिपात्रलब्धिसम्पन्नस्तस्योपधिरवश्यंतया रजोहरणं मुखवस्त्रिका च। कल्पग्रहणात् त्रिविधश्चतुर्विधः पञ्चविधो वा। प्रतिग्रहधारिणस्तु नवप्रकारोऽवश्यंतया, कल्पग्रहणाद् दशविध एकादशविधो (द्वादशविधो) वा उपधिरागमाभिहितः। एवंविधं नाग्न्यमिष्टम्।

स्थविरकल्पः

कल्पे उपधिः

दशविधसामाचार्यां चेमाः पञ्च तेषां सामाचार्यः आप्रच्छनं मिथ्यादुष्कृतमावश्यका निशीथि(षेधि?)का गृहस्थोपसम्पच्च। उपरितनी वा त्रिप्रकारा सामाचारी आवश्यकादिका। श्रुतम्पदपि तेषामाचारवस्तु नवमस्य पूर्वस्य जघन्यतः। तत्र हि कालपरिज्ञानं न्यक्षेण, उत्कर्षेण दश पूर्वाणि भिन्नानि, न सम्पूर्णानि। वज्रर्षभनाराचसंहननाश्च ते वज्रकुड्यकल्पधृतयः। स्थितिरपि तेषां क्षेत्रादिका अनेकभेदा। क्षेत्रतस्तावद् जन्मना सद्भावेन च सर्वास्वेव कर्मभूमिषु, संहरणतः कदाचित् कर्मभूमावकर्मभूमौ वा, अवसर्पिण्यां कालतः तृतीयचतुर्थयोः समयोर्जन्मतः त्रिचतुर्थपञ्चमीषु सद्भावः। चतुर्थ्यां लब्धजन्मा पञ्चम्यां प्रव्रजति। उत्सर्पिण्यां दुष्षमादिषु त्रिषु कालविभागेषु जन्म, द्वयोस्तु सद्भावः। सामायिकच्छेदोपस्थाप्ययोर्जिनकल्पप्रतिपत्तिश्चरणयोः। एवं तीर्थपर्यायागमवेदादिकाऽपि स्थितिरुपयुज्यागमानुसारेण वाच्या।

ननु चाचेलक्यादिर्दशविधः कल्पः। तत्राचेलक्यं स्फुटमेवोक्तम्। तत्र च मध्यमतीर्थवर्तिनां सामायिकसंयतानां चतुर्विधः कल्पोऽवस्थितोऽवश्यंतया करणीयः। यथाऽऽह—

अवस्थितकल्पस्य चातुर्विध्यम्

"शय्यातरपिण्डत्यागः कृतिकर्म च तथा व्रतादेशः।
पुरुषज्येष्ठत्वं हि, चत्वारोऽवस्थिताः कल्पाः॥ १॥"

---

१ 'प्राणायां॰' इति च-पाठः। २ 'तत्र ग्रहणं' इति ङ-पाठः। ३ 'स्थापनयोः' इति ग-पाठः। ४ 'वेषादि' इति ङ-पाठः।

परीषहाः । तथा ज्ञानावरणादिकर्मक्षपणार्थं च (परि)षोढव्याः सिद्धिप्रस्थानप्रातिकूल्यकर्मवि-रविपाकहेतवः परिषोढव्याः, परीषहा इति निर्वचनम् । मार्गाच्यवनार्थाः क्षुत्पिपासादयो द्रव्यक्षेत्रकालभावापेक्षाः सोढव्याः-सहितव्याः परीषहा मन्यन्ते । "कृत्यल्युटो बहुलं" ( पा० अ० ३, पा० ३, सू० ११३ ) इति कृत्यानामपि कृत्यान्यानन्यत्रापि कर्मणि प्रत्ययः । परिसह्यन्त इति परीषहाः ॥ ८ ॥

कियन्तस्ते किंनामानः किंस्वरूपाश्चेत्याह—

भा०—तद्यथा—

टी०—तद्यथेति सङ्ख्यादिनिरूपणोपक्रमणम् ।

२२ परीषहाः

सूत्रम्—क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्या-शय्याऽऽक्रोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कार-पुरस्कारप्रज्ञाऽज्ञानादर्शनानि ॥ ९–९ ॥

टी०—क्षुत्पिपासेति सूत्रम् । क्षुत्पिपासादयः परीषहा द्वाविंशतिर्नामतः क्षुदादि-नामानः । स्वरूपमपि शब्दार्थेनावेदितमेव । सङ्ख्यादीनां त्रयाणामपि प्रदर्शनं करोति भाष्यकारः—

भा०—क्षुत्परीषहः १ पिपासा २ शीतं ३ उष्णं ४ दंशमशकं ५ नाग्न्यं ६ अरतिः ७ स्त्रीपरीषहः ८ चर्यापरीषहः ९ निषद्या १० शय्या ११ आक्रोशः १२ वधः १३ याचनं १४ अलाभः १५ रोगः १६ तृणस्पर्शः १७ मलं १८ सत्कार-पुरस्कारः १९ प्रज्ञाऽज्ञाने २०–२१ अदर्शनपरीषहः २२ इति ॥

टी०—क्षुद्वेदनामुदितां शेषवेदनातिशायिनीं सम्यग् विषहमानस्य जठरान्त्रविदाहि-नीमागमविहितेन विधिना क्षुधां शमयतोऽनेषणीयं च परिहरतः क्षुत्परीषहजयो भवति । अनेषणीयग्रहणे तु न विजितः स्यात् क्षुत्परीषहः । एवं पिपासापरीषहः । एषणीयभावे तु प्राणिदयालुना समस्तमनेषणीयं परिहरता शरीरस्थितिः कार्या । शीतपरीषहजयस्तु शीते पतति महत्यपि जीर्णवसनः परित्राणवर्जितो नाकल्प्यानि वासांसि गृह्णाति शीतत्राणाय । आग-मविहितेन विधिना एषणीयमेव कल्पादि गवेषयेत् परिभुञ्जीत वा । नापि शीतार्तोऽग्निं ज्वालयेत् । अन्यज्वालितं वा नासेवेत । एवमनुतिष्ठता शीतपरीषहजयः कृतो भवति । एवमुष्णतप्तोऽपि जलावगाहनस्नानव्यजनवातादि वर्जयेत्, अभिधारितच्छायादि वा । अत

१ 'क्षुधादि' इति च-पाठः । २ 'ऽनैषणायां च०' इति ङ-च-पाठः ।

समधिगम्याः आचार्यो-पाध्याय-स्थविर-भिक्षु-क्षुल्लकविभागाः मासकल्पविहारिणः परितनुकमूल्यवसनस्थगिताग्रिमभागाः वर्षाकल्पादिपरिभोगकारिणः दशविधसामाचार्यनुष्ठायिनः उद्गमोत्पादनैषणादिशुद्धाहारोपधिशय्यासेविनश्चेति । एवं जिनकल्पिकादीनां गच्छवासिनां च पारमर्षप्रवचनानुसारिणां नाग्न्यपरीषहजयः सम्भवतीति, नान्येषाम्।

अरतिः उत्पद्यते कदाचिद् विहरतः तिष्ठतो वा सूत्रोपदेशेन, तत्रोत्पन्नारतिनाऽपि सम्यग्धर्मारामरतेनैव भवितव्यम्, एवमरतिपरीषहजयः स्यादिति।

स्त्रीणामङ्गप्रत्यङ्गसंस्थानहसितललितविभ्रमादिचेष्टाश्चिन्तयेत् न जातुचित्, चक्षुरपि न तासु निवेशयति मोक्षमार्गार्गलासु कामबुद्ध्या, एवं स्त्रीपरीषहजयः कृतो भवति।

वर्जितालस्यो ग्रामनगरकुलादिष्वनियतवसतिर्निर्ममत्वः प्रतिमासं चर्यामाचरेदित्येवं [1]चर्यापरीषहजयः।

निषीदन्त्यस्यामिति निषद्या–स्थानं स्त्रीपशुपण्डकविवर्जितमिष्टानिष्टोपसर्गजयिना तत्रानुद्विग्नेन निषद्यापरीषहजयः कार्यः।

शय्या–संस्तारकः मञ्चकादिपट्टो वा मृदुकठिनादिभेदेनोच्चावचः प्रतिश्रयो वा पांसूत्कर-प्रचुरः शिशिरे बहुघर्मको वा तत्र नोद्विजेत कदाचनेति शय्यापरीषहजयः।

आक्रोशः–अनिष्टवचनं, तद् यदि सत्यं कः कोपः? शिक्षयति हि मामयमुपकारी, न पुनरेवं करिष्यामीति। असत्यं चेत् सुतरां कोपो न कर्तव्य इत्याक्रोशपरीषहजयः।

वधः–ताडनं पाणिपार्ष्णिलताकशादिभिः। तदपि शरीरमवश्यंतया विध्वंसत एवेति मत्वा सम्यक् सहितव्यम्, अन्यदेवेदमात्मनः पुद्गलसंहतिरूपम्, आत्मा पुनर्न शक्यत एव ध्वंसयितुम्। अतः स्वकृतकर्मफलमुपनतमिदं ममेति सम्यक् सहमानस्य वधपरीषहजयः।

याचनं–मार्गणं भिक्षोर्वस्त्र-पात्रा-ऽन्न-पान-प्रतिश्रयादेः परतो लब्धव्यं सर्वमेव। शालीनतया च न [2]याच्ञां प्रत्याद्रियते, साधुना तु प्रागल्भ्यभाजा याचनमवश्यमेव कार्यमित्येवं याच्ञापरीषहजयो विधेयः।

अलाभस्तु याचिते सति प्रत्याख्यानं विद्यमानमविद्यमानं वा न ददाति, यस्य स्वं तत् कदाचिद् वा दत्ते, कदाचिन्न, कस्तत्रापरितोषो न यच्छति सति?। यथोक्तम् (दशवै० अ० ५, उ० २)—"[3]बहुं परघरे अत्थि" इत्यादि। अलाभेऽपि समचेतसैव अविकृतस्वान्तेनैव भवितव्यमित्यलाभपरीषहजयः।

---

१ 'अनृतं' इति ङ–पाठः। २ 'याचनया०' इति ङ–पाठः।

३ सम्पूर्णं पद्यं साक्षीभूतपाठरूपेण दृश्यते श्रीजिनसूरप्रणीतायां प्रियङ्करनृपकथायां (पृ० २२), तच्चैवम्—

"बहुं परघरे अत्थि विविहं खाइमं साइमं।
न तत्थ पंडिओ कुप्पे इच्छा दिज्ज परो न वा॥"

एतच्छाया यथा—

बहु परगृहेऽस्ति विविधं खादिमं स्वादिमम्।
न तत्र पण्डितः कुप्येत् इच्छया दद्यात् परो न वा॥

षड्विधमानवस्थितः कल्पः । यथोक्तम्—

अनवस्थितस्य पाड्विध्यम्

" आचेलक्योद्देशिक-नृपपिण्डत्याग-मासकल्पाश्च ।
वर्षाविधिः प्रतिक्रमणविधानं चानवस्थिताः कल्पाः ॥ १ ॥ "

आद्यचरमतीर्थङ्करतीर्थवर्तिनां तु दशविधो व्यवस्थितः कल्पः ।

अस्य तु पुनर्भगवतस्तीर्थे श्रीवर्धमानचन्द्रस्य ।
स्थित एवैषः कल्पः स्थानेषु दशस्वपि यथावत् ॥ १ ॥

किं पुनः कारणमेवदेवं तीर्थकृतां विषमगुपदेशनम् ?

" आर्जव-जडा अनार्जव-जडा वृषभ-वीरतीर्थकालभवाः ।
मनुजा यस्मात् तस्मात्, कल्पः स्थित एव स प्रोक्तः ॥ १ ॥"

सत्यमुक्तमाचेलक्यम् । तत् तु यथोक्तं तथा कर्तव्यम् । तीर्थकरकल्पस्त्वाद्यन्त एव, मति-श्रुता-ऽवधिज्ञानिनः प्रतिपन्नचारित्रास्तु चतुर्ज्ञानिन इति युक्तमेव तेषां पाणिपात्रभोजित्वमेकदेवदूष्यपरिग्रहश्च । साधवस्तु तदुपदिष्टाचारानुष्ठायिनो जीर्णखण्डितासर्वतनुप्रावरणाः श्रुतोपदेशेन विद्यमानैर्वंविधवासतोऽप्यचेलका एव । यथाऽपगोत्तरणे शाटकपरिवेष्टितशिराः पुरुषो नग्न उच्यते सवस्त्रकोऽपि, तथाऽत्र गुह्यप्रदेशस्थगनाय गृहीतचोलपट्टकोऽपि नग्न एवेति । योषिच्च काचित् परिजूर्णशाटिकापिधाना तन्तुवायमाह–नग्नाऽहं, देहि मे शाटिकामिति । एवं साधवोऽप्यमहाधनमूल्यानि[1] खण्डितानि जीर्णानि च बिभ्रतः श्रुतोपदेशाद् धर्मबुद्ध्या नाग्न्यभाज एवेति । चारित्रसूत्रे शुद्धपारिहारिकान् वक्ष्यामः[2] ॥

यथालन्दिकास्तु भण्यन्ते । लन्दमिति कालस्याख्या । तच्च पञ्चरात्रं, तेषां हि पञ्चको[3] गच्छः, सामाचारी तु तेषां जिनकल्पिकैस्तुल्या, सूत्रप्रमाणभिक्षाचर्याकल्पान् विहाय, तत्राऽपरिसमाप्तालपसूत्रार्थास्तु गच्छप्रतिबद्धाः । परिसमाप्तार्थास्त्वप्रतिबद्धाः । तत्र केचित् जिनकल्पिकाः केचित् स्थविरकल्पिका यथालन्दिनः । तत्र जिनकल्पिकाः निष्प्रतिकर्मशरीराः

जिनकल्पः

समुत्पन्नरोगाश्चिकित्सायां न प्रवर्तन्ते, नेत्रमलाद्यपि नापनयन्ति ; स्थविरकल्पिकास्तूत्पन्नरोगं गच्छे प्रक्षिपन्ति । गच्छोऽपि प्रासुकैषणीयेन परिकर्म करोति भैषजादिना । स्थविरकल्पिकास्त्वेकैकप्रतिग्रहधारिणः सप्रावरणाः । जिनकल्पिकानां[4] तु वस्त्रपात्राणि भाज्यानि । एकत्र पञ्चपञ्चरात्रचारिण एते । गणप्रमाणं जघन्यतस्त्रयो गणाः, शतश उत्कृष्टाः । भिक्षाचर्या तु तेषां पञ्च पञ्चैव, एकैकवीथौ चरन्तः पञ्चभिः षट्कैर्मासकल्पं परिसमापयन्ति । स्थितास्थितकल्पयोश्च द्वयोरपि ते भवन्ति । एवमेते जिनकल्पिकादयो गच्छनिर्गतास्तत्र यद्येवंविधं नाग्न्यमिष्यते ततो[5] नागमोपरोधः । अथ परिधानकपरित्यागमात्रं ततस्तदप्रमाणकं न मनांसि प्रीणयति जैनेन्द्रशासनानुसारिणामिति । स्थविरकल्पिकास्तु चतुर्दशविधोपधयः उत्सर्गापवादव्यवहारिणः औपग्रहिकोपधिधारिणश्च[6][7] । प्रव्रज्यादिद्वार-

१ 'महार्घमूल्यानि' इति ङ-पाठः । २ 'काद् वक्ष्यामः' इति ङ-पाठः । ३ 'एकत्र पञ्चरात्र' इति ङ-पाठः । ४ 'कल्पिकयो' इति ङ-पाठः । ५ 'ततो' इति ङ-पाठः । ६ 'औपधग्राहिको' इति च-पाठः । ७ 'धारणाश्च' इति ङ-पाठः ।

समधिगम्याः आचार्यो-पाध्याय-स्थविर-भिक्षु-क्षुल्लकविभागाः मासकल्पविहारिणः परितनुकमूल्यवसनस्थगिताग्रिमभागाः वर्षाकल्पादिपरिभोगकारिणः दशविधसामाचार्यनुष्ठायिनः उद्गमोत्पादनैषणादिशुद्धाहारोपधिशय्यासेविनश्चेति। एवं जिनकल्पिकादीनां गच्छवासिनां च पारमर्षप्रवचनानुसारिणां नाग्न्यपरीषहजयः सम्भवतीति, नान्येषाम्।

अरतिः उत्पद्यते कदाचिद् विहरतः तिष्ठतो वा सूत्रोपदेशेन, तत्रोत्पन्नारतिनाऽपि सम्यग्धर्मारामरतेनैव भवितव्यम्, एवमरतिपरीषहजयः स्यादिति।

स्त्रीणामङ्गप्रत्यङ्गसंस्थानहसितललितविभ्रमादिचेष्टाश्चिन्तयेत् न जातुचित्, चक्षुरपि न तासु निवेशयति मोक्षमार्गार्गलासु कामबुद्ध्या, एवं स्त्रीपरीषहजयः कृतो भवति।

तर्जितालस्यो ग्रामनगरकुलादिष्वनियतवसतिर्निर्ममत्वः प्रतिमासं चर्यामाचरेदित्येवं चर्यापरीषहजयः।

निषीदन्त्यस्यामिति निषद्या-स्थानं स्त्रीपशुपण्डकविवर्जितमिष्टानिष्टोपसर्गजयिना तत्रानुद्विग्नेन निषद्यापरीषहजयः कार्यः।

शय्या-संस्तारकः मञ्चकादिपट्टो वा मृदुकठिनादिभेदेनोच्चावचः प्रतिश्रयो वा पांसूत्कर-प्रचुरः शिशिरे बहुघर्मको वा तत्र नोद्विजेत कदाचनेति शय्यापरीषहजयः।

आक्रोशः-अनिष्टवचनं, तद् यदि सत्यं कः कोपः ? शिक्षयति हि मामयमुपकारी, न पुनरेवं करिष्यामीति। असत्यं चेत् सुतरां कोपो न कर्तव्य इत्याक्रोशपरीषहजयः।

वधः-ताडनं पाणिपार्ष्णिलताकशादिभिः। तदपि शरीरमवश्यंतया विध्वंसत एवेति मत्वा सम्यक् सहितव्यम्, अन्यदेवेदमात्मनः पुद्गलसंहतिरूपम्, आत्मा पुनर्न शक्यत एव ध्वंसयितुम्। अतः स्वकृतकर्मफलमुपनतमिदं ममेति सम्यक् सहमानस्य वधपरीषहजयः।

याचनं-मार्गणं भिक्षोर्वस्त्र-पात्रा-ऽन्न-पान-प्रतिश्रयादेः परतो लब्धव्यं सर्वमेव। शालीनतया च न याच्ञां प्रत्याद्रियते, साधुना तु प्रागल्भ्यभाजा याचनमवश्यमेव कार्यमित्येवं याच्ञापरीषहजयो विधेयः।

अलाभस्तु याचिते सति प्रत्याख्यानं विद्यमानमविद्यमानं वा न ददाति, यस्य स्वं तत् कदाचित् वा दत्ते, कदाचिन्न, कस्तत्रापरितोषो न यच्छति सति ?। यथोक्तम् ( दशवै० अ० ५, उ० २ )—"[3]बहुं परघरे अत्थि" इत्यादि। अलाभेऽपि समचेतसैव अविकृतस्वान्तेनैव भवितव्यमित्यलाभपरीषहजयः।

---

१ 'अनृतं' इति ङ-पाठः। २ 'याचनया०' इति ङ-पाठः।

३ सम्पूर्णं पद्यं साक्षीभूतपाठरूपेण दृश्यते श्रीजिनसूरप्रणीतायां प्रियङ्करनृपकथायां (पृ० २२), तच्चैवम्—

"बहुं परघरे अत्थि विविहं खाइमं साइमं।
न तत्थ पंडिओ कुप्पे इच्छा दिज्ज परो न वा॥"

एतच्छाया यथा—

बहु परगृहेऽस्ति विविधं खादिमं स्वादिमम्।
न तत्र पण्डितः कुप्येत् इच्छया दद्यात् परो न वा॥

षड्विधमानवस्थितः कल्पः । यथोक्तम्—

अनवस्थितस्य पाड्विध्यम्

" आचेलाचौद्देशिक-नृपपिण्डत्याग-मासकल्पाश्च ।
वर्षाविधिः प्रतिक्रमणविधानं चाऽनवस्थिताः कल्पाः ॥ १ ॥ "

आद्यचरमतीर्थङ्करतीर्थवर्तिनां तु दशविधो ह्यवस्थितः कल्पः ।

अस्य तु पुनर्भगवतस्तीर्थे श्रीवर्धमानचन्द्रस्य ।
स्थित एवैषः कल्पः स्थानेषु दशस्वपि यथावत् ॥ २ ॥

किं पुनः कारणमेतदेवं तीर्थकृतां विषममुपदेशनम् ?

" आर्जव-जडा अनार्जव-जडा वृषभ-वीरतीर्थकालभवाः ।
मनुजा यस्मात् तस्मात्, कल्पः स्थित एव स प्रोक्तः ॥ ३ ॥"

सत्यमुक्तमाचेलक्यम् । तत् तु यथोक्तं तथा कर्तव्यम् । तीर्थंकरकल्पस्तावदन्य एव, मति-श्रुता-ऽवधिज्ञानिनः प्रतिपन्नचारित्रास्तु चतुर्ज्ञानिन इति युक्तमेव तेषां पाणिपात्रभोजित्वमेकदेवदूष्यपरिग्रहश्च । साधवस्तु तदुपदिष्टाचारानुष्ठायिनो जीर्णखण्डितासर्वतनुप्रावरणाः श्रुतोपदेशेन विद्यमानैवंविधवाससोऽप्यचेलका एव । यथाऽऽपगोत्तरणे शाटकपरिवेष्टितशिराः पुरुषो नग्न उच्यते सवस्त्रकोऽपि, तथाऽत्र गुह्यप्रदेशस्थगनाय गृहीतचोलपट्टकोऽपि नग्न एवेति । योषिच्च काचित् परिजूर्णशाटिकापिधाना तन्तुवायमाह—नग्नाऽहं, देहि मे शाटिकामिति । एवं साधवोऽप्यमहाधनमूल्यानि[1] खण्डितानि जीर्णानि च बिभ्रतः श्रुतोपदेशाद् धर्मबुद्ध्या नाग्न्यभाज एवेति । चारित्रसूत्रे शुद्धपारिहारिकान्[2] वक्ष्यामः ॥

यथालन्दिकास्तु भण्यन्ते । लन्दमिति कालस्याख्या । तच्च पञ्चरात्रं, तेषां हि पञ्चको गच्छः, सामाचारी तु तेषां जिनकल्पिकैस्तुल्या, सूत्रप्रमाणभिक्षाचर्याकल्पान् विहाय, तत्रापरिसमाप्तस्वसूत्रार्थास्तु गच्छप्रतिबद्धाः । परिसमाप्तार्थास्त्वप्रतिबद्धाः । तत्र केचित् जिनकल्पिकाः केचित् स्थविरकल्पिका यथालन्दिनः । तत्र जिनकल्पिकाः निष्प्रतिकर्मशरीराः समुत्पन्नरोगाश्चिकित्सायां न प्रवर्तन्ते, नेत्रमलाद्यपि नापनयन्ति ; स्थविरकल्पिकास्तूत्पन्नरोगं गच्छे प्रक्षिपन्ति । गच्छोऽपि प्रासुकैषणीयेन परिकर्म करोति भैषजादिना । स्थविरकल्पिकास्त्वेकैकप्रतिग्रहधारिणः सप्रावरणाः । जिनकल्पिकानां तु वस्त्रपात्राणि भाज्यानि । एकत्र पञ्चपञ्चरात्रचारिण[3] एते । गणप्रमाणं जघन्यतस्त्रयो गणाः, शतश उत्कृष्टाः । भिक्षाचर्या तु तेषां पञ्च पञ्चैव, एकैकवीथौ चरन्तः पञ्चभिः षड्भिर्मासकल्पं परिसमापयन्ति । स्थितास्थितकल्पयोश्च[4] द्वयोरपि ते भवन्ति । एवमेते जिनकल्पिकादयो

जिनकल्पः

गच्छनिर्गतास्तत्र यद्येवंविधं नाग्न्यमिष्यते तदो[5] नागमोपरोधः । अथ परिधानकपरित्यागमात्रं ततस्तदप्रमाणकं न मनांसि प्रीणयति जैनेन्द्रशासनानुसारिणामिति । स्थविरकल्पिकास्तु चतुर्दशविधोपधयः उत्सर्गापवादव्यवहारिणः औपग्रहिकोपधि[6]धारिणश्च[7] । प्रव्रज्यादिद्वार-

१ 'महार्घमूल्यानि' इति ङ-पाठः । २ 'काद् वक्ष्यामः' इति ङ-पाठः । ३ 'एकत्र पञ्चरात्र' इति ङ-पाठः । ४ 'कल्पिकयो' इति ङ-पाठः । ५ 'ततो' इति ङ-पाठः । ६ 'औषधमाहिको' इति च-पाठः । ७ 'धारणाश्च' इति ङ-पाठः ।

भा०—एते द्वाविंशतिर्धर्मविघ्नहेतवो यथोक्तं प्रयोजनमभिसन्धाय राग-
...स्य परिषोढव्या भवन्ति ॥ ९ ॥

...। क्षुदादयोऽदर्शनान्ताः प्रत्यक्षीकृता द्वाविंशतिरिति न न्यूना नाधिकाः
...स्य विघ्नहेतवः-अन्तरायकारणभूताः । यथोक्तं संवराख्यं
...सन्धाय संवरफलं चाभिसन्धाय मोक्षं रागद्वेषौ निहत्येति ।
... केचिद् द्वेषादिति, अतः सर्व एवैते प्रादुःष्यन्तः समापतिताः
...ति ॥ ९ ॥

... सम्बध्नाति—

...प्रकृतीनामुदयादेते परीषहाः प्रादुर्भवन्ति । तद्यथा—
...मोहनीया-ऽन्तरायाणामिति ॥

... तसृणां कर्मप्रकृतीनामुदयाद् विपाकादेते द्वाविंशतिः
... कर्मप्रकृतय इति नामग्राहमाचष्टे—ज्ञानावरणस्य
...प्रकारं-दर्शनमोहनीयं चारित्रमोहनीयं च । तथा
... कः परीषहः कस्य गुणस्थानेषु चेत्याह—

...स्थवीतरागयोश्चतुर्दश ॥ ९-१० ॥

...स्थवीतरागसंयते च चतुर्दश परीषहाः
...चर्याप्रज्ञाज्ञानालाभशय्यावधरोगतृण-

...म् । चतुर्दशानां परीषहाणां सम्परायः—
...तानि नवमे गुणस्थाने । दशमे तु गुण-
...रायो यस्यासौ सूक्ष्मसम्परायः, शमकः
...सम्परायसंयते अमी चतुर्दश
...—आवरणं तत्र स्थितश्छद्मस्थः,
...गस्तमोहक्षयाच्च यस्य, क्रमेणै-
...रागसामान्याच्चैकवचनम् ।
...पठिताः परीषहाः क्षुदा-

...न्ति ' इति घ-पाठः ।

षड्विधमानवस्थितः कल्पः । यथोक्तम्—

अनवस्थितस्य पाडविध्यम्

" आचेलक्यौद्देशिक-नृपपिण्डत्याग-मासकल्पाश्च ।
पर्युषितिः प्रतिक्रमणविधानं चाऽनवस्थिताः कल्पाः ॥ १ ॥ "

आद्यचरमतीर्थकृत्तीर्थवर्तिनां तु दशविधो व्यवस्थितः कल्पः ।

अस्य तु पुनर्भगवत्तीर्थे श्रीवर्धमानचन्द्रस्य ।
स्थित एवैषः कल्पः स्थानेषु दशस्वपि यथावत् ॥ १ ॥

किं पुनः कारणमेवदेवं तीर्थकृतां विषमधुपदेशनम् ?

" आर्जव-जडा अनार्जव-जडा वृषभ-वीरतीर्थकालभवाः ।
मनुजा यस्मात् तस्मात्, कल्पः स्थित एव स प्रोक्तः ॥ १ ॥"

सत्यमुक्तमाचेलक्यम् । तत् तु यथोक्तं तथा कर्तव्यम् । तीर्थंकरकल्पस्तावदन्य एव, मति-श्रुता-ऽवधिज्ञानिनः प्रतिपन्नचारित्रास्तु चतुर्ज्ञानिन इति युक्तमेव तेषां पाणिपात्र-भोजित्वमेकदेवदूष्यपरिग्रहश्च । साधवस्तु तदुपदिष्टाचारानुष्ठायिनो जीर्णखण्डितासर्वतनु-प्रावरणाः श्रुतोपदेशेन विद्यमानैवंविधवाससोऽप्यचेलका एव । यथाऽऽपगोत्तरणे शाटक-परिवेष्टितशिराः पुरुषो नग्न उच्यते सवस्त्रकोऽपि, तथाऽत्र गुह्यप्रदेशस्थगनाय गृहीतचोलपट्ट-कोऽपि नग्न एवेति । योषिच्च काचित् परिजूर्णशाटिकापिधाना तन्तुवायमाह—नग्नाऽहं, देहि मे शाटिकामिति । एवं साधवोऽप्यमहाधनमूल्यानि[1] खण्डितानि जीर्णानि च बिभ्रतः श्रुतो-पदेशाद् धर्मबुद्ध्या नाग्न्यभाज एवेति । चारित्रसूत्रे शुद्धपारिहारिकान् वक्ष्यामः[2] ॥

यथालन्दिकास्तु भण्यन्ते । लन्दमिति कालस्याख्या । तत्र पञ्चरात्रं, तेषां हि पञ्चको[3] गच्छः, सामाचारी तु तेषां जिनकल्पिकैस्तुल्या, सूत्रप्रमाणभिक्षाचर्याकल्पान् विहाय, तत्रा-परिसमाप्तात्पसूत्रार्थास्तु गच्छप्रतिबद्धाः । परिसमाप्तार्थास्त्वप्रतिबद्धाः । तत्र केचित् जिन-कल्पिकाः केचित् स्थविरकल्पिका यथालन्दिनः । तत्र जिनकल्पिकाः निष्प्रतिकर्मशरीराः

जिनकल्पः

समुत्पन्नरोगाश्चिकित्सायां न प्रवर्तन्ते, नेत्रमलाद्यपि नापनयन्ति[4], स्थविर-कल्पिकास्तूत्पन्नरोगं गच्छे प्रक्षिपन्ति । गच्छोऽपि प्रासुकैषणीयेन परिकर्म करोति भैषजादिना । स्थविरकल्पिकास्त्वेकैकप्रतिग्रहधारिणः सप्रावरणाः । जिनकल्पिकानां तु वस्त्रपात्राणि भाज्यानि । एकत्र पञ्चपञ्चरात्रचारिण एते । गणप्रमाणं जघन्यतस्त्रयो गणाः, शतश उत्कृष्टाः । भिक्षाचर्या तु तेषां पञ्च पञ्चैव, एकैकवीथौ चरन्तः पञ्चभिः षड्कैर्मासकल्पं परिसमापयन्ति । स्थितास्थितकल्पयोश्च द्वयोरपि ते भवन्ति । एवमेते जिनकल्पिकादयो गच्छनिर्गतास्तत्र यद्येवंविधं नाग्न्यमिष्यते तदो[5] नागमोपरोधः । अथ परिधानकपरित्याग-मात्रं ततस्तदप्रमाणकं न मनांसि प्रीणयति जैनेन्द्रशासनानुसारिणामिति । स्थविरकल्पिकास्तु चतुर्दशविधोपधयः उत्सर्गापवादव्यवहारिणः औपग्रहिकोपधिधा[6]रिणश्च[7] । प्रव्रज्यादिद्वार-

१ 'महार्घमूल्यानि' इति ङ-पाठः । २ 'काद् वक्ष्यामः' इति ङ-पाठः । ३ 'एकत्र पञ्चरात्र' इति ङ-पाठः । ४ 'कल्पिकयो' इति ङ-पाठः । ५ 'ततो' इति ङ-पाठः । ६ 'औपधमाहिको' इति च-पाठः । ७ 'धारणाश्च' इति ङ-पाठः ।

भा०—एते द्वाविंशतिर्धर्मविघ्नहेतवो यथोक्तं प्रयोजनमभिसन्धाय राग-द्वेषौ निहत्य परिषोढव्या भवन्ति ॥ ९ ॥

टी०—एत इति। क्षुदादयोऽदर्शनान्ताः प्रत्यक्षीकृता द्वाविंशतिरिति न न्यूना नाधिकाः क्षमादिदशलक्षणकस्य धर्मस्य विघ्नहेतवः–अन्तरायकारणभूताः। यथोक्तं संवराख्यं प्रयोजनमभिसमीक्ष्य अभिसन्धाय संवरफलं चाभिसन्धाय मोक्षं रागद्वेषौ निहत्येति। केचिद् रागादुदयमासादयन्ति केचिद् द्वेषादिति, अतः सर्व एवैते प्रादुःष्यन्तः समापतिताः समन्तात् परिषोढव्या भवन्तीति ॥ ९ ॥

पञ्चानामेवेत्यादिना सूत्रं सम्बध्नाति—

भा०—पञ्चानामेव कर्मप्रकृतीनामुदयादेते परीषहाः प्रादुर्भवन्ति। तद्यथा–ज्ञानावरण-वेदनीय-दर्शनचारित्रमोहनीया-ऽन्तरायाणामिति ॥

टी०—पञ्चानामेव न षण्णां न चतसृणां कर्मप्रकृतीनामुदयाद् विपाकादेते द्वाविंशतिः परीषहाः समुपजायन्ते। काः पुनस्ताः पञ्च कर्मप्रकृतय इति नामग्राहमाचष्टे—ज्ञानावरणस्य वेद्यस्य मोहनीयस्य। तच्च मोहनीयं द्विप्रकारं–दर्शनमोहनीयं चारित्रमोहनीयं च। तथा अन्तरायस्येत्येवमेताः पञ्च प्रकृतयः। तत्र कः परीषहः कस्य गुणस्थानेषु चेत्याह—

## सूत्रम्—सूक्ष्मसम्पराय-छद्मस्थवीतरागयोश्चतुर्दश ॥ ९–१० ॥

भा०—सूक्ष्मसम्परायसंयते छद्मस्थवीतरागसंयते च चतुर्दश परीषहाः सम्भवन्ति, क्षुत्पिपासाशीतोष्णदंशमशकचर्याप्रज्ञाज्ञानालाभशय्यावधरोगतृण-स्पर्शमलानि ॥ १० ॥

टी०—सूक्ष्मेत्यादि। स्वामिविशेषावधारणम्। चतुर्दशानां परीषहाणां सम्परायः–कषायो लोभाख्यस्तस्य बादराणि खण्डानि परिशाटितानि नवमे गुणस्थाने। दशमे तु गुण-स्थाने सूक्ष्मलोभपरमाणवो वेद्यन्ते। ततः सूक्ष्मः सम्परायो यस्यासौ सूक्ष्मसम्परायः, शमकः क्षपको वा संयतो मूलोत्तरगुणसम्पन्नस्तस्मिन् सूक्ष्मसम्परायसंयते अमी चतुर्दश परीषहाः सम्भवन्ति, उदयमासादयन्तीतियावत्। छद्म–आवरणं तत्र स्थितश्छद्मस्थः, सावरणज्ञान इति। वीतः–अपेतो रागः सकलमोहोपशमात् समस्तमोहक्षयाच्च यस्य, क्रमेणै-कादशद्वादशगुणस्थानवर्तिनौ संयतौ परिगृह्येते। छद्मस्थवीतरागसामान्याच्चैकवचनम्। सूक्ष्मसम्परायश्च छद्मस्थवीतरागश्चेति द्वन्द्वः। तयोश्चतुर्दशैते भाष्यपरिपठिताः परीषहाः क्षुदा-दयो मलावसानाः ॥ १० ॥

---

१ 'परीषहाः' इत्यधिको घ-पाठः। २–३ 'यतेः' इति ग-पाठः। ४ 'भवन्ति' इति घ-पाठः। ५ 'अलाभप्रज्ञाज्ञानशय्या' इति ग-पाठः। ६ 'शमसमस्तन्मोह' इति ङ-पाठः।

रोगो–ज्वरा-ऽतीसार-कास-श्वासादिः, तस्य प्रादुर्भावे सत्यपि न गच्छनिर्गताश्चिकित्सायां प्रवर्तन्ते । गच्छवासिनस्त्वल्पबहुत्वालोचनया सम्यक् सहन्ते, प्रवचनोक्तेन वा विधिना प्रतिक्रियामाचरन्तीति रोगपरीषहजयः ।

अशुषिरतृणस्य दर्भादेः परिभोगोऽनुज्ञातो गच्छनिर्गतानां गच्छवासिनां च, तत्र येषां शयनमनुज्ञातं निष्पन्नानां तेषां ( निशायां ते तान् ? ) दर्भान् भूमावास्तीर्य संस्तारकोत्तरपट्टकौ च दर्भाणामुपरि विधाय शेरते, चौरापहृतोपकरणो वा प्रतनुकसंस्तारकादिपट्टो वाऽत्यन्तजीर्णत्वात् तथापि तं परुषकुशदर्भादितृणसंस्पर्शं सम्यगधिसहते मलस्य तृणस्पर्शपरीषहजयः ।

रजः परागमात्रं मलस्तु स्वेदवारिसम्पर्ककठिनीभूतो वपुषि स्थिरतामितो ग्रीष्मोष्मसम्पातजनितघर्मजलार्द्रतां गतो दुर्गन्धिर्महान्तमुद्वेगमुत्पादयति । तदपनयनाय न कदाचिदभिषेकाद्यभिलाषं करोतीति मलपरीषहजयः ।

सत्कारो भक्तपानवस्त्रपात्रादिना परतो योगः, पुरस्कारः सद्भूतगुणोत्कीर्तने वन्दनाभ्युत्थानासनप्रदानादिव्यवहारस्य, तत्रासत्कारितोऽपुरस्कृतो वा न द्वेषं यायात्, न दूषयेत् मनोविकारेणात्मानमिति सत्कारपुरस्कारपरीषहजयः ।

प्रज्ञायतेऽनयेति प्रज्ञा–बुद्ध्यतिशयः, तत्प्राप्तौ न गर्वमुद्वहत इति प्रज्ञापरीषहजयः । प्रज्ञाप्रतिपक्षेणाल्पबुद्धिकत्वेन परीषहो भवति । नाहं किञ्चिज्जाने मूर्खोऽहं सर्वपरिभूत इत्येवं परितापमुपागतस्य परीषहः, तदकरणात् कर्मविपाकोऽयमितिपरीषहजयः ।

ज्ञानं तु श्रुताख्यं चतुर्दश पूर्वाण्येकादशाङ्गानि, समस्तश्रुतधरोऽहमिति गर्वमुद्वहते, तत्रागर्वकरणात् ज्ञानपरीषहजयः । ज्ञानप्रतिपक्षेणाप्यज्ञानेनागमशून्यतया परीषहो भवति, ज्ञानावरणक्षयोपशमोदयविजृम्भितमेतदिति, स्वकृतकर्म फलपरिभोगादपैति तपोनुष्ठानेन चेत्येवमालोचयतो ज्ञानपरीषहजयो भवति ।

अदर्शनपरीषहस्तु सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोऽनुष्ठायी निःसङ्गश्चाहं तथापि धर्माधर्मात्मदेवनारकादिभावान्नेक्षे, अतो मृषा समस्तमेतदिति अदर्शनपरीषहः ।

धर्माद्यदर्शने हेतवः

तत्रैवमालोकयेत्–धर्माधर्मौ पुण्यपापलक्षणौ यदि कर्मरूपौ पुद्गलात्मकौ, ततस्तयोः कार्यदर्शनादनुमानसमधिगम्यत्वम् । अथ क्षमाक्रोधादिकौ धर्माधर्मौ, ततः स्वानुभवत्वादात्मपरिणामरूपत्वात् प्रत्यक्षविरोधः । देवास्त्वत्यन्तरतसुखासक्तत्वान्मनुष्यलोके च कार्याभावात् दुष्षमानुभावाच्च न दर्शनगोचरमायान्ति । नारकास्तु तीव्रवेदनार्ताः पूर्वकृतकर्मोदयनिगडबन्धनवशीकृतत्वादस्वतन्त्राः कथमायान्तीत्येवमालोचयतः अदर्शनपरीषहजयो भवतीति । इतिशब्द इयत्ताप्रदर्शनार्थः ॥

---

१ 'सम्पात' इति ग-पाठः । २ 'बुद्धिरतिशयः' इति ङ-पाठः । ३ 'तापस्तस्य' इति ग-पाठः । ४ 'धर्मात्म' इति ङ-पाठः । ५ 'यतश्च दर्शन' इति ङ-पाठः ।

**भा०—एते द्वाविंशतिर्धर्मविघ्नहेतवो यथोक्तं प्रयोजनमभिसन्धाय राग-द्वेषौ निहत्य परिषोढव्या भवन्ति ॥ ९ ॥**

टी०—एत इति। क्षुदादयोऽदर्शनान्ताः प्रत्यक्षीकृता द्वाविंशतिरिति न न्यूना नाधिकाः क्षमादिदशलक्षणकस्य धर्मस्य विघ्नहेतवः—अन्तरायकारणभूताः। यथोक्तं संवराख्यं प्रयोजनमभिसमीक्ष्य अभिसन्धाय संवरफलं चाभिसन्धाय मोक्षं रागद्वेषौ निहत्येति। केचिद् रागादुदयमासादयन्ति केचिद् द्वेषादिति, अतः सर्व एवैते प्रादुःष्यन्तः समापतिताः समन्तात् परिषोढव्या भवन्तीति ॥ ९ ॥

पञ्चानामेवेत्यादिना सूत्रं सम्बध्नाति—

**भा०—पञ्चानामेव कर्मप्रकृतीनामुदयादेते परीषहाः प्रादुर्भवन्ति। तद्यथा—ज्ञानावरण-वेदनीय-दर्शनचारित्रमोहनीया-ऽन्तरायाणामिति ॥**

टी०—पञ्चानामेव न षण्णां न चतसृणां कर्मप्रकृतीनामुदयाद् विपाकादेते द्वाविंशतिः परीषहाः समुपजायन्ते। काः पुनस्ताः पञ्च कर्मप्रकृतय इति नामग्राहमाचष्टे—ज्ञानावरणस्य वेद्यस्य मोहनीयस्य। तच्च मोहनीयं द्विप्रकारं—दर्शनमोहनीयं चारित्रमोहनीयं च। तथा अन्तरायस्येत्येवमेताः पञ्च प्रकृतयः। तत्र कः परीषहः कस्य गुणस्थानेषु चेत्याह—

## सूत्रम्—सूक्ष्मसम्पराय-छद्मस्थवीतरागयोश्चतुर्दश ॥ ९–१० ॥

**भा०—सूक्ष्मसम्परायसंयते छद्मस्थवीतरागसंयते च चतुर्दश परीषहाः संभवन्ति, क्षुत्पिपासाशीतोष्णदंशमशकचर्याप्रज्ञाज्ञानालाभशय्यावधरोगतृण-स्पर्शमलानि ॥ १० ॥**

टी०—सूक्ष्मेत्यादि। स्वामिविशेषावधारणम्। चतुर्दशानां परीषहाणां सम्परायः—कषायो लोभाख्यस्तस्य बादराणि खण्डानि परिशाटितानि नवमे गुणस्थाने। दशमे तु गुण-स्थाने सूक्ष्मलोभपरमाणवो वेद्यन्ते। ततः सूक्ष्मः सम्परायो यस्यासौ सूक्ष्मसम्परायः, शमकः क्षपको वा संयतो मूलोत्तरगुणसम्पन्नस्तस्मिन् सूक्ष्मसम्परायसंयते अमी चतुर्दश परीषहाः सम्भवन्ति, उदयमासादयन्तीतियावत्। छद्म—आवरणं तत्र स्थितश्छद्मस्थः, सावरणज्ञान इति। वीतः—अपेतो रागः सकलमोहोपशमात् समस्तमोहक्षयाच्च यस्य, क्रमेणै-कादशद्वादशगुणस्थानवर्तिनौ संयतौ परिगृह्येते। छद्मस्थवीतरागसामान्याच्चैकवचनम्। सूक्ष्मसम्परायश्च छद्मस्थवीतरागश्चेति द्वन्द्वः। तयोश्चतुर्दशैते भाष्यपरिपठिताः परीषहाः क्षुदा-दयो मलावसानाः ॥ १० ॥

---

१ 'परीषहाः' इत्यधिको घ-पाठः। २–३ 'यतेः' इति ग–पाठः। ४ 'भवन्ति' इति घ–पाठः। ५ 'अलाभप्रज्ञाज्ञानशय्या' इति ग–पाठः। ६ 'शमसमस्तन्मोह' इति ङ–पाठः।

रोगो–ज्वरा-ऽतीसार-कास-श्वासादिः, तस्य प्रादुर्भावे सत्यपि न गच्छनिर्गताश्चिकित्सायां प्रवर्तन्ते । गच्छवासिनस्त्वल्पबहुत्वालोचनया सम्यक् सहन्ते, प्रवचनोक्तेन वा विधिना प्रतिक्रियामाचरन्तीति रोगपरीषहजयः ।

अशुषिरतृणस्य दर्भादेः परिभोगोऽनुज्ञातो गच्छनिर्गतानां गच्छवासिनां च, तत्र येषां शयनमनुज्ञातं निष्पन्नानां तेषां ( निशायां ते तान् ? ) दर्भान् भूमावास्तीर्य संस्तारकोत्तरपट्टकौ च दर्भाणामुपरि विधाय शेरते, चोरापहृतोपकरणो वा प्रतनुकसंस्तारकादिपट्टो वाऽत्यन्तजीर्णत्वात् तथापि तं परुषकुशदर्भादितृणसंस्पर्शं सम्यगधिसहते यस्तस्य तृणस्पर्शपरीषहजयः ।

रजः परागमात्रं मलस्तु स्वेदवारिसम्पर्ककठिनीभूतो वपुषि स्थिरतामितो ग्रीष्मोष्मसंम्पातजनितघर्मजलार्द्रतां गतो दुर्गन्धिर्महान्तमुद्वेगमुत्पादयति । तदपनयनाय न कदाचिदभिषेकाद्यभिलाषं करोतीति मलपरीषहजयः ।

सत्कारो भक्तपानवस्त्रपात्रादिना परतो योगः, पुरस्कारः सद्भूतगुणोत्कीर्तनं वन्दनाभ्युत्थानासनप्रदानादिव्यवहारश्च, तत्रासत्कारितोऽपुरस्कृतो वा न द्वेषं यायात्, न दूषयेत् मनोविकारेणात्मानमिति सत्कारपुरस्कारपरीषहजयः ।

प्रज्ञायतेऽनयेति प्रज्ञा–बुद्ध्यतिशयः[2], तत्प्राप्तो न गर्वमुद्वहत इति प्रज्ञापरीषहजयः । प्रज्ञाप्रतिपक्षेणाल्पबुद्धिकत्वेन परीषहो भवति । नाहं किञ्चिज्जाने मूर्खोऽहं सर्वपरिभूत इत्येवं परितापमुपागतस्य[3] परीषहः, तदकरणात् कर्मविपाकोऽयमितिपरीषहजयः ।

ज्ञानं तु श्रुताख्यं चतुर्दश पूर्वाण्येकादशाङ्गानि, समस्तश्रुतधरोऽहमिति गर्वमुद्वहते, तत्रागर्वकरणात् ज्ञानपरीषहजयः । ज्ञानप्रतिपक्षेणाप्यज्ञानेनागमशून्यतया परीषहो भवति, ज्ञानावरणक्षयोपशमोदयविजृम्भितमेतदिति, स्वकृतकर्म फलपरिभोगादपैति तपोनुष्ठानेन चेत्येवमालोचयतो ज्ञानपरीषहजयो भवति ।

अदर्शनपरीषहस्तु सर्वपापस्थानेभ्यो विरतः प्रकृष्टतपोऽनुष्ठायी निःसङ्गश्चाहं तथापि धर्माधर्मात्म[4]देवनारकादिभावान्नेक्षे, अतो मृषा समस्तमेतदिति अदर्शनपरीषहः ।

धर्माद्यदर्शने हेतवः

तत्रैवमालोकयेत्–धर्माधर्मौ पुण्यपापलक्षणौ यदि कर्मरूपौ पुद्गलात्मकौ, ततस्तयोः कार्यदर्शनादनुमानसमधिगम्यत्वम् । अथ क्षमाक्रोधादिकौ धर्माधर्मौ, ततः स्वानुभवत्वादात्मपरिणामरूपत्वात् प्रत्यक्षविरोधः । देवास्त्वत्यन्तरतसुखासक्तत्वान्मनुष्यलोके च कार्याभावात् दुष्षमानुभावाच्च न दर्शनगोचरमायान्ति । नारकास्तु तीव्रवेदनार्ताः पूर्वकृतकर्मोदयनिगडबन्धनवशीकृतत्वादस्वतन्त्राः कथमायान्तीत्येवमालोचयतः अदर्शनपरीषहजयो भवतीति । इतिशब्द इयत्ताप्रदर्शनार्थः ॥

१ ' सम्पात ' इति ग–पाठः । २ ' बुद्धिरतिशयः ' इति ङ–पाठः । ३ ' तापस्तस्य ' इति ग–पाठः ।
४ 'धर्मात्म' इति ङ–पाठः । ५ ' यतश्च दर्शन ' इति ङ–पाठः ।

## सूत्रम्—दर्शनमोहा-ऽन्तराययोरदर्शनालाभौ ॥ ९-१४ ॥

भा०—दर्शनमोहान्तराययोरदर्शनालाभौ यथासङ्ख्यं दर्शनमोहोदयेऽदर्शनपरीषहः । लाभान्तरायोदयेऽलाभपरीषहः ॥ १४ ॥

टी०—दर्शनमोहः-अनन्तानुबन्धिनो मिथ्यात्वादित्रयं च, यथासङ्ख्यमिति क्रमेण दर्शनमोहे अदर्शनपरीषहः । अन्तराये अलाभपरीषहः । अदर्शनम्-अश्रद्धानं देवादिसद्भावविषयम्, अतो मिथ्यात्वानुबन्धाद् दर्शनमोहेऽन्तःपात इति ॥ १४ ॥

## सूत्रम्—चारित्रमोहे नाग्न्या-ऽरति-स्त्री-निषद्या-ऽऽक्रोश-याचना-सत्कारपुरस्काराः ॥ ९-१५ ॥

भा०—चारित्रमोहोदये एते नाग्न्यादयः सप्त परीषहा भवन्ति ॥ १५ ॥

टी०—दर्शनमोहवर्जं शेषं चारित्रमोहनीयम् । चारित्रं मूलोत्तरगुणसम्पन्नान्मोहनात् पराङ्मुखत्वाचारित्रमोहनीयम् । तदुदये सत्येते नाग्न्यादयः सप्त परीषहा भवन्ति । नाग्न्यं जुगुप्सोदयात् । अरत्युदयादरतिः । स्त्रीवेदोदयात् स्त्रीपरीषहः । निषद्यास्थानासेवित्वं भयोदयात् । क्रोधोदयादाक्रोशपरीषहः । मानोदयाद् याच्ञापरीषहः । लोभोदयात् सत्कार(पुरस्कार)परीषह इति ॥ १५ ॥

## सूत्रम्—वेदनीये शेषाः ॥ ९-१६ ॥

भा०—वेदनीये शेषा एकादश परीषहा भवन्ति ये जिने सम्भवन्तीत्युक्तम् ( अ० ९, सू० ११ ) । कुतः शेषाः ? एभ्यः प्रज्ञा-ऽज्ञान-दर्शना-ऽलाभ-नाग्न्या-ऽरति-स्त्री-निषद्या-ऽऽक्रोश-याचना-सत्कारपुरस्कारेभ्य इति ॥ १६ ॥

टी०—वेदनीयकर्मोदये शेषाः एकादश परीषहाः सम्पतन्ति । कुतः शेषाः ? उपर्युक्तेभ्योऽन्ये शेषाः । के पुनरुपर्युक्ताः ? प्रज्ञा-ऽज्ञाने अदर्शना-ऽलाभौ सप्त च नाग्न्यादयः, एभ्यः शेषाः केवलिनो ये सम्भवन्ति । एकादश जिने प्रागुक्ताः क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलपरीषहाख्या इति ॥ १६ ॥

एवमेते व्याख्यातनिमित्तलक्षणविकल्पाः आबादरसम्परायात् सर्वे भवन्ति । परतस्तु नियताः । तत् किमेते कदाचित् सर्वेष्वेकस्य जन्तोर्यौगपद्येन सम्भवन्ति न वा ? सम्भवन्तीत्याह—

---

१ 'नुबेधात्' इति घ-पाठः । २ 'ततः' इति च-पाठः । ३ 'केवलिनि' इति घ-पाठः ।

भवस्थकेवलिनः शेषकर्मकारणाभावाद् वेदनीयसम्भवाच्च तदाश्रया एव परीषहा भवन्तीत्याह—

## सूत्रम्—एकादश जिने ॥ ९–११ ॥

टी०—अस्य भाष्यम्—

भा०—एकादश परीषहाः सम्भवन्ति जिने वेदनीयाश्रयाः । तद्यथा—

केवलिनः परीषहाः क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमल-परीषहाः ॥ ११ ॥

टी०—एकादशैव परीषहाः पूर्वोक्तचतुर्दशकमध्यादपनीय अमून् प्रज्ञाज्ञानाला-भाख्यांस्त्रीन् एकादश शेषा भवन्ति वेदनीयकर्माश्रया जिने । मोहपुरःसरेषु ज्ञानदर्शना-वरणान्तरायेषु क्षयमात्यन्तिकमुपगतेषु घातिकर्मसु उत्पन्नसकलज्ञेयग्राहिनिरावरणज्ञानो जिनः केवलीतियावत् । तत्रान्त्योपान्त्ययोर्गुणस्थानयोर्जिनत्वं, तत्र सम्भवः ॥ ११ ॥

सर्वेषां परीषहकारणानां कर्मणामुदयसम्भवमङ्गीकृत्याह—

## सूत्रम्—बादरसम्पराये सर्वे ॥ ९–१२ ॥

भा०—बादरसम्परायसंयते सर्वे द्वाविंशतिरपि परीषहाः सम्भवन्ति ॥१२॥

टी०—बादरः–स्थूलः सम्परायः–कषायस्तदुदयो यस्यासौ बादरसम्परायः संयतः । स च मोहप्रकृतीः कश्चिदुपशमयतीत्युपशमकः । कश्चित् क्षपयतीति क्षपकः । तत्र सर्वेषां द्वाविंशतेरपि क्षुदादीनां परीषहाणामदर्शनान्तानां सम्भव इति उक्ता गुणस्थानेषु यथा-सम्भवं परीषहाः ॥ १२ ॥

सम्प्रति कर्मप्रकृतिष्वन्तर्भावकथनायाह—

## सूत्रम्—ज्ञानावरणे प्रज्ञाऽज्ञाने ॥ ९–१३ ॥

भा०—ज्ञानावरणीयोदये प्रज्ञाऽज्ञानपरीषहौ भवतः ॥ १३ ॥

टी०—प्रज्ञा चाज्ञानं च प्रज्ञाऽज्ञाने । प्रज्ञापरीषहोऽज्ञानपरीषहश्च ज्ञानावरणे भवतः । ज्ञानावरणक्षयोपशमात् प्रज्ञाऽज्ञानं च । सत्येव हि ज्ञानावरणे तस्य क्षयोपशमः । ज्ञानावरणो-दयाच्च अप्रज्ञा–निर्बुद्धिकत्वमज्ञानं चेति । कथं पुनरिदमुभयं लभ्यते । ? तुल्या हि संहिता अप्रज्ञा च ज्ञानं च अप्रज्ञाज्ञाने ज्ञानावरणोदये भवत इत्युभयथाऽपि स्पष्टं भाष्यम् ॥ १३ ॥

---

१ 'भवपरीषहा' इति ङ–पाठः । २ 'उत्तरगुण०' इति ङ–पाठः । ३ 'रिदं लभ्यते' इति ङ–पाठः, 'रिदमुदयं लभ्यते' इति तु च–पाठः ।

## सूत्रम्—दर्शनमोहा-ऽन्तराययोरदर्शनालाभौ ॥ ९-१४ ॥

भा०—दर्शनमोहान्तराययोरदर्शनालाभौ यथासङ्ख्यं दर्शनमोहोदयेऽदर्शनपरीषहः । लाभान्तरायोदयेऽलाभपरीषहः ॥ १४ ॥

टी०—दर्शनमोहः—अनन्तानुबन्धिनो मिथ्यात्वादित्रयं च, यथासङ्ख्यमिति क्रमेण दर्शनमोहे अदर्शनपरीषहः । अन्तराये अलाभपरीषहः । अदर्शनम्—अश्रद्धानं देवादिसद्भावविषयम्, अतो मिथ्यात्वानुबन्धाद्[1] दर्शनमोहेऽन्तःपात इति ॥ १४ ॥

## सूत्रम्—चारित्रमोहे नाग्न्या-ऽरति-स्त्री-निषद्या-ऽऽक्रोश-याचना-सत्कारपुरस्काराः ॥ ९-१५ ॥

भा०—चारित्रमोहोदये एते नाग्न्यादयः सप्त परीषहा भवन्ति ॥ १५ ॥

टी०—दर्शनमोहवर्जं शेषं चारित्रमोहनीयम् । चारित्रं मूलोत्तरगुणसम्पन्नान्मोहनात् पराङ्मुखत्वाच्चारित्रमोहनीयम् । तदुदये सत्येते नाग्न्यादयः सप्त परीषहा भवन्ति । नाग्न्यं जुगुप्सोदयात् । अरत्युदयादरतिः । स्त्रीवेदोदयात् स्त्रीपरीषहः । निषद्यास्थानासेवित्वं भयोदयात् । क्रोधोदयादाक्रोशपरीषहः । मानोदयाद् याच्ञापरीषहः । लोभोदयात् सत्कार(पुरस्कार)परीषह इति ॥ १५ ॥

## सूत्रम्—वेदनीये शेषाः ॥ ९-१६ ॥

भा०—वेदनीये शेषा एकादश परीषहा भवन्ति ये जिने सम्भवन्तीत्युक्तम् ( अ० ९, सू० ११ ) । कुतः शेषाः ? एभ्यः प्रज्ञा-ऽज्ञान-दर्शना-ऽलाभ-नाग्न्या-ऽरति-स्त्री-निषद्या-ऽऽक्रोश-याचना-सत्कारपुरस्कारेभ्य इति ॥ १६ ॥

टी०—वेदनीयकर्मोदये शेषाः एकादश परीषहाः सम्पतन्ति । कुतः[2] शेषाः ? उपर्युक्तेभ्योऽन्ये शेषाः । के पुनरुपर्युक्ताः ? प्रज्ञा-ऽज्ञाने अदर्शना-ऽलाभौ सप्त च नाग्न्यादयः, एभ्यः शेषाः केवलिनो[3] ये सम्भवन्ति । एकादश जिने प्रागुक्ताः क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलपरीषहाख्या इति ॥ १६ ॥

एवमेते व्याख्यातनिमित्तलक्षणविकल्पाः आबादरसम्परायात् सर्वे भवन्ति । परतस्तु नियताः । तत् किमेते कदाचित् सर्वेऽप्येकस्य जन्तोर्यौगपद्येन सम्भवन्ति न वा ? सम्भवन्तीत्याह—

---

१ 'नुवेधाद्' इति घ-पाठः । २ 'ततः' इति च-पाठः । ३ 'केवलिनि' इति घ-पाठः ।

## सूत्रम्—एकादयो भाज्या युगपदेकोनविंशतेः ॥ ९-१७ ॥

भा०—एषां द्वाविंशतेः परीषहाणामेकादयो भजनीया युगपदेकस्मिन् जीवे आ एकोनविंशतेः। अत्र शीतोष्णपरीषहौ युगपन्न भवतः, अत्यन्तविरोधित्वात्। तथा चर्याशय्यानिषद्यापरीषहाणामेकस्य सम्भवे द्वयोरभावः ॥ १७ ॥

यौगपद्येन परीषहाः

टी०—एकादय इति तद्गुणसंविज्ञानो बहुव्रीहिः। अथवैकशेषः। एकमासाद्याविंशतिकादिः, एक आदिर्येषां ते एकादयः, एकादिश्च एकादयश्च एकादयः। तदेते द्वाविंशतिः परीषहा भाज्या–विकल्प्या युगपदेकस्मिन् यतौ। तत्र कस्यचिदेकः कस्यचिद् द्वौ कस्यचित् त्रयस्तावद् यावदेकोनविंशतिरविरोधात् युगपदेकत्रोदयन्ते, विरोधात् तु न द्वाविंशतिरप्येकस्मिन् युगपदिति। भाज्या इति णिजन्तात्यत्। णिजपि चौरादिकः। आ एकोनविंशतेरिति एकेनोना विंशतिरिति तत्र समासः। तृतीयेति योगविभागात्तत्रः प्रकृतिभावः। आकुक्तः, ऊनार्थाभिधायी चात्र नञ्। एकेनोना विंशतिरित्यर्थः। विंशतिशब्दस्य द्विदशवर्गनिर्वृत्तत्वात् द्वौ दशकौ परिमाणमस्य सङ्घस्य विंशतिः। एकवचनान्तता एकत्वेन निपातनात्। बहुत्वाद् बहुवचनमिति चेत् न, एकार्थत्वाद् यूथ-वनादिवत्। कथं पुनरेकोनविंशतिः समस्ति युगपत् न पुनर्द्वाविंशतिरपीत्याह—अत्यन्तविरोधादिति। शीतोष्णयोरसहावस्थानलक्षणो विरोधः परस्परपरिहारेण स्थितिः। अत्यन्तग्रहणं पर्यायनयविवक्षाप्राधान्यख्यापनार्थम्। शीतोष्णपर्यायावत्यन्तभिन्नौ विरुद्धौ, तयोश्चैकस्मिन् काले नैकत्वेनावस्थानम्। द्रव्यार्थिकस्य तु तदेव द्रव्यमपास्तसमस्तपर्यायं शीतमुष्णं चेत्युत्थितासीनपुरुषवद् उत्फणविफणीभूतसर्पवद् वा नास्ति कश्चिद् विरोधः। तथा चर्या-शय्या-निषद्यानामेकस्य सम्भवे द्वयोरभावः। चर्यायां सत्यां निषद्या-शय्ये न स्तः। निषद्यायां तु शय्या-चर्ययोरभावः। शय्यायां पुनर्निषद्या-चर्ये न भवतः इति त्रयो वर्ज्यन्त इति ॥ १७ ॥

उक्तः परीषहजयः। सम्प्रति प्रस्तावप्राप्तं चारित्रमुच्यते–

चारित्रस्य पञ्चविधत्वम्

## सूत्रम्—सामायिक-च्छेदोपस्थाप्य-परिहारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातानि चारित्रम् ॥ ९-१८ ॥

भा०—सामायिकसंयमः १ छेदोपस्थाप्यसंयमः २ परिहारविशुद्धिसंयमः ३ सूक्ष्मसम्परायसंयमः ४ यथाख्यातसंयमः ५ इति पञ्चविधं चारित्रम्। तत् पुलाकादिषु ( अ० ९, सू० ४८ ) विस्तरेण वक्ष्यामः ॥ १८ ॥

---

१ 'आ' इत्यधिको ग-पाठः। २ 'एकान्नविंशतेः एकेन न विंशतिरिति नञ्समासः' इति ख-पाठः।

टी०—सामयिकादयः कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टाः, केचित् विच्छिन्नपदमेव सूत्रमधीयते, एकमेव चारित्रं समुदाये मा प्रापदिति, तच्च नातीव बहु मन्यामहे, सामायिकमेवेदं छेदोपस्थाप्यादिभेदेन ज्ञापितम्, यतोऽतः परमार्थत एकमेव चारित्रं संयम इति अभेदं मन्यमानो भाष्यकृदाह—**सामायिकसंयम** इत्यादि । सर्वसावद्ययोगविरतिलक्षणं सामायिकं, तद्विशेषा एव छेदोपस्थाप्यादयः, विशुद्धतराध्यवसायविशेषाः सावद्ययोगविरतेरेव । तत्र शब्दनिर्भेदः—रागद्वेषविरहितः समः अयो—गमनम् । सकलक्रियोपलक्षणमेतत् । सर्वैव क्रिया साधोररक्तद्विष्टस्य निर्जराफला । समस्यायः समायः, समाय एव सामायिकमिति स्वार्थिकः ठक् । समाये वा भवं सामायिकं, समायेन [1]निर्वृत्तं सामायिकं, समायस्य वा विकारः तन्मयः सामायः, स प्रयोजनमस्येति वा, सर्वत्र यथाऽभिप्रेतेऽर्थे ठक् । तच्च सामायिकं द्विप्रकारम्—इत्वरकालं यावज्जीविकं च । तत्राद्यं प्रथमान्त्यतीर्थकरतीर्थयोः प्रव्रज्याप्रतिपत्तावारोपितं शस्त्रपरिज्ञाध्ययनादिविदः श्रद्धतः छेदोपस्थाप्यसंयमारोपणविशिष्टतरत्वाद् विरतेः सामायिकव्यपदेशं जहातीत्यत इत्वरकालम् । मध्यमतीर्थकृतां विदेहक्षेत्रवर्तिनां च यावज्जीविकं—प्रव्रज्याप्रतिपत्तिकालादारभ्य—आप्राणप्रयाणकालादवतिष्ठते । प्रथमान्त्यतीर्थकरशिष्याणां [2]सामान्यसामायिकपर्यायच्छेदो विशुद्धतरसर्वसावद्ययोगविरतावस्थानं विविक्ततरमहाव्रतारोपणं छेदोपस्थाप्यसंयमः । छेदोपस्थापनमेव छेदोपस्थाप्यम् । पूर्वपर्यायच्छेदे सति उत्तरपर्याये उपस्थापनं भावे यतो [3]विधानात् । तदपि द्विधा, निरतिचार-सातिचारभेदेन । तत्र शिक्षकस्य निरतिचारमधीतविशिष्टाध्ययनविदः मध्यमतीर्थकरशिष्यो वा यदोपसम्पद्यते चरमतीर्थकरशिष्याणामिति । सातिचारं तु भग्नमूलगुणस्य पुनर्व्रतारोपणात् छेदोपस्थाप्यम् । उभयं चैतत् साति[4]चारं निरतिचारं च स्थितकल्प एव, आद्यन्ततीर्थङ्करयोरेवेत्यर्थः । परिहारः—तपोविशेषस्तेन विशुद्धं परिहारविशुद्धिकं चेति । तदपि द्विधा—निर्विश्यमानकं निर्विष्टकायिकं च । तत्र निर्विश्यमानकम्—आसेव्यमानकं, परिभुज्यमानकमित्यर्थः, निर्विष्टकायिकमासेवितमुपभुक्तम्, तत्सहयोगात् तदनुष्ठायिनोऽपि निर्विश्यमानकाः ताच्छील्ये शक्तौ वा चानश् । निर्वेशः—उपभोगः, निर्विशमानकास्तत् उपभुञ्जानाः, निर्विष्टकायिकास्तु निर्विष्टः कायो येषामस्ति ते निर्विष्टकायिकास्तत्सहयोगात् तेनाकारेण तपोऽनुष्ठानद्वारेण परिभुक्तः कायो

(पार्श्वटिप्पण्यः: सूत्रपाठविमर्शः । सामायिक-शब्दस्य निष्पत्तिः । सामायिकस्य द्वैविध्यम् । छेदोपस्थाप्यस्य द्विविधता । परिहारविशुद्धेः द्विविधत्वम् ।)

---

१ 'निर्वर्तितं' इति ङ-पाठः । २ 'सामान्ययतिपर्याय' इति घ-पाठः । ३ 'विधत्ते' इति घ-पाठः । ४ 'चारमनतिचारं' इति च-पाठः ।

सूत्रम्—एकादयो भाज्या युगपदेकोनविंशतेः ॥ ९-१७ ॥

योगपद्येन परीषहाः

भा०—एषां द्वाविंशतेः परीषहाणामेकादयो भजनीया युगपदेकस्मिन् जीवे आ एकोनविंशतेः। अत्र शीतोष्णपरीषहौ युगपन्न भवतः, अत्यन्तविरोधित्वात्। तथा चर्याशय्यानिषद्यापरीषहाणामेकस्य सम्भवे द्वयोरभावः ॥ १७ ॥

टी०—एकादय इति तद्गुणसंविज्ञानो बहुव्रीहिः। अथवैकशेषः। एकभासादावितिकादिः, एक आदिर्येषां ते एकादयः, एकादिश्च एकादयश्च एकादयः। तदेते द्वाविंशतिः परीषहा भाज्या-विकल्प्या युगपदेकस्मिन् यतौ। तत्र कस्यचिदेकः कस्यचिद् द्वौ कस्यचित् त्रयस्तावद् यावदेकोनविंशतिरविरोधात् युगपदेकत्रोदयन्ते, विरोधात् तु न द्वाविंशतिरप्येकस्मिन् युगपदिति। भाज्या इति णिजन्तात्यत्। णिजपि चौरादिकः। आ एकोनविंशतेरिति एकेनोना विंशतिरिति तत्र समासः। तृतीयेति योगविभागात्ततः प्रकृतिभावः। आङुक्तः, ऊनार्थाभिधायी चात्र नञ्। एकेनोना विंशतिरित्यर्थः। विंशतिशब्दस्य द्विदशत्वर्गनिर्वृत्तत्वात् द्वौ दशकौ परिमाणमस्य सङ्घस्य विंशतिः। एकवचनान्तता एकत्वेन निपातनात्। बहुत्वाद् बहुवचनमिति चेत् न, एकार्थत्वाद् यूथ-वनादिवत्। कथं पुनरेकोनविंशतिः समस्ति युगपत् न पुनर्द्वाविंशतिरपीत्याह—अत्यन्तविरोधादिति। शीतोष्णयोरसहावस्थानलक्षणो विरोधः परस्परपरिहारेण स्थितिः। अत्यन्तग्रहणं पर्यायनयविवक्षाप्राधान्यख्यापनार्थम्। शीतोष्णपर्यायावत्यन्तभिन्नौ विरुद्धौ, तयोश्चैकस्मिन् काले नैकत्वेनावस्थानम्। द्रव्यार्थिकस्य तु तदेव द्रव्यमपास्तसमस्तपर्यायं शीतमुष्णं चेत्युदस्थितासीनपुरुषवद् उत्फणविफणीभूतसर्पवद् वा नास्ति कश्चिद् विरोधः। तथा चर्या-शय्या-निषद्यानामेकस्य सम्भवे द्वयोरभावः। चर्यायां सत्यां निषद्या-शय्ये न स्तः। निषद्यायां तु शय्या-चर्ययोरभावः। शय्यायां पुनर्निषद्या-चर्ये न भवतः इति त्रयो वर्ज्यन्त इति ॥ १७ ॥

उक्तः परीषहजयः। सम्प्रति प्रस्तावप्राप्तं चारित्रमुच्यते—

चारित्रस्य पञ्चविधत्वम्

सूत्रम्—सामायिक-च्छेदोपस्थाप्य-परिहारविशुद्धि-सूक्ष्मसम्पराय-यथाख्यातानि चारित्रम् ॥ ९-१८ ॥

भा०—सामायिकसंयमः १ छेदोपस्थाप्यसंयमः २ परिहारविशुद्धिसंयमः ३ सूक्ष्मसम्परायसंयमः ४ यथाख्यातसंयमः ५ इति पञ्चविधं चारित्रम्। तत् पुलाकादिषु ( अ० ९, सू० ४८ ) विस्तरेण वक्ष्यामः ॥ १८ ॥

---

१ 'आ' इत्यधिको ग-पाठः। २ 'एकान्नविंशतेः एकेन न विंशतिरिति नञ्समासः' इति घ-पाठः।

टी०—**सामयिकादयः** कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टाः, केचित् विच्छिन्नपदमेव सूत्रमधीयते, एकमेव चारित्रं समुदाये मा प्रापदिति, तच्च नातीव बहु मन्यामहे, सामायिकमेवेदं छेदोपस्थाप्यादिभेदेन ज्ञापितम्, यतोऽतः परमार्थत एकमेव चारित्रं संयम इति अभेदं मन्यमानो भाष्यकृदाह—**सामायिकसंयम** इत्यादि । सर्वसावद्ययोगविरतिलक्षणं सामायिकं, तद्विशेषा एव छेदोपस्थाप्यादयः, विशुद्धतराध्यवसायविशेषाः सावद्ययोगविरतेरेव । तत्र शब्दनिर्भेदः—रागद्वेषविरहितः समः अयो—गमनम् । सकलक्रियोपलक्षणमेतत् । सर्वैव क्रिया साधोररक्तद्विष्टस्य निर्जराफला । समस्यायः समायः, समाय एव सामायिकमिति स्वार्थिकः ठक् । समाये वा भवं सामायिकं, समायेन [1]निर्वृत्तं सामायिकं, समायस्य वा विकारः तन्मयः सामायः, स प्रयोजनमस्येति वा, सर्वत्र यथाऽभिप्रेतेऽर्थे ठक् । तच्च सामायिकं द्विप्रकारम्—इत्वरकालं यावज्जीविकं च । तत्राद्यं प्रथमान्त्यतीर्थकरतीर्थयोः प्रव्रज्याप्रतिपत्तावारोपितं शस्त्रपरिज्ञाध्ययनादिविदः श्रद्दधतः छेदोपस्थाप्यसंयमारोपणविशिष्टतरत्वाद् विरतेः सामायिकव्यपदेशं जहातीत्यत इत्वरकालम् । मध्यमतीर्थकृतां विदेहक्षेत्रवर्तिनां च यावज्जीविकं—प्रव्रज्याप्रतिपत्तिकालादारभ्य—आप्राणप्रयाणकालादवतिष्ठते । प्रथमान्त्यतीर्थकरशिष्याणां [2]सामान्यसामायिकपर्यायच्छेदो विशुद्धतरसर्वसावद्ययोगविरतावस्थानं विविक्ततरमहाव्रतारोपणं छेदोपस्थाप्यसंयमः । छेदोपस्थापनमेव छेदोपस्थाप्यम् । पूर्वपर्यायच्छेदे सति उत्तरपर्याये उपस्थापनं भावे यतो [3]विधानात् । तदपि द्विधा, निरतिचार-सातिचारभेदेन । तत्र शिक्षकस्य निरतिचारमधीतविशिष्टाध्ययनविदः मध्यमतीर्थकरशिष्यो वा यदोपसम्पद्यते चरमतीर्थकरशिष्याणामिति । सातिचारं तु भग्नमूलगुणस्य पुनर्व्रतारोपणात् छेदोपस्थाप्यम् । उभयं चैतत् सातिचारं [4]निरतिचारं च स्थितकल्प एव, आद्यन्ततीर्थङ्करयोरेवेत्यर्थः । परिहारः—तपोविशेषस्तेन विशुद्धं परिहारविशुद्धिकं चेति । तदपि द्विधा—निर्विश्यमानकं निर्विष्टकायिकं च । तत्र निर्विश्यमानकम्—आसेव्यमानकं, परिभुज्यमानकमित्यर्थः, निर्विष्टकायिकमासेवितमुपभुक्तम्, तत्सहयोगात् तदनुष्ठायिनोऽपि निर्विश्यमानकाः ताच्छील्ये शक्तौ वा चानश् । निर्वेशः—उपभोगः, निर्विशमानकास्तत् उपभुञ्जानाः, निर्विष्टकायिकास्तु निर्विष्टः कायो येषामस्ति ते निर्विष्टकायिकास्तत्सहयोगात् तेनाकारेण तपोऽनुष्ठानद्वारेण परिभुक्तः कायो

सूत्रपाठविमर्शः

सामायिकशब्दस्य निष्पत्तिः

सामायिकस्य द्वैविध्यम्

छेदोपस्थाप्यस्य द्विविधता

परिहारविशुद्धेः द्विविधत्वम्

---

१ 'निर्वर्तितं' इति ङ-पाठः । २ 'सामान्ययतिपर्याय' इति घ-पाठः । ३ 'विभक्ते' इति घ-पाठः । ४ 'चारमनतिचारं' इति च-पाठः ।

यैरिति परिभुक्तत्वात्स्थितपसः, निर्विष्टकायिका इत्यर्थः । परिहारविशुद्धिकं च तपः प्रतिपन्नानां नवको गच्छः । तत्र परिहारिणश्चत्वारोऽनुपरिहारिणोऽपि चत्वारः कल्पस्थित एकः, वाचनाचार्य इत्यर्थः । सर्वेऽपि ते श्रुतातिशयसम्पन्नाः तथापि कथ्या (रूढ्या ?) कल्पस्थित एकः कश्चिदवस्थाप्यते । तत्र ये कालभेदेन विहितं तपोऽनुतिष्ठन्ति ते परिहारिणः । नियताचाम्लभक्तास्त्वनुपरिहारिणस्तेषामेवाभिसराः, तपोग्लानानां परिहारिणां सहायके वर्तन्ते । कल्पस्थितोऽपि नियताचाम्लभक्त एव । तत्र तपः परिहारिणां ग्रीष्मे चतुर्थषष्ठाष्टमभक्तलक्षणं जघन्यमध्यमोत्कृष्टं क्रमेणैव । शिशिरकाले षष्ठाष्टमदशमानि जघन्य-मध्यमोत्कृष्टानि । वर्षास्वष्टमदशमद्वादशभक्तानि जघन्यमध्यमोत्कृष्टानि । पारणाकालेऽप्या-

परिहारविशुद्धि-संयमस्य सीमा

चाम्लमेव पारयन्ति । उक्तविधानं तपः षण्मासं कृत्वा परिहारिणोऽनु-परिहारित्वं प्रतिपद्यन्ते । अनुपरिहारिणश्च परिहारिणो भवन्ति । तेऽपि षण्मासान् विदधते तत् तपः, पश्चात् कल्पस्थित एकाक्येव षण्मासावधिकं[1] परिहारतपः प्रतिपद्यते । तस्य चैकोऽनुपरिहारी भवति, तन्मध्ये अपरश्चैकः कल्पस्थित इति, एवमेष परिहारविशुद्धः संयमोऽष्टादशभिर्मासैः परिसमाप्तिमुपयाति । परिसमाप्ते तु तस्मिन् पुनस्तदेव केचित् परिहारतपः प्रतिपद्यन्ते स्वशक्त्यपेक्षाः, केचिद् वा जिनकल्पम्, अपरे तु गच्छमेव वा विशन्तीति । परिहारविशुद्धिकाश्च स्थितकल्प एव प्रथमचरमतीर्थकरतीर्थयोरेव, न मध्यमतीर्थेष्विति । सूक्ष्मसम्परायसंयमस्तु श्रेणिमारोहतः प्रपततो वा भवति ।

श्रेणिरपि द्विप्रकारा—औपशमिकी क्षायिकी च । तत्रौपशमिकी अनन्तानुबन्धिनो मिथ्या-त्वादित्रयं नपुंसकस्त्रीवेदौ हास्यादिषट्कं पुंवेदः अप्रत्याख्यानावरणाः संज्वलनाश्चेति । अस्याश्च आरम्भकोऽप्रमत्तसंयतः । अपरे तु ब्रुवते—"अविरतदेशप्रमत्ताप्रमत्तविरतानामन्यतमः प्रारभते,

औपशमिकी श्रेणी

स चानन्तानुबन्धिनश्चतुरोऽपि समकमेव शमयति अन्तर्मुहूर्तेन, ततो दर्शनत्रिकं, ततोऽनुदीर्णं पुमानारोहन्नपुंसकवेदं, ततः स्त्रीवेदं, योषिदारो-हन्ती, प्राग् नपुंसकवेदं, ततः पुरुषवेदं, तृतीयप्रकृतिरधिरोहन् प्राक् स्त्रीवेदं, ततः पुरुषवेदं, ततोऽपि हास्यादिषट्कं ततः ( नपुंसक )पुंवेदं, ततोऽप्र-त्याख्यानानां प्रत्याख्यानावरणानां च युगपदेव द्वौ क्रोधौ संज्वलनक्रोधान्तरितौ शमयति, पश्चात् संज्वलनक्रोधं, पुनर्द्वौ मानौ, पश्चात् संज्वलनमानं, पुनर्द्वे माये, ततः संज्वलनमायां, पुनर्द्वौ लोभौ, पश्चात् संज्वलनलोभम् । सङ्ख्येयानि खण्डानि कृत्वा क्रमेण चोपशमय्य पश्चिम-खण्डमसङ्ख्येयानि खण्डानि करोति । ततः प्रतिसमयमसङ्ख्येयभागमुपशमयन् समस्तमन्त-र्मुहूर्तेन शमयति । तांश्चासङ्ख्येयभागान् शमयन् सूक्ष्मसम्परायसंयमी भवति । अत्यन्तवि-शुद्धाध्यवसायो दशमगुणस्थानवर्ती, श्रेण्यारोहे च वर्धमानविशुद्धाध्यवसायस्य विशुद्धमवतरतः

१ 'षण्मासीं' इति ङ–च–पाठः । २ 'हारिणं' इति ङ–पाठः । ३ 'सावधिकं' इति घ–च–पाठः ।

संक्लिष्टाध्यवसायस्य संक्लिष्टे, सूक्ष्मः-श्लक्ष्णावयवः सम्परायः-कषायः संसारभ्रान्तिहेतुर्यत्र तत् सूक्ष्मसम्परायम्। स चोपशान्तकषायोऽपि स्वल्पप्रत्ययलाभाद् दवदग्धाङ्कुरद्रुमवदुदकासेचनादिप्रत्ययलाभादङ्कुरादिरूपेण भस्मच्छन्नाग्निवद् वा वाय्विन्धनादिप्रत्ययतः स्वरूपमुपदर्शयति, तद्वदसौ सुखवस्त्रिकादिषु ममत्वसमीरणेन सन्धुक्षमाणः कषायाग्निश्चरणेन्धनमामूलतो दहन् प्रच्याव्यते प्रतिविशिष्टाध्यवसायादिति। क्षायिकी तु श्रेणिरनन्तानुबन्धिनो मिथ्यात्वमिश्रसम्यक्त्वानि अप्रत्याख्यानप्रत्याख्यानावरणाः नपुंसकस्त्रीवेदौ हास्यादिषट्कं पुंवेदः संज्वलनाश्च, अस्याश्चारोहकः अविरतदेशप्रमत्ताप्रमत्ताविरतानामन्यतमो विशुध्यमानाध्यवसायः। स चानन्तानुबन्धिनो युगपदेव क्षपयत्यन्तर्मुहूर्तेन। ततः क्रमेण दर्शनत्रिकं, ततोऽप्रत्याख्यानप्रत्याख्यानावरणांश्च युगपदेव क्षपयितुमारभते। विमध्यभागे चैषामिमाः षोडश प्रकृतीः क्षपयति–नरकतिर्यग्गती एतदानुपूर्व्यौ एकद्वित्रिचतुरिन्द्रियजातीयातपोद्योतस्थावरसाधारणसूक्ष्मनामानि, ततो निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धीः, ततोऽष्टानां शेषं, ततोऽनुदीर्णं वेदं जघन्यं पूर्ववत्, ततो हास्यादिषट्कं, ततोऽप्युदितं वेदं, ततः संज्वलनानामेकैकं क्रमेण क्षपयति, सावशेषे च पूर्वसंज्वलनकषाये उत्तरं क्षपयितुमारभते। सर्वत्र पूर्वशेषं चोत्तरेणैव सह क्षपयति यावत् संज्वलनलोभसङ्ख्येयभागः। तमपि सङ्ख्येय( भाग )मसङ्ख्यानि खण्डानि कृत्वा प्रतिसमयमेकैकं खण्डं क्षपयति, तदा-[ पि ] सूक्ष्मसम्परायसंयमी भवति। समस्तमोहनीयोपशमे तु एकादशगुणस्थानप्राप्त उपशान्तकषायो यथाख्यातसंयमी भवति। क्षपकस्तु सकलमोहार्णवमुत्तीर्णो निर्ग्रन्थो यथाख्यातसंयमी जायते। अथशब्दो यथाशब्दार्थे। यथा ख्यातः संयमो भगवता तथाऽसावेव, कथं च ख्यातः?, अकषायः, स चैकादशद्वादशयोर्गुणस्थानयोः, उपशान्तत्वात् क्षीणत्वाच्च कषायाभाव इति। एवं पञ्चविधं चारित्रमष्टविधकर्मचयरिक्तीकरणात्। तच्च पुलाकादिषु विस्तरेण वक्ष्यामः पुलाकादिसूत्रे उपरिष्टात् ( अ० ९, सू० ४८ ), पुलाकादिभेदेषु सामायिकादिसंयमः पञ्चप्रकारोऽपि पञ्चसु पुलाकादिनिर्ग्रन्थेषु विस्तरेण–प्रपञ्चेन भावयिष्यत इति ॥१८॥

क्षपकश्रेणीवर्णनम्

उक्तं चारित्रं, प्रकीर्णकं च तपः, सम्प्रत्यनशनादिकं तपो भण्यते—

बाह्यतपसः षड्विधता

**सूत्रम्—अनशना-ऽवमौदर्य-वृत्तिपरिसङ्ख्यान-रसपरित्याग-विविक्तशय्यासन-कायक्लेशा बाह्यं तपः॥९–१९॥**

टी०—द्विविधं तपः–बाह्यमभ्यन्तरं च, तत्र बाह्याभ्यन्तरशब्दार्थः प्राङ् निरूपितः। तदेकैकं षोढा। तत्र बाह्यस्य तावद् भाष्यकारो भेदानाचष्टे षडपि सूत्रं विवृण्वन्—

१ 'न्धनादिमामूल' इति घ-पाठः। २ 'स्त्वारोहकः' इति च-पाठः। ३ 'जातिरातपो' इति घ-पाठः।

र्यैरिति परिभुक्ततादृग्विधतपसः, निर्विष्टकायिका इत्यर्थः । परिहारविशुद्धिकं च तपः प्रतिपन्नानां नवको गच्छः । तत्र परिहारिणश्चत्वारोऽनुपरिहारिणोऽपि चत्वारः कल्पस्थित एकः, वाचनाचार्य इत्यर्थः । सर्वेऽपि ते श्रुतातिशयसम्पन्नाः तथापि कृत्या (रूढ्या ?) कल्पस्थित एकः कश्चिद्व्यवस्थाप्यते । तत्र ये कालभेदेन विहितं तपोऽनुतिष्ठन्ति ते परिहारिणः । नियताचाम्लभक्तास्त्वनुपरिहारिणस्तेषामेवाभिसराः, तपोग्लानानां परिहारिणां सहायके वर्तन्ते । कल्पस्थितोऽपि नियताचाम्लभक्त एव । तत्र तपः परिहारिणां ग्रीष्मे चतुर्थषष्ठाष्टमभक्तलक्षणं जघन्यमध्यमोत्कृष्टं क्रमेणेति । शिशिरकाले षष्ठाष्टमदशमानि जघन्यमध्यमोत्कृष्टानि । वर्षास्वष्टमदशमद्वादशभक्तानि जघन्यमध्यमोत्कृष्टानि । पारणाकालेऽप्याचाम्लमेव पारयन्ति । उक्तविधानं तपः षण्मासं कृत्वा परिहारिणोऽनुपरिहारित्वं प्रतिपद्यन्ते । अनुपरिहारिणश्च परिहारिणो भवन्ति । तेऽपि षण्मासान् विदधते तत् तपः, पश्चात् कल्पस्थित एकाक्येव षण्मासावधिकं परिहारतपः प्रतिपद्यते । तस्य चैकोऽनुपरिहारी भवति, तन्मध्ये अपरश्चैकः कल्पस्थित इति, एवमेष परिहारविशुद्धः संयमोऽष्टादशभिर्मासैः परिसमाप्तिमुपयाति । परिसमाप्ते तु तस्मिन् पुनस्तदेव केचित् परिहारतपः प्रतिपद्यन्ते स्वशक्त्यपेक्षाः, केचिद् वा जिनकल्पम्, अपरे तु गच्छमेव वा विशन्तीति । परिहारविशुद्धिकाश्च स्थितकल्प एव प्रथमचरमतीर्थकरतीर्थयोरेव, न मध्यमतीर्थेष्विति । सूक्ष्मसम्परायसंयमस्तु श्रेणिमारोहतः प्रपततो वा भवति ।

परिहारविशुद्धि-संयमस्य सीमा

श्रेणिरपि द्विप्रकारा—औपशमिकी क्षायिकी च । तत्रौपशमिकी अनन्तानुबन्धिनो मिथ्यात्वादित्रयं नपुंसकस्त्रीवेदौ हास्यादिषट्कं पुंवेदः अप्रत्याख्यानावरणाः संज्वलनाश्चेति । अस्याश्च आरम्भकोऽप्रमत्तसंयतः । अपरे तु ब्रुवते—"अविरतदेशप्रमत्ताप्रमत्तविरतानामन्यतमः आरभते, स चानन्तानुबन्धिनश्चतुरोऽपि समकमेव शमयति अन्तर्मुहूर्तेन, ततो दर्शनत्रिकं, ततोऽनुदीर्णं पुमानारोहन्नपुंसकवेदं, ततः स्त्रीवेदं, योषिदारोहन्ती, प्राग् नपुंसकवेदं, ततः पुरुषवेदं, तृतीयप्रकृतिरधिरोहन् प्राक् स्त्रीवेदं, ततः पुरुषवेदं, ततोऽपि हास्यादिषट्कं ततः ( नपुंसक )पुंवेदं, ततोऽप्रत्याख्यानानां प्रत्याख्यानावरणानां च युगपदेव द्वौ क्रोधौ संज्वलनक्रोधान्तरितौ शमयति, पश्चात् संज्वलनक्रोधं, पुनर्द्वौ मानौ, पश्चात् संज्वलनमानं, पुनर्द्वे माये, ततः संज्वलनमायां, पुनर्द्वौ लोभौ, पश्चात् संज्वलनलोभम् । सङ्ख्येयानि खण्डानि कृत्वा क्रमेण चोपशमय्य पश्चिमखण्डमसङ्ख्येयानि खण्डानि करोति । ततः प्रतिसमयमसङ्ख्येयभागमुपशमयन् समस्तमन्तर्मुहूर्तेन शमयति । तांश्चासङ्ख्येयभागान् शमयन् सूक्ष्मसम्परायसंयमी भवति । अत्यन्तविशुद्धाध्यवसायो दशमगुणस्थानवर्ती, श्रेण्यारोहे च वर्धमानविशुद्धाध्यवसायस्य विशुद्धमवतरतः

औपशमिकी श्रेणी

---

१ 'षण्मासी' इति ङ-च-पाठः । २ 'हारिणं' इति ङ-पाठः । ३ 'सावधिकं' इति घ-च-पाठः ।

संक्लिश्यमानाध्यवसायस्य संक्लिष्टं, सूक्ष्मः-श्लक्ष्णावयवः सम्परायः-कषायः संसारभ्रान्तिहेतुर्यत्र तत् सूक्ष्मसम्परायम्। स चोपशान्तकषायोऽपि स्वल्पप्रत्ययलाभाद् दवदग्धाङ्कुरद्रुमवदुदकासेचनादिप्रत्ययलाभादङ्कुरादिरूपेण भस्मच्छन्नाग्निवद् वा वाय्विन्धनादिप्रत्ययतः स्वरूपमुपदर्शयति, तद्वदसौ सुखनन्त्रिकादिषु ममत्वसमीरणेन सन्धुक्षमाणः कषायाग्निश्चरणेन्धनमामूलतो दहन् प्रच्याव्यते प्रतिविशिष्टाध्यवसायादिति। क्षायिकी तु श्रेणिरनन्तानुबन्धिनो मिथ्यात्वमिश्रसम्यक्त्वानि अप्रत्याख्यानप्रत्याख्यानावरणाः नपुंसकस्त्रीवेदौ हास्यादिषट्कं पुंवेदः संज्वलनाश्च, अस्याश्चारोहकः अविरतदेशप्रमत्ताप्रमत्ताविरतानामन्यतमो विशुध्यमानाध्यवसायः। स चानन्तानुबन्धिनो युगपदेव क्षपयत्यन्तर्मुहूर्तेन। ततः क्रमेण दर्शनत्रिकं, ततोऽप्रत्याख्यानप्रत्याख्यानावरणांश्च युगपदेव क्षपयितुमारभते। विमध्यभागे चैषामिमाः षोडश प्रकृतीः क्षपयति-नरकतिर्यग्गती एतदानुपूर्व्यौ एकद्वित्रिचतुरिन्द्रियजातीयातपोद्योतस्थावरसाधारणसूक्ष्मनामानि, ततो निद्रानिद्राप्रचलाप्रचलास्त्यानर्द्धीः, ततोऽष्टानां शेषं, ततोऽनुदीर्णं वेदं जघन्यं पूर्ववत्, ततो हास्यादिषट्कं, ततोऽप्युदितं वेदं, ततः संज्वलनानामेकैकं क्रमेण क्षपयति, सावशेषे च पूर्वसंज्वलनकषाये उत्तरं क्षपयितुमारभते। सर्वत्र पूर्वशेषं चोत्तरेणैव सह क्षपयति यावत् संज्वलनलोभसङ्ख्येयभागः। तमपि सङ्ख्येय( भाग )मसङ्ख्यानि खण्डानि कृत्वा प्रतिसमयमेकैकं खण्डं क्षपयति, तदा[ पि ] सूक्ष्मसम्परायसंयमी भवति। समस्तमोहनीयोपशमे तु एकादशगुणस्थानप्राप्त उपशान्तकषायो यथाख्यातसंयमी भवति। क्षपकस्तु सकलमोहार्णवमुत्तीर्णो निर्ग्रन्थो यथाख्यातसंयमी जायते। अथशब्दो यथाशब्दार्थे। यथा ख्यातः संयमो भगवता तथाऽसावेव, कथं च ख्यातः?, अकषायः, स चैकादशद्वादशयोर्गुणस्थानयोः, उपशान्तत्वात् क्षीणत्वाच्च कषायाभाव इति। एवं पञ्चविधं चारित्रमष्टविधकर्मचयरिक्तीकरणात्। तच्च पुलाकादिषु विस्तरेण वक्ष्यामः पुलाकादिसूत्रे उपरिष्टात् ( अ० ९, सू० ४८ ), पुलाकादिभेदेषु सामायिकादिसंयमः पञ्चप्रकारोऽपि पञ्चसु पुलाकादिनिर्ग्रन्थेषु विस्तरेण-प्रपञ्चेन भावयिष्यत इति ॥१८॥

क्षपकश्रेणीवर्णनम्

उक्तं चारित्रं, प्रकीर्णकं च तपः, सम्प्रत्यनशनादिकं तपो भण्यते—

बाह्यतपसः षड्विधता

**सूत्रम्—अनशना-ऽवमौदर्य-वृत्तिपरिसङ्ख्यान-रसपरित्याग-विविक्तशय्यासन-कायक्लेशा बाह्यं तपः॥९-१९॥**

टी०—द्विविधं तपः-बाह्यमभ्यन्तरं च, तत्र बाह्याभ्यन्तरशब्दार्थः प्राङ् निरूपितः। तदेकैकं षोढा। तत्र बाह्यस्य तावद् भाष्यकारो भेदानाचष्टे षडपि सूत्रं विवृण्वन्—

---

१ ' न्धनादिमामूल ' इति घ-पाठः। २ ' स्त्वारोहकः ' इति च-पाठः। ३ ' जातिरातपो ' इति घ-पाठः।

भा०—अनशनं १ अवमौदर्यं २ वृत्तिपरिसङ्ख्यानं ३ रसपरित्यागः ४ विविक्तशय्यासनता ५ कायक्लेशः ६ इत्येतत् षड्विधं बाह्यं तपः ॥ "सम्यग् योगनिग्रहो गुप्तिः" (अ० ९, सू० ४) इत्यतःप्रभृति सम्यगित्यनुवर्तते, संयमरक्षणार्थं कर्मनिर्जरार्थं च चतुर्थषष्ठाष्टमादि सम्यगनशनं तपः ॥

टी०—अनशनमवमौदर्यं वृत्तिपरिसङ्ख्यानमित्यादि। प्राक् प्रकृतः सम्यक्शब्दोऽनुवर्तते। स च विशेषणम्—सम्यगनशनं सम्यगवमौदर्यम्, एवं च सर्वत्र वृत्तिपरिसङ्ख्यानादिष्वपि। किं पुनर्विशेषणेन व्यावर्त्यते?, नृपशत्रुतस्करकृताहारनिरोधादि तथा परिनिमित्तमाजीवादिहेतोः उपहतभावदोषस्य हि न संयमरक्षणं न च कर्मनिर्जरेत्यतः

सम्यग्ग्रहणे हेतवः

सम्यग्ग्रहणम्। यस्तु प्रवचनोदितश्रु(श्रा)द्धतया स्वसामर्थ्यापेक्षो द्रव्यक्षेत्रकालभावाभिज्ञः क्रियाशाहापयमहोरात्राभ्यन्तरकार्यः करोत्यनशनादितपः स कर्मनिर्जराभाग् भवतीत्येवमर्थमनुवर्त्यते। सम्यग्ग्रहणं बालतपःप्रतिषेधार्थं च। संयमः सप्तदशभेद उक्तः (अ०९, सू०६), चारित्रं वा पञ्चप्रकारं संयमः। तत्परिपालनाय रसत्यागादि सम्यक्तपो भवति। कर्म ज्ञानावरणादि तस्य निर्जरा—आत्मप्रदेशेभ्यः परिशाटनम्[3]। यथोक्तम् (प्रशमरतौ श्लो० १५९)—यद्वद् विशेषणादुपचितोपीत्यादि[4]। तपश्च प्रायः सर्वं समये प्रतीतं शुभाशुभकर्मक्षयायेत्येवं[2] कर्मनिर्जरणार्थं चेत्युक्तम्। चशब्दः समुच्चयार्थः। तत्रानशनमादावेव, आहारगवेषणे यत्नवानपि संयतः केनचिदतीचारकलङ्केन युज्यत एवेति तत्परिहारायोपन्यस्तं सप्रपञ्चं चतुर्थषष्ठाष्टमादीत्यादिना, अशनम्—आहारस्तत्परित्यागोऽनशनम्। तद् द्विधा—इत्वरं यावज्जीवकं च। तत्रेत्वरं

इत्वरमनशनम्

नमस्कारसहितादि। चतुर्थभक्तादि तु भाष्यकारेणोपन्यस्तमतीत्वरत्वादितरदुपेक्षितम् चतुर्थभक्तादि षण्मासपर्यवसानमित्वरमनशनं भगवतो महावीरस्य तीर्थे। यावज्जीविकं तु त्रिविधम्—पादपोपगमनं, इङ्गिनी, भक्तप्रत्याख्यानमिति। तत्र पादपोपगमनं द्विधा—सव्याघातमव्याघातं च। सतोऽप्यायुषो यदोपक्रान्तिः क्रियते समुपजातव्याधिनोत्पन्नमहावेदनेन तत्

यावज्जीविकानशनस्य भेदप्रभेदाः

सव्याघातम्। निर्व्याघातं तु प्रव्रज्याशिक्षापदादिक्रमेण जराजर्जरितशरीरः करोति यदुपहितचतुर्विधाहारप्रत्याख्यानो निर्जन्तुकं स्थण्डिलमाश्रित्य पादप इवैकेन पार्श्वेन निपत्याऽपरिस्पन्दस्तावदास्ते प्रशस्तध्यानव्यापृतान्तःकरणो यावदुत्क्रान्ताः प्राणास्तदेतत् पादपोपगमनाख्यं अनशनम्। इङ्गिनी श्रुतविहितक्रियाविशेषस्तद्विशिष्टं मरणमिङ्गिनीमरणम्। अयमपि हि

पादपोगमनानशनम्

---

१ 'व्यावर्त्यते' इति ङ-पाठः। २ 'त्येवमनु' इति ङ-पाठः। ३ 'शटनं' इति च-पाठः।
४ सम्पूर्णं पद्यं यथा—

"यद्वद् विशोषणादुपचितोऽपि यत्नेन जीर्यते दोषः।
तद्वत् कर्मोपचितं निर्जरयति संवृतस्तपसा॥"

प्रव्रज्यादिप्रतिपत्तिक्रमेणैवायुषः परिहाणिमवबुध्य आत्तनिजोपकरणः स्थावरजङ्गमप्राणिविवर्जितस्थण्डिलस्थायी एकाकी कृतचतुर्विधाहारप्रत्याख्यानः छायात उष्णं उष्णाच्छायां सङ्क्रामन् सचेष्टः सम्यग्ज्ञानपरायणः प्राणान् जहाति। एवदिङ्गिनीमरणमपरिकर्मपूर्वकं चेति। भक्तप्रत्याख्यानं तु गच्छमध्यवर्तिनः, स कदाचित् त्रिविधाहारप्रत्याख्यायीति, कदाचिच्चतुर्विधाहारप्रत्याख्यायी, पर्यन्ते कृतसमस्तप्रत्याख्यानः समाश्रितमृदुसंस्तारकः समुत्सृष्टशरीराद्युपकरणममत्वः स्वयमेवोद्ग्राहितनमस्कारः समीपवर्तिसाधुदत्तनमस्कारो वा उद्वर्तनपरिवर्तनादि कुर्वाणः समाधिना करोति कालमेतद् भक्तप्रत्याख्यानं मरणमिति ॥

इङ्गिन्यनशनम्

भक्तप्रत्याख्यानानशनम्

उक्तमनशनम्। अवमौदर्यमुच्यते—

**भा०—अवमौदर्यम्। अवममित्यूननाम। अवममुदरमस्य (इति) अवमोदरः। अवमोदरस्य भावः अवमौदर्यम् ॥**

**टी०—अवमौदर्यम्। अवममित्यूननामेत्यादि। अवमं—न्यूनमुदरमस्येत्यवमोदरः तद्भावोऽवमौदर्यं—न्यूनोदरता ॥** कवलप्रमाणनिरूपणार्थमाह—

अवमौदर्यस्य त्रैविध्यम्

**भा०—उत्कृष्टावकृष्टौ च वर्जयित्वा मध्यमेन कवलेन त्रिविधमवमौदर्यं भवति। तद्यथा—अल्पाहारावमौदर्यं, उपार्धावमौदर्यं, प्रमाणप्रासात् किञ्चिदूनावमौदर्यमिति। कवलपरिसङ्ख्यानं च प्राग् द्वात्रिंशद्भ्यः कवलेभ्यः ॥**

**टी०—उत्कृष्टावकृष्टावित्यादि।** उत्कृष्टो विकृत्य मुखविवरं यत्नतो महाप्रमाणं कृत्वा यः प्रक्षिप्यते, अवकृष्टस्त्वत्यन्तलघुकः, तौ वर्जयित्वा मध्यमेन कवलेनाविकृतस्वमुखप्रमाणेनावमौदर्यं कार्यम्, तच्च त्रिविधमवमौदर्यं तद्यथेत्यादिना प्रत्यक्षीकरोति—अल्पाहारावमौदर्यमित्यादि। तत्राहारः पुंसो द्वात्रिंशत्कवलप्रमाणः। कवलाष्टकाभ्यवहारोऽल्पाहारावमौदर्यम्। उपार्धावमौदर्यं द्वादश कवलाः, अर्धसमीपम् उपार्धं, द्वादश कवलाः, यतः कवलचतुष्टयप्रक्षेपात् सम्पूर्णमर्धं भवति। प्रमाणप्रासाहारो द्वात्रिंशत्कवलः। स चैकेन कवलेन न्यूनः किञ्चिदूनावमौदर्यं भवति। इतिशब्दः प्रकारार्थः। प्रमाणप्राप्तावमौदर्यं चतुर्विंशतिः कवलाः। [भागद्वयावमौदर्यं षोडश कवलाः] त्रिविधे चावमौदर्ये एकैककवलह्रासेन बहूनि स्थानानि जायन्ते। सर्वाणि च तान्यवमौदर्यविशेषाः। कवलपरिसङ्ख्यानं चेति पुरुषस्य द्वात्रिंशत्, योषितोऽष्टाविंशतिः, अतो विभागः कार्यः ॥

पुरुषप्रमदानां कवलसङ्ख्या

---

१ 'साधुकृत' इति ग-पाठः। २ 'ममूनमुदर०' इति ग-पाठः।

भा०—अनशनं १ अवमौदर्यं २ वृत्तिपरिसङ्ख्यानं ३ रसपरित्यागः ४ विविक्तशय्यासनता ५ कायक्लेशः ६ इत्येतत् षड्विधं बाह्यं तपः ॥ "सम्यग् योगनिग्रहो गुप्तिः" (अ० ९, सू० ४) इत्यतःप्रभृति सम्यगित्यनुवर्तते, संयमरक्षणार्थं कर्मनिर्जरार्थं च चतुर्थषष्ठाष्टमादि सम्यगनशनं तपः ॥

टी०—अनशनमवमौदर्यं वृत्तिपरिसङ्ख्यानमित्यादि। प्राक् प्रकृतः सम्यक्छब्दोऽनुवर्तते। स च विशेषणम्—सम्यगनशनं सम्यगवमौदर्यम्, एवं च सर्वत्र वृत्तिपरिसङ्ख्यानादिष्वपि। किं पुनर्विशेषणेन व्यावर्त्यते?[1], नृपचौरतस्करकृताहारनिरोधादि तथा पक्षिनिमित्त-

सम्यग्ग्रहणे हेतयः

माजीवादिहेतोः उपहतभावदोषस्य हि न संयमरक्षणं न च कर्मनिर्जरेत्यतः सम्यग्ग्रहणम्। यस्तु प्रवचनोदितश्रु(श्रा)द्धतया स्वसामर्थ्यापेक्षो द्रव्यक्षेत्रकालभावाभिज्ञः क्रियाशाह्यापयमहोरात्राभ्यन्तरकार्याः करोत्यनशनादितपः स कर्मनिर्जराभाग् भवतीत्येवमर्थमनुवर्त्यते[2]। सम्यग्ग्रहणं बालतपःप्रतिषेधार्थं च। संयमः सप्तदशभेद उक्तः (अ०९, सू०६), चारित्रं वा पञ्चप्रकारं संयमः। तत्परिपालनाय रसत्यागादि सम्यक्तपो भवति। कर्म ज्ञानावरणादि तस्य निर्जरा—आत्मप्रदेशेभ्यः परिशाटनम्[3]। यथोक्तम् (प्रशमरतौ श्लो० १५९)—यद्वद् विशोषणादुपचितोऽपीत्यादि[4]। तपश्च प्रायः सर्वं समये प्रतीतं शुभाशुभकर्मक्षयायेत्येवं कर्मनिर्जरणार्थं चेत्युक्तम्। चशब्दः समुच्चयार्थः। तत्रानशनमादावेव, आहारगवेषणे यत्नवानपि संयतः केनचिदतीचारकलङ्केन युज्यत एवेति तत्परिहारायोपन्यस्तं सप्रपञ्चं चतुर्थषष्ठाष्टमादीत्यादिना, अशनम्—आहारस्तत्परित्यागोऽनशनम्। तद् द्विधा—इत्वरं यावज्जीवकं च। तत्रेत्वरं

इत्वरमनशनम्

नमस्कारसहितादि। चतुर्थभक्तादि तु भाष्यकारेणोपन्यस्तमतीत्वरत्वादितरदुपेक्षितम् चतुर्थभक्तादि षण्मासपर्यवसानमित्वरमनशनं भगवतो महावीरस्य तीर्थे। यावज्जीविकं तु त्रिविधम्—पादपोपगमनं, इङ्गिनी, भक्तप्रत्याख्यानमिति। तत्र पादपोपगमनं द्विधा—सव्याघातमव्याघातं च। सतोऽप्यायुषो

यावज्जीविकानशनस्य भेदप्रभेदाः

यदोपक्रान्तिः क्रियते समुपजातव्याधिनोत्पन्नमहावेदनेन तत् सव्याघातम्। निर्व्याघातं तु प्रव्रज्याशिक्षापदादिक्रमेण जराजर्जरितशरीरः करोति यदुपहितचतुर्विधाहारप्रत्याख्यानो निर्जन्तुकं स्थण्डिलमाश्रित्य पादप इवैकेन पार्श्वेन निपत्याऽपरिस्पन्दस्तावदास्ते प्रशस्तध्यानव्यापृतान्तःकरणो यावदुत्क्रान्ताः प्राणास्तदेतत् पादपोपगमनाख्यं अनशनम्। इङ्गिनी

पादपोगमनानशनम्

श्रुतविहितक्रियाविशेषस्तद्विशिष्टं मरणमिङ्गिनीमरणम्। अयमपि हि

१ 'व्यावृत्यते' इति ङ–पाठः। २ 'त्येवमनु' इति ङ–पाठः। ३ 'शटनं' इति च–पाठः।
४ सम्पूर्णं पद्यं यथा—

"यद्वद् विशोषणादुपचितोऽपि यत्नेन जीर्यते दोषः।
तद्वत् कर्मोपचितं निर्जरयति संवृतस्तपसा ॥"

प्रव्रज्यादिप्रतिपत्तिक्रमेणैवायुषः परिहाणिमवबुध्य आत्तनिजोपकरणः स्थावरजङ्गमप्राणि-विवर्जितस्थण्डिलस्थायी एकाकी कृतचतुर्विधाहारप्रत्याख्यानः छायात उष्णं उष्णाच्छायां सङ्क्रामन् सचेष्टः सम्यग्ज्ञानपरायणः प्राणान् जहाति। एतदिङ्गिनीमरणमपरिकर्मपूर्वकं चेति। भक्तप्रत्याख्यानं तु गच्छमध्यवर्तिनः, स कदाचित् त्रिविधाहारप्रत्याख्यायीति, कदाचिच्चतुर्विधाहारप्रत्याख्यायी, पर्यन्ते कृत-समस्तप्रत्याख्यानः समाश्रितमृदुसंस्तारकः समुत्सृष्टशरीराद्युपकरणममत्वः स्वयमेवोद्ग्राहितनमस्कारः समीपवर्तिसाधुदत्तनमस्कारो वा उद्वर्तनपरि-वर्तनादि कुर्वाणः समाधिना करोति कालमेतद् भक्तप्रत्याख्यानं मरणमिति ॥

इङ्गिन्यनशनम्

भक्तप्रत्याख्यानानशनम्

उक्तमनशनम्। अवमौदर्यमुच्यते—

**भा०—अवमौदर्यम्। अवममित्यूननाम। अवममुदरमस्य (इति) अव-मोदरः। अवमोदरस्य भावः अवमौदर्यम् ॥**

**टी०—अवमौदर्यम्। अवममित्यूननामेत्यादि। अवमं-न्यूनमुदरमस्येत्य-वमोदरः तद्भावोऽवमौदर्यं-न्यूनोदरता ॥** कवलप्रमाणनिरूपणार्थमाह—

**भा०—उत्कृष्टावकृष्टौ च वर्जयित्वा मध्यमेन कवलेन त्रि-विधमवमौदर्यं भवति। तद्यथा—अल्पाहारावमौदर्यं, उपा-र्धावमौदर्यं, प्रमाणप्राप्तात् किञ्चिदूनावमौदर्यमिति। कवलपरि-सङ्ख्यानं च प्राग् द्वात्रिंशद्भ्यः कवलेभ्यः ॥**

अवमौदर्यस्य त्रैविध्यम्

**टी०—उत्कृष्टावकृष्टावित्यादि।** उत्कृष्टो विकृत्य मुखविवरं यत्नतो महाप्रमाणं कृत्वा यः प्रक्षिप्यते, अवकृष्टस्त्वत्यन्तलघुकः, तौ **वर्जयित्वा मध्यमेन कवलेना**विकृत-स्वमुखप्रमाणेनावमौदर्यं कार्यम्, तच्च **त्रिविधमवमौदर्यं** तद्यथेत्यादिना प्रत्यक्षीकरोति—अल्पाहारावमौदर्यमित्यादि। तत्राहारः पुंसो द्वात्रिंशत्कवलप्रमाणः। कवलाष्टकाभ्यवहारो-ऽल्पाहारावमौदर्यम्। **उपार्धावमौदर्यं** द्वादश कवलाः, अर्धसमीपम् उपार्धं, द्वादश कवलाः, यतः कवलचतुष्टयप्रक्षेपात् सम्पूर्णमर्धं भवति। **प्रमाणप्राप्ता**हारो द्वात्रिंशत्कवलः। स चैकेन कवलेन न्यूनः **किञ्चिदूनावमौदर्यं** भवति। इतिशब्दः प्रकारार्थः। प्रमाणप्राप्तावमौदर्यं चतु-र्विंशतिः कवलाः। [भागद्वयावमौदर्यं षोडश कवलाः] त्रिविधे चावमौदर्ये एकैककवलह्रासेन बहूनि स्थानानि जायन्ते। सर्वाणि च तान्यवमौदर्य-विशेषाः। **कवलपरिसङ्ख्यानं** चेति पुरुषस्य द्वात्रिंशत्, योषितो-ऽष्टाविंशतिः, अतो विभागः कार्यः ॥

पुरुषप्रमदानां कवलसङ्ख्या

---

१ 'साधुकृत' इति ग-पाठः। २ 'ममूनमुदर०' इति ग-पाठः।

भा०—वृत्तिपरिसङ्ख्यानमनेकविधम् । तद्यथा—उत्क्षिप्तनिक्षिप्तान्तप्रान्तचर्यादीनां सक्तुकुल्मापौदनादीनां चान्यतममभिगृह्यावशेषस्य प्रत्याख्यानम् ।

टी०—वृत्तिसङ्ख्यानमनेकविधमित्यादि । वर्ततेऽनया सा वृत्तिः-भैक्ष्यं तस्याः परिसङ्ख्यानं-परिगणनं, आगमविहितोऽभिग्रहो वा परिगणनं, दत्तीनां भिक्षाणां वा । तत्र दत्तिर्यदेकमुखेन प्रक्षिपति पात्रकार्यां पटलकेन वा दोहनकादिना वा । भिक्षा तु हस्तेनोत्क्षिप्य यद् ददाति कडुच्छुकेन औदङ्किकया वा तत्र परिगणनम्-एकां दत्तिं ग्रहीष्याम्यथ द्वे तिस्रो वा इत्यादि । एवं भिक्षाणामपि परिगणनं गोचरप्रवेशकाले करोति । तद्यथेत्यादिना अभिग्रहानेकविधत्वं दर्शयति—उत्क्षिप्तनिक्षिप्तान्तेत्यादिना । उत्क्षिप्तं पटलकादिकं कडुच्छुकादिनोपकरणेन दानयोग्यतया दायकेनोपात्तं तच्चेद् यदि लप्स्ये ततो ग्रहीष्यामि, नावशिष्टमित्युत्क्षिप्तचर्या-उत्क्षिप्ताभ्यवहरणमिति । तथा परो निक्षिप्तचरकः पूर्वोक्तविपरीतग्राही । इत्यमुत्क्षिप्तचर्यादीनामन्यतममभिग्रहमभिगृह्य पर्यटति भिक्षायै । सक्तुकुल्मापौदनादीनां चेत्यनेन द्रव्य-क्षेत्र-काल-भावविभक्तानभिग्रहान् सूचयति । तत्र द्रव्यतः सक्तुकुल्मापान्नशुष्कौदनम् । आदिशब्दात् तक्रं एककमाचाम्लपर्णकं मण्डकान् वा ग्रहीष्ये, क्षेत्रतो देहलीं जङ्घयोरन्तः कृत्वा, कालतो विनिवृत्तेषु सर्वभिक्षाचरेषु, भावतो हसनरोदनादिव्यापृतो निगडादिबद्धोऽक्ताक्षः कृततमाऊपत्रो वा दायको ददाति यत्, तदेवं-मन्यतमं द्रव्याद्यभिगृह्य शेषप्रत्याख्यानं वृत्तिपरिसङ्ख्यानं तप इति ॥

वृत्तिभिक्षयोर्विशेषः

उत्क्षिप्तवृत्तिः

भा०—रसपरित्यागोऽनेकविधः । तद्यथा—मद्य-मांस-मधु-नवनीतादीनां रसविकृतीनां प्रत्याख्यानं विरसरूक्षाद्यभिग्रहश्च ॥

टी०—रसपरित्यागोऽनेकविध इत्यादि । रस्यन्ते-खाद्यन्तेऽतिशयेनेति रसाः । तत्परित्यागो हि तत्परिहारः । सोऽनेकप्रकारस्तद्बहुत्वादेव । तद्यथेत्यादिना रसान् प्रत्यक्षी-करोति, मद्य-मांसेत्यादि । तत्र मद्यं गौडपिष्टद्राक्षाखर्जूरादिद्रव्यसम्भारोपजातमदसामर्थ्यं विषगरादिवज्जीवमस्वतन्त्रं करोति, अस्वतन्त्रश्च तद्वशः कार्याकार्यविवेकशून्यः प्रभ्रष्टस्मृति-संस्कारो न किञ्चिन्नाचरति गर्हितम् । [ अतो नित्यावपरिहार्यद्रव्यक्षेत्रकालभावापेक्षयाऽनुयु-क्तितः शुद्धेनागमानुसारिणा यथायुक्तमाचरणीयं, ] सर्वथा तत्परित्यागस्तपः । मांसं तु प्राणिश-रीरावयवः, तच्च प्राणव्यपरोपणमन्तरेण दुष्प्रापम् । प्राणातिपातश्च स्वशरीरसम्भूतदुःखानुमानेन न शक्यः प्राज्ञेन कर्तुं, स्वयं न करोतीत्यन्यः कार्यत इत्येतदपि न, अन्योऽपि नैव कार्यते । न

१ ' सान्तप्रान्त ' इति घ-पाठः । २ ' कडुच्छकेन ' इति ङ-च-पाठः । ३ ' उदङ्किकया ' इति ग-च-पाठः । ४ ' चरकां ' इति ङ-पाठः ५ ' देवमद्व्या ' इति ङ-पाठ-

चानुमोदनीयः। स्वयमेव कुर्वन् मुनिना साधुभ्यो दास्यामीति, एवं कृतकारितानुमतिभिः परिहारः सर्वथा मुमुक्षोरुपदिष्टः शासनप्रणायिना सर्वज्ञेनेति । अथ यत् कृतकारितानुमतिपरिशुद्धमोदनादिवत् तत् किमिति न वर्ण्यते? । तदपि गार्ध्यपरिहारार्थं यतयः परिहरन्त्येव द्रव्यादिचतुष्टयापेक्षाः ॥ ननु चैवमोदनादयोऽपि गार्ध्य-परिहारिणा त्याज्याः ?, नैतदेवम्, मांसरसो हि सर्वरसातिशायी वृष्यतमश्च किल। तत्र चाव-श्यंभावि गार्ध्यम्। न चैवमोदनादयः ॥ ननु च क्षीर-दधि-घृतादयोऽपि रसा वृष्या एवेति, उच्यते—तेऽपि हि मुमुक्षोः सर्वदा नैवानुज्ञाता भगवद्भिः । यदाऽप्यनुज्ञातास्तदाऽपि मात्रया तप्तायोभाजनप्रक्षिप्तघृतादिबिन्दुक्षयवन्न चरणबाधायै प्रत्यलाः । परेणाप्यवश्यमिदमभ्युपेयं, न नियोगतोऽभ्यवहर्तव्यं सर्वमेव, त्रिकोटिपरिशुद्धश्वाहिगजाश्वनरमांसाभ्यवहारप्रसङ्गात् । तस्मान्न सर्वमेव त्रिकोटिपरिशुद्धमभ्यवहार्यम् । मद्यपाने चातिप्रसङ्गः । अथ मद्यपानं प्रकृति-सावद्यमिति परिह्रियते । एतदप्यसत् प्राणातिपातसम्बन्धात् रसातिशयगार्ध्याच्च । मांसमपि प्रकृतिसावद्यमेव । अपि च–मद्यमुपभुञ्जते युक्तितो येन न तेषु किञ्चिदवद्यमुपलभ्यते । तस्मान्मांसरसपरित्यागः श्रेयानिति । मधु त्रिप्रकारम्–माक्षिकं कौत्तिकं भ्रामरं च । एतदपि प्राण्युपघातनिष्पन्नमेवेति परिहार्यं द्रव्यादिचतुष्ट-यापेक्षयेति। गो-ऽमहिष्य-ऽजा-विकानां नवनीतं चतुर्धा। स चापि रसो वृष्य इति परिहार्यः । आदिग्रहणात् क्षीर-दधि-गुड-घृत-तैलाख्याः पञ्चावरुध्यन्ते विकृतयः। तत्र क्षीरविकृतिः पञ्चप्रकारा गो-महिष्य-ऽजा-विको-ष्ट्रीणाम्। दधि-विकृतिरपि करभीवर्जानां चतुःप्रकारैव। गुडविकृतिरिक्षुविकारः । फाणितादि प्रसिद्धं, खण्ड-शर्करावर्जः । दधिविकृतिरिव घृतादिविकृतिरपि चतुर्विधैव । तैलविकृ-तिरपि चतुर्विधा । तिला-ऽतसी-सिद्धार्थक-कुसुम्भकाख्यानि तैलानि । दशमी घृताद्यवगाहनिष्पन्ना । अवगाह्यकविकृतिरपूपादिका । साऽपि आदिग्रहणादागृहीतैव। एवमेतासां रसविकृतीनां प्रत्याख्यानं तपः । एता हि वृष्यत्वाद् वाजीकरणप्रसिद्धेश्च, न सर्वदाऽभ्यवहार्याः, चित्तविकारहेतुभूतत्वात्। एवं च विकृतयोऽन्वर्थ-सञ्ज्ञां लभन्ते । अतो मुमुक्षुणा ललनाऽङ्गप्रत्यङ्गविलोकनवत् प्रत्याख्येयाः । इत्थं च रसपरि-त्यागलक्षणं विशिष्टं तपः । विरसरूक्षाद्यभिग्रहश्चेत्यनेन विनापि विकृतिभिः शक्यं प्राण-संरक्षणं यतिनेति दर्शयन्ति। विगतरसं विरसम्, विकृतिभिरसंसृष्टं विरसं वा। तस्माद् रसात् प्रच्युतं रूक्षं कोद्रवाम्लपर्णकम् । आदिग्रहणादन्तप्रान्तपरिग्रहः ॥

मांसभक्षणे निषेधः

मधुनस्त्रैविध्यं नवनीतस्य च चातुर्विध्यम्

क्षीरादिविकृतीनां विविधता

**भा०—विविक्तशय्यासनता नाम एकान्तेऽनाबाधेऽसंसक्ते स्त्रीपशुपण्डक-वर्जिते ।**

---

१ 'प्रणायिना' इति ङ–पाठः । २ 'पण्डकविवर्जिते' इति घ–पाठः ।

भा०—वृत्तिपरिसङ्ख्यानमनेकविधम् । तद्यथा—उत्क्षिप्तनिक्षिप्तान्तप्रान्त-चर्यादीनां सक्तुकुल्माषौदनादीनां चान्यतममभिगृह्यावशेषस्य प्रत्याख्यानम् ।

टी०—वृत्तिसङ्ख्यानमनेकविधमित्यादि । वर्तते यया सा वृत्तिः–भैक्षं तस्याः परिसङ्ख्यानं–परिगणनं, आगमविहितोऽभिग्रहो वा परिगणनं, दत्तीनां भिक्षाणां वा । तत्र दत्तिर्यदेकमुखेन प्रक्षिपति पात्रकादौ पटलकेन वा दौहनकादिना वा । भिक्षा तु हस्तेनोत्क्षिप्य यद् ददाति कडुच्छुकेन औदङ्किकया वा तत्र परिगणनम्–एकां दत्तिं ग्रहीष्याम्यथ द्वे तिस्रो वा इत्यादि । एवं भिक्षाणामपि परिगणनं गोचरप्रवेशकाले करोति । तद्यथेत्यादिना अभिग्रहा-नेकविधत्वं दर्शयति—उत्क्षिप्तनिक्षिप्तान्तेत्यादिना । उत्क्षिप्तं पटलका-दिकं कडुच्छुकादिनोपकरणेन दानयोग्यतया दायकेनोद्यतं तच्चेद् यदि लप्स्ये ततो ग्रहीष्यामि, नावशिष्टमित्युत्क्षिप्तचर्या–उत्क्षिप्ताभ्यवहरणमिति । तथा परो निक्षिप्तचरकः पूर्वोक्तविपरीतग्राही । इत्थमुत्क्षिप्तचर्यादीनामन्यतममभिग्रहमभिगृह्य पर्यटति भिक्षायै । सक्तुकुल्माषौदनादीनां चेत्यनेन द्रव्य-क्षेत्र-काल-भावविभक्तानभिग्रहान् सूचयति । तत्र द्रव्यतः सक्तुकुल्माषान्नशुष्कौदनम् । आदिशब्दात् तक्रं एककमाचाम्लपर्णकं मण्डकान् वा ग्रहीष्ये, क्षेत्रतो देहलीं जङ्घयोरन्तः कृत्वा, कालतो विनिवृत्तेषु सर्वभिक्षाचरेषु, भावतो हसनरोदनादिव्यापृतो निगडादिबद्धोऽक्ताक्षः कृततमालपत्रो वा दायको ददाति यत्, तदेवं-मन्यतमं द्रव्याद्यभिगृह्य शेषप्रत्याख्यानं वृत्तिपरिसङ्ख्यानं तप इति ॥

(हाशिये: वृत्तिभिक्षयोर्विशेषः ; उत्क्षिप्तवृत्तिः)

भा०—रसपरित्यागोऽनेकविधः । तद्यथा—मद्य-मांस-मधु-नवनीतादीनां रसविकृतीनां प्रत्याख्यानं विरसरूक्षाद्यभिग्रहश्च ॥

टी०—रसपरित्यागोऽनेकविध इत्यादि । रस्यन्ते–खाद्यन्तेऽतिशयेनेति रसाः । तत्परित्यागो हि तत्परिहारः । सोऽनेकप्रकारस्तद्बहुत्वादेव । तद्यथेत्यादिना रसान् प्रत्यक्षी-करोति, मद्य-मांसेत्यादि । तत्र मद्यं गौडपिष्टद्राक्षाखर्जूरादिद्रव्यसम्भारोपजातमदसामर्थ्यं विषगरादिवज्जीवमस्वतन्त्रं करोति, अस्वतन्त्रश्च तद्वशः कार्याकार्यविवेकशून्यः प्रभ्रष्टस्मृति-संस्कारो न किञ्चिन्नाचरति गर्हितम् । [ अतो नित्यावपरिहार्यद्रव्यक्षेत्रकालभावापेक्षयाऽनुयु-क्तितः शुद्धेनागमानुसारिणा यथायुक्तमाचरणीयं, ] सर्वथा तत्परित्यागस्तपः । मांसं तु प्राणिश-रीरावयवः, तच्च प्राणव्यपरोपणमन्तरेण दुष्प्रापम् । प्राणातिपातश्च स्वशरीरसम्भूतदुःखानुमानेन न शक्यः प्राज्ञेन कर्तुं, स्वयं न करोतीत्यन्यः कार्यत इत्येतदपि न, अन्योऽपि नैव कार्यते । न

---

१ ‘ प्रान्तप्रान्त ’ इति घ-पाठः । २ ‘ कडुच्छकेन ’ इति ङ-च-पाठः । ३ ‘ उदङ्किकया ’ इति ग-च-पाठः ।
४ ‘ चरकां ’ इति ङ-पाठः ५ ‘ देवमद्रव्या ’ इति ङ-पाठ-

ऽवश्यम्भाविनी, एकत्वपरिणतेश्च विना संसार्यात्मनः सुखदुःखाभाव एव स्याद्, एवमात्मनः कायद्वारेण क्लेशोपपत्तिः "सम्यग्योगनिग्रहो गुप्तिः" (अ० ९, सू० ४) इत्येतस्मात् सम्यग्ग्रहणमनुवर्तते, तच्च कायक्लेशविशेषणम्। आगमानुसारिणी सम्यक्क्लेशोत्पत्तिः निर्जरायै न्याय्या। स चागमेऽनेकप्रकारः कायक्लेश उपन्यस्तः। तद्यथेत्यादिना तदनेकविधत्वं दर्शयति—स्थानवीरासनेत्यादि। स्थानग्रहणादूर्ध्वस्थानलक्षणकायोत्सर्गपरिग्रहः। तस्य चाभिग्रहविशेषात् स्वशक्त्यपेक्षातः कालनियमश्चन्द्रावतंसकनृपतेरिवावगन्तव्यः। वीरासनं तु जानुप्रमाणासनसन्निविष्टस्याधस्तात् समाकृष्यते तदासनं, निवेष्टा च तदवस्थ एवास्ते यदा तदा कायक्लेशाख्यं तपो भवति। तत्राप्यभिग्रहविशेषादेवं स्वसामर्थ्यापेक्षातः कालनियमः। उत्कटुकासनं तु प्रसिद्धमेव विनाऽऽसनेन भूमौ वा प्राप्तस्फिग्द्वयस्य भवति। एकपार्श्वशायित्वं त्वधोमुख उत्तानमुखस्तिर्यग्व्यवस्थितो वा कालनियमभेदेन यदवतिष्ठते तत् तपः कायक्लेशाख्यम्। तथा दण्डायतशायित्वं नाम तपः ऋजुकृतशरीरः प्रसारितजङ्घाद्वयश्चलनरहितस्तिष्ठति यदा तदा तद् भवति। तथा आतापनमपि ऊर्ध्वबाहोरूर्ध्वस्थितस्य निविष्टस्य निपण्णस्य वा प्रज्वलितगभस्तिजालस्य सवितुरभिमुखस्थितस्य भवति। अप्रावरणाभिग्रहः शिशिरसमये प्रावरणाग्रहणम्। आदिग्रहणात् हेमन्तेऽपि रजनीष्वातापनं सन्तापनमात्मनः, शीतार्तिसदनमित्यर्थः। तथा सलगण्डशायित्वमप्रतिकर्मशरीरत्वमस्नानकं केशोल्लुञ्चनमित्येवमेतानि स्थानवीरासनादीनि ॥

**भा०—सम्यक् प्रयुक्तानि बाह्यं तपः।**

**टी०—सम्यक् प्रयुक्तानि** आगमचोदितानि-अनुगता(नि) **बाह्यं तपः**। यथाशक्ति विधिनाऽनुष्ठेयम्, अन्यथा त्वविधिप्रयोगादात्मानमितरांश्च धर्मावश्यकविधानात् पीडयेदविध्युपयुक्तविषवत्। किं पुनरितो बाह्यात् तपसः फलमवाप्यत इत्याह—

बाह्यतपसः अनेकविधं फलम्

**भा०—अस्मात् षड्विधादपि बाह्यात् तपसः सङ्गत्याग-शरीरलाघवे-न्द्रियविजय-संयमरक्षण-कर्मनिर्जरा भवन्ति ॥ १९॥**

**टी०—अस्मात् षड्विधादपीति।** सङ्गत्यागः शरीरलाघवं इन्द्रियविजयः संयमरक्षणं कर्मनिर्जरा चेत्यनेकं फलमासाद्यते। तत्र निःसङ्गत्वं बाह्याभ्यन्तरोपधिष्वन-

१ 'क्षात्' इति ङ-पाठः। २ एतद्वर्णनार्थं विलोक्यतां योगशास्त्रस्य स्वोपज्ञं विवरणं (पृ. १७७)। ३ 'निवेष्टा' इति ङ-पाठः। ४ 'देतत्' इति ङ-पाठः। ५ 'पेक्षात्' इति ङ-पाठः। ६ 'नियमस्थस्य' इति ग-पाठः। ७ 'चोदनानि नुगता बाह्यं' इति च-पाठः।

टी०—विविक्तशय्यासनता नामेति। शय्याग्रहणेन प्रतिश्रय-फलक-संस्तारकग्रहणम्। आसनग्रहणेन पीठवृसिकादि विविक्तं गर्हितजनसम्पातरहितं अनलाबुसिरादि च। विविक्तं च तत् शय्यासनं च विविक्तशय्यासनं तद्भावो विविक्तशय्यासनता। नामशब्दो वाक्यालङ्कारार्थः अभिधानवचनो वा। अस्यैव विवरणमेकान्तेऽनाबाध इत्यादि, पर्यायकथनेन व्याख्यानम्। विविक्तम्—एकान्तम् अनाबाधम् असंसक्तं स्त्रीपशुपण्डकवर्जितमिति पर्यायाः। अथवा एकान्ते इति। 'अम गत्यादिषु' ( पा० धा० ४६६ ) "सर्वे गत्यर्था ज्ञानार्थाः" इति वच-नादमनम्—अन्तः श्रुतज्ञानं तद्व्यापार एवैको यत्र वाचना-प्रच्छनादिभिरुत्सर्पति तदेकान्तम्। अनाबाधे इति। आबाधः—शरीरोपघातः, स न विद्यते यत्र तदनाबाधम्। असंसक्ते इति सूक्ष्मस्थूलजन्तुरहिते। स्त्रीपशुपण्डकवर्जित इति। स्त्रियो—मानुष्यः पशवो—गो-महिष्य-जा-विकाद्याः पण्डका—नपुंसकानि। वस्तुतश्चारित्रोपघातं एवैष सर्वः॥

तदेवैकान्तादिगुणयुक्तं प्रतिश्रयादि दर्शयति—

**भा०—शून्यागार-देवकुल-सभा-पर्वतगुहादीनामन्यतमस्मिन् समाध्यर्थं संलीनता॥**

टी०—शून्यागारेत्यादिना। शून्यागारं शून्यगृहमदोषम्। देवकुलं दुर्गाद्यायतनादि। सभा यत्र प्राङ्मनुष्याः समवायमकुर्वत। सम्प्रति तु न तत्र समवयन्ति। पर्वतगुहा—पर्वतविवरं गिरिनगरादाविव लयनानि। आदिग्रहणादन्यदपि जीर्णोद्यानमध्यवर्ति मण्डपकादि परिगृह्यते। एषां यथोक्तानां अन्यतमस्थाने व्यवस्थानम्। किमर्थमिति चेत् समाध्यर्थम्। समाधिर्ज्ञान-दर्शन-चारित्र-तपो-वीर्यात्मकं पञ्चधा। समाधानं समाधिः ज्ञानादीनामपरिहाणिर्वृद्धिश्च। इत्थ-मियं संलीनता तपोविशेषः। इन्द्रियाणि संयम्य सस्वान्तानि क्रोधादिकषायकदम्बकं च विविक्तं शय्यासनमासेवमानस्य संलीनता भवति। प्राप्तेष्विन्द्रियविषयेषु भवितव्यमरक्त-द्विष्टेन कषायसंलीनता। क्रोधस्य तावदुदयनिरोधः, प्राप्तोदयस्य च वैफल्यापादनम्, एवं शेषाणामपि। तथा अकुशलमनोनिरोधः कुशलचित्तोदीरणं वा। एवं वागपि वाच्या। काय-व्यापारस्तु समुत्पन्नप्रयोजनस्य यत्नवतः संलीनताव्यपदेशमश्नुते। विना तु प्रयोजनेन निश्चलासनमेव श्रेयः। विविक्तचर्या तु भाष्यकृतैवोक्ता।

**भा०—कायक्लेशोऽनेकविधः। तद्यथा—स्थानवीरासनोत्कटुकासनैकपार्श्व-दण्डायतशयनातापनाप्रावृतादीनि।**

टी०—कायक्लेशोऽनेकविध इत्यादि। कायः—शरीरं तस्य क्लेशो—बाधनम्। कायात्म-नोरभेदः संसार्यवस्थायामन्योन्यानुगतत्वात् क्षीरोदकादेरिव, अतः कायबाधायामात्मनो बाधा-

१ 'एव एतत्सर्वं' इति च-पाठः। २ 'निरूपयति' इति ङ-च-पाठः। ३ 'मकुर्वत' इति च-पाठः। ४ 'दाहरणं वा' इति ङ-पाठः।

उत्तरपक्षः

जैनानां नास्त्येव मोक्ष इति। अत्रोच्यते—द्विविधः कर्मपरिपाकहेतुर्भगवद्भिरुक्तः—स्थितिक्षयस्तपश्च। तत्र प्रणिधानादिगमनमन्तरेण कर्मक्षयः स्थितिक्षयात्। यथोक्तं (अ० ८, सू० १५–१८)–"आदितस्तिसृणामन्तरायस्य च त्रिंशत् सागरोपमकोटीकोट्यः परा स्थितिः, सप्ततिर्मोहनीयस्य, नामगोत्रयोर्विंशतिः त्रयस्त्रिंशत् सागरोपमाण्यायुष्कस्य" इति च। स्फुटमिदं प्रणिधानमन्तरेण स्थितिक्षयात् कर्मविनाशः। तथा अपरं कर्मक्षपणार्थमर्हता दर्शितं तपो द्विविधम्–अभ्यन्तरं बाह्यं च। एकैकं चापि षड्भेदम्। लोके परसमयेषु च यत् प्रथितं तत् तपो भवति बाह्यम्। अभ्यन्तरमप्रथितं कुशलजनेनैव तु ग्राह्यं तथैतदागोपालाङ्गनादिजनप्रसिद्धमशुभकर्मक्षपणकारीति। रात्रावभोजनं चैकभोजनं निष्प्रतिक्रियत्वं च रोमनखधारणं वृक्षमूलवीरासनादीनि अज्ञातपिण्डपातोत्थादप्रतिबद्धमटनमामरणात्। अदर्शनधावनचीवरधारणभूकाष्ठशय्याश्च इत्येवमादयः कायस्य

तपोलक्षणम्

क्लेशा ननु प्रसह्यन्ते सर्वैरपि पाषण्डिभिः। अतस्तपस्तद् भवति सिद्धं दुःखसहनार्थितालक्षणं सुखेऽनादरस्तपः कष्टं देहत्यागो वीर्योद्यमौ च विषयेष्वसङ्गत्वं स्वात्मवशीकरणं च। प्रियधर्माणां च वीर्यसञ्जननं कायक्लेशस्य गुणाः प्रभावना ध्यानदार्ढ्यं च।

तपसः सार्थकता

ततश्चैवं प्रमाणयतो मायासूनवीयस्य 'आर्हतानामात्मसन्तापनाद्युपक्रमविशेषवैयर्थ्यम्' (पृ० २४२) इति लोकविरोधिनी प्रतिज्ञा। लोके त्वविगानतोऽनशनादितपः प्रसिद्धं कर्मक्षयकृत्, तदपह्नुवानस्य परिस्फुट एव लोकविरोधः। तथा मध्याह्नादुपर्योदनादि न भोक्तव्यं बुभुक्षितेनापि। रात्रौ च कालोपस्थायिभिक्षुदर्शननिमित्तगर्भपातादीनां च दर्शनान्न भोक्तव्यं इति। कालविशेषाश्रयणेन नीरुजस्यापि अशनप्रतिषेध उक्तो वृक्षमूलासेवित्वनिष्प्रतिक्रियत्वादि च कायक्लेशलक्षणं तपः स्वागमेऽभ्युपेतमिति। अतस्तपोऽकिञ्चित्करमित्यागमविरोधः। तथा सर्वज्ञप्रणीतागमानुसारिलोचमौण्ड्यातापनादिकः कायक्लेशः प्रतिविशिष्टेष्टफलः आगमचोदितत्वे सति कायक्लेशत्वाद् वृक्षमूलासेवित्वनिष्प्रतिक्रियादिवत्। अन्यजन्मकृतकर्मफलोपभोगित्वादिति यद्यन्यजन्मकृतं ददाति स्वतन्त्रमेवनोपभोक्तुः कश्चिद् व्यापारः, ततो द्रव्य-क्षेत्र-काल-भावनिरपेक्षत्वादसिद्धो हेतुः। नहि किञ्चिदपि द्रव्यादिनिरपेक्षं फलमिष्टं जैनेन्द्रैर्येन[1] कर्मणां विपाकोपशमावात्मचेष्टापूर्वकौ, न तु यादृच्छिकौ[3]। अतः कथं व्यर्थता लोचमौण्ड्यादिक्रियायास्तदुदयहेतुकायाः ?। यथोक्तम्—

"यदि भाग्यं फलहेतु–र्ननु विफलो हेतुनाऽप्यनुपदेशः।
न्याय्या पाचयति नृणा–मीहा पुण्यं हि सापेक्षम्॥ १॥—आर्या

---

१ 'दिकाय' इति ङ–पाठः। २ 'र्यतः कर्म' इति ङ–पाठः। ३ 'यादृच्छिकादिवत्' इति च–पाठः।

निष्वङ्गो–निर्ममता । प्रतिदिनमतिमात्राहारोपयोगात् प्रणीताहारोपयोगाच्च शरीरस्य गौरवं, ततश्च मासकल्पविहारित्वायोग्यता । तद्वर्जनात् तु शक्त्यानुरूपान्नाद्युपयोगाद् वा शरीरलाघवमुपजायते । ततश्चाप्रणीतशरीरस्योन्मादाद्युद्रेकादिन्द्रियविजयः । भक्तपानार्थमहिण्डमानस्य चर्याजनितजन्तूपरोधाभावात् संयमरक्षणं निःसङ्गादिगुणयोगादनशनादितपोऽनुतिष्ठतः शुभध्यानव्यवस्थितस्य कर्मनिर्जरणमपवर्गं भवतीति ॥ अत्र केचिन्मोहान्धतमसाच्छा(च्छ)मापोद्यन्ति–आतापनशिरोलुञ्चनानशनकायोत्सर्गादिकायक्लेशोपक्रमेण न कर्मविच्छेदो भवतीति प्रतिजानते । विकल्प्य चैनमर्थं युक्त्या प्रज्ञापयन्ति ।

कायक्लेशस्य विफलतासाधकः पूर्वपक्षः

दुःखं चेत् पूर्वकृतजं व्यर्थो यत्नो न वा क्षयः, कर्माभावो न वा मोक्षो वेति नाकृतबन्धः । यत् तदनेकेनोपक्रमेणातापनादिना प्रयोगेणौपक्रमिकं बुद्धिपूर्वकमारभमानं तापयतां दुःखमुपजायते तत् किं पूर्वकृतकर्महेतुकमाहोस्विदातापनाद्युपक्रमेणैव जनितमिति ? । तत्र यदि प्रथमो विकल्पः पूर्वकृतकर्महेतुकं तदातापनादिजं दुःखमेव तर्हि व्यर्थ एवातापनाद्युपक्रमः । पूर्वकृतकर्मविपाके ह्यातापनादिप्रयत्नस्यानीश्वरत्वदर्शनान्नारकादिष्विति । ततश्चार्हतानामात्मसन्तापनाद्युपक्रमविशेषवैयर्थ्यमन्यजन्मकृतकर्मफलोपभोगित्वान्नारकादिवदिति प्रयोगः । न च तत् पूर्वकृतकर्मजं दुःखं प्रयत्नानुविधायित्वात्प्रतर्कीभूमत्वादिति ।

अथ द्वितीयो विकल्पः—आतापनाद्युपक्रमजनितमेव दुःखं, न पूर्वकृतकर्महेतुकम्, एवं तर्हि न वा क्षयः, कर्मणां क्षयाभावो वा यत्नवैयर्थ्यं वेति वाशब्दाद् विकल्पः । नहि पूर्वकृतस्य पापस्य क्षयः सिद्ध्यति, तत्फलाप्रतिवेदनात्, अदत्तफलत्वादित्यर्थः । न तस्य कर्मणः परिक्षयः, अदत्तफलत्वात्, इतरादत्तफलकर्मवत् । अथ आतापनादिप्रयत्नोऽपि पूर्वकृतहेतुक एवाभ्युपेयते, न तर्हि कश्चित् पुरुषकारोऽस्तीति प्राप्तः कर्माभावः । असति च पुरुषकारे प्राक्तनस्याकृतत्वादभावः स्यात् कर्मणो यस्यायमातापनादिप्रयत्नं फलमभ्युपगम्यते तदपि प्राक्तनं कर्म न सिध्यति इत्यत्यन्ताभाव एव कर्मणां प्राप्तः । न वा मोक्षः । अथ योऽसौ पापस्य कर्मणो विपाकः सोऽपि कर्मैव प्रतिज्ञायते, अतस्तदप्यौपक्रमिकं कर्म प्राप्नोति, पापविपाकत्वात् । अतो न सिध्यति मोक्षः, पापक्षयासम्भवात् । न वा पापस्य कर्मणः कुशलो विपाक आतापनादिः समस्ति, कुशलस्यापि अकुशलविपाकप्रसङ्गादिति । स एव मोक्षाभावप्रसङ्गः । नैवार्हतानां पापस्य कर्मणः क्षयः सम्भाव्यते । असश्चेतिता कृतबन्धतः असञ्चेतितमपि प्राणातिपातादि कुर्वन्नेनसा युज्यते । लोकश्च व्याप्तः स्थावरजङ्गमजन्तुभिः सूक्ष्मैर्बादरैश्च । तत्र चावश्यम्भावी चङ्क्रमणादिक्रियासु जन्तुवधः। तथा अप्रकुर्वतोऽपि च पापं परेषामनुत्पादयन्तोऽपि च दुःखं कामक्रोधशोकभयादीनां निमित्तीभवन्तः पापेन युज्यन्ते। एवमसश्चेतितबन्धतोऽकृतबन्धतश्च

१ 'चर्याजन्तूप०' इति ङ-च-पाठः । २ 'भावीति' इति ङ-च-पाठः । ३ 'प्रपश्चाञ्' इति च-पाठः । ४ 'कर्मणः' इति ङ-पाठः ।

उत्तरपक्षः

जैनानां नास्त्येव मोक्ष इति। अत्रोच्यते—द्विविधः कर्मपरिपाकहेतुर्भगवद्भिरुक्तः—स्थितिक्षयस्तपश्च। तत्र प्रणिधानादिगमनमन्तरेण कर्मक्षयः स्थितिक्षयात्। यथोक्तं ( अ० ८, सू० १५–१८)–"आदितस्तिसृणामन्तरायस्य च त्रिंशत् सागरोपमकोटीकोट्यः परा स्थितिः, सप्ततिर्मोहनीयस्य, नामगोत्रयोर्विंशतिः त्रयस्त्रिंशत् सागरोपमाण्यायुष्कस्य" इति च। स्फुटमिदं प्रणिधानमन्तरेण स्थितिक्षयात् कर्मविनाशः। तथा अपरं कर्मक्षपणार्थमर्हता दर्शितं तपो द्विविधम्–अभ्यन्तरं बाह्यं च। एकैकं चापि षड्भेदम्। लोके परसमयेषु च यत् प्रथितं तत् तपो भवति बाह्यम्। अभ्यन्तरमप्रथितं कुशलजनेनैव तु ग्राह्यं तथैतदागोपालाङ्गनादिजनप्रसिद्धमशुभकर्मक्षपणकारीति। रात्रावभोजनं चैकभोजनं निष्प्रतिक्रियत्वं च रोमनखधारणं वृक्षमूलवीरासनादीनि अज्ञातपिण्डपातोत्थादप्रतिबद्धमटनमामरणात्। अदर्शनधावनचीवरधारणभूकाष्ठशय्याश्च इत्येवमादयः कायस्य

तपोलक्षणम्

क्लेशा ननु प्रसह्यन्ते सर्वैरपि पापण्डिभिः। अतस्तपस्तद् भवति सिद्धं दुःखसहनार्थितालक्षणं सुखेऽनादरस्तपः कष्टं देहत्यागो वीर्योद्यमौ च विषयेष्वसङ्गत्वं स्वात्मवशीकरणं च। प्रियधर्माणां च वीर्यसञ्जननं कायक्लेशस्य गुणाः प्रभावना ध्यानदार्ढ्यं च।

तपसः सार्थकता

ततश्चैवं प्रमाणयतो मायासूनवीयस्य 'आर्हतानामात्मसन्तापनाद्युपक्रमविशेषवैयर्थ्यम्' (पृ० २४२) इति लोकविरोधिनी प्रतिज्ञा। लोके त्वविगानतोऽनशनादितपः प्रसिद्धं कर्मक्षयकृत्, तदपह्नुवानस्य परिस्फुट एव लोकविरोधः। तथा मध्याह्नादुपर्योदनादि न भोक्तव्यं बुभुक्षितेनापि। रात्रौ च कालोपस्थायिभिक्षुदर्शननिमित्तगर्भपातादीनां च दर्शनान्न भोक्तव्यं इति। कालविशेषाश्रयणेन नीरुजस्यापि अशनप्रतिषेधः उक्तो वृक्षमूलासेवित्वनिष्प्रतिक्रियत्वादि च कायक्लेशलक्षणं तपः स्वागमेऽभ्युपेतमिति। अतस्तपोऽकिञ्चित्करमित्यागमविरोधः। तथा सर्वज्ञप्रणीतागमानुसारिलोचमौण्ड्यातापनादिकः कायक्लेशः प्रतिविशिष्टेष्टफलः आगमचोदितत्वे सति कायक्लेशत्वाद् वृक्षमूलासेवित्वनिष्प्रतिक्रियादिवत्। अन्यजन्मकृतकर्मफलोपभोगित्वादिति यद्यन्यजन्मकृतं ददाति स्वतन्त्रमेवनोपभोक्तुः कश्चिद् व्यापारः, ततो द्रव्य-क्षेत्र-काल-भावनिरपेक्षत्वादसिद्धो हेतुः। नहि किञ्चिदपि द्रव्यादिनिरपेक्षं फलमिष्टं जैनेन्द्रैर्येन कर्मणां विपाकोपशमावात्मचेष्टापूर्वकौ, न तु यादृच्छिकौ। अतः कथं व्यर्थता लोचमौण्ड्यादिक्रियायास्तदुदयहेतुकायाः १। यथोक्तम्—

> "यदि भाग्यं फलहेतु–र्ननु विफलो हेतुनाऽप्यनुपदेशः।
> न्याय्या पाचयति नृणा–मीहा पुण्यं हि सापेक्षम्॥ १॥—आर्या

---

१ 'दिकाय' इति ङ–पाठः। २ 'यतः कर्म' इति ङ–पाठः। ३ 'यादृच्छिकादिवत्' इति च–पाठः।

निष्पङ्गो-निर्ममता । प्रतिदिनमतिमात्राहारोपभोगात् प्रणीताहारोपभोगाच्च शरीरस्य गौरवं, ततश्च मासकल्पविहारित्वायोग्यता । तदनशनात् तु अल्पान्नप्रणीतानाहारोपभोगाद् वा शरीरलाघवमुपजायते । ततश्चाप्रणीतशरीरस्योन्मादानुद्रेकादिन्द्रियविजयः । भक्तपानार्थमहिण्डमानस्य चर्याजनितजन्तूपरोधाभावात् संयमरक्षणं निःसङ्गादिगुणयोगादनशनादिकं अनुतिष्ठतः शुभध्यानव्यवस्थितस्य कर्मनिर्जरणमवन्ध्यं भवतीति ॥ अत्र केचिन्मोहान्धतमसव्याप्ता(क्ष)श्चोदयन्ति–आतापनशिरोलुञ्चनानशनकायोत्सर्गादिकायक्लेशोपक्रमेण न कर्मविच्छेदो भवतीति प्रतिजानते । विकल्प्य चैनमर्थं युक्त्या प्रसाधयन्ति ।

कायक्लेशस्य विफलतासाधकः पूर्वपक्षः

दुःखं चेत् पूर्वकृतजं व्यर्थो यत्नो न वा क्षयः, कर्माभावो न वा मोक्षो वेति नाकृतद्वन्द्वः । यत् तदनेकेनोपक्रमेणातापनादिना प्रयोगेणौपक्रमिकं बुद्धिपूर्वकमात्मानं तापयतां दुःखमुपजायते तत् किं पूर्वकृतकर्महेतुकमाहोस्विदातापनाद्युपक्रमेणैव जनितमिति ? । तत्र यदि प्रथमो विकल्पः पूर्वकृतकर्महेतुकं तदातापनादिजं दुःखमेव तर्हि व्यर्थ एवातापनाद्युपक्रमः । पूर्वकृतकर्मविपाके ह्यातापनादिप्रयत्नस्यानीश्वरत्वदर्शनान्नारकादिष्विति । ततश्चार्हतानामात्मसन्तापनाद्युपक्रमविशेषवैयर्थ्यमन्यजन्मकृतकर्मफलोपभोगित्वान्नारकादिवदिति प्रयोगः । न च तत् पूर्वकृतकर्मजं दुःखं प्रयत्नानुविधायित्वात्तर्कीभ्रमकृतवदिति ।

अथ द्वितीयो विकल्पः—आतापनाद्युपक्रमजनितमेव दुःखं, न पूर्वकृतकर्महेतुकम्, एवं तर्हि न वा क्षयः, कर्मणां क्षयाभावो वा यत्नवैयर्थ्यं वेति वाशब्दाद् विकल्पः । नहि पूर्वकृतस्य पापस्य क्षयः सिद्ध्यति, तत्फलाप्रतिवेदनात्, अदत्तफलत्वादित्यर्थः । न तस्य कर्मणः परिक्षयः, अदत्तफलत्वात्, इतरादत्तफलकर्मवत् । अथ आतापनादिप्रयत्नोऽपि पूर्वकृतहेतुक एवाभ्युपेयते, न तर्हि कश्चित् पुरुषकारोऽस्तीति प्राप्तः कर्माभावः । असति च पुरुषकारे प्राक्तनस्याकृतत्वादभावः स्यात् कर्मणो यस्यायमातापनादिप्रयत्नं फलमभ्युपगम्यते तदपि प्राक्तनं कर्म न सिध्यति इत्यत्यन्ताभाव एव कर्मणां प्राप्तः । न वा मोक्षः । अथ योऽसौ पापस्य कर्मणो विपाकः सोऽपि कर्मैव प्रतिज्ञायते, अतस्तदप्यौपक्रमिकं कर्म प्राप्नोति, पापविपाकत्वात् । अतो न सिध्यति मोक्षः, पापक्षयासम्भवात् । न वा पापस्य कर्मणः कुशलो विपाक आतापनादिः समस्ति, कुशलस्यापि अकुशलविपाकप्रसङ्गादिति । स एव मोक्षाभावप्रसङ्गः । नैवार्हतानां पापस्य कर्मणः क्षयः सम्भाव्यते । असश्चेतिता कृतबन्धतः असश्चेतितमपि प्राणातिपातादि कुर्वन्नेनसा युज्यते । लोकश्च व्याप्तः स्थावरजङ्गमजन्तुभिः सूक्ष्मैर्बादरैश्च । तत्र चावश्यम्भावी चङ्क्रमणादिक्रियासु जन्तुवधः । तथा अप्रकुर्वतोऽपि च पापं परेषामनुत्पादयन्तोऽपि च दुःखं कामक्रोधशोकभयादीनां निमित्तीभवन्तः पापेन युज्यन्ते । एवमसश्चेतितबन्धतोऽकृतबन्धतश्च

१ 'चर्याजन्तूप०' इति ङ-च-पाठः । २ 'भावीति' इति ङ-च-पाठः । ३ 'प्रयत्नानु' इति च-पाठः । ४ 'कर्मणः' इति ङ-पाठः ।

उत्तरपक्षः

जैनानां नास्त्येव मोक्ष इति। अत्रोच्यते—द्विविधः कर्मपरिपाकहेतुर्भगवद्भिरुक्तः—स्थितिक्षयस्तपश्च। तत्र प्रणिधानादिगमनमन्तरेण कर्मक्षयः स्थितिक्षयात्। यथोक्तं (अ० ८, सू० १५–१८)–"आदितस्तिसृणामन्तरायस्य च त्रिंशत् सागरोपमकोटीकोट्यः परा स्थितिः, सप्ततिर्मोहनीयस्य, नामगोत्रयोर्विंशतिः त्रयस्त्रिंशत् सागरोपमाण्यायुष्कस्य" इति च। स्फुटमिदं प्रणिधान्मन्तरेण स्थितिक्षयात् कर्मविनाशः। तथा अपरं कर्मक्षपणार्थमर्हता दर्शितं तपो द्विविधम्–अभ्यन्तरं बाह्यं च। एकैकं चापि षड्भेदम्। लोके परसमयेषु च यत् प्रथितं तत् तपो भवति बाह्यम्। अभ्यन्तरमप्रथितं कुशलजनेनैव तु ग्राह्यं तथैतदागोपालाङ्गनादिजनप्रसिद्धमशुभकर्मक्षपणकारीति। रात्रावभोजनं चैकभोजनं निष्प्रतिक्रियत्वं च रोमनखधारणं वृक्षमूलवीरासनादीनि अज्ञातपिण्डपातोत्थादप्रतिबद्धमटनमामरणात्। अदर्शनधावनचीवरधारणभूकाष्ठशय्याश्च इत्येवमादयः कायस्य

तपोलक्षणम्

क्लेशा ननु प्रसह्यन्ते सर्वैरपि पाषण्डिभिः। अतस्तपस्तद् भवति सिद्धं दुःखसहनार्थितालक्षणं सुखेऽनादरस्तपः कष्टं देहत्यागो वीर्योद्यमौ च विषयेष्वसङ्गत्वं स्वात्मवशीकरणं च। प्रियधर्माणां च वीर्यसञ्जननं कायक्लेशस्य गुणाः प्रभावना ध्यानदार्ढ्यं च।

तपसः सार्थकता

ततश्चैवं प्रमाणयतो मायासूनवीयस्य 'आर्हतानामात्मसन्तापनाद्युपक्रमविशेषवैयर्थ्यम्' (पृ० २४२) इति लोकविरोधिनी प्रतिज्ञा। लोके त्वविगानतोऽनशनादितपः प्रसिद्धं कर्मक्षयकृत्, तदपह्नुवानस्य परिस्फुट एव लोकविरोधः। तथा मध्याह्नादुपर्योदनादि न भोक्तव्यं बुभुक्षितेनापि। रात्रौ च कालोपस्थायिभिक्षुदर्शननिमित्तगर्भपातादीनां च दर्शनान्न भोक्तव्यं इति। कालविशेषाश्रयणेन नीरुजस्यापि अशनप्रतिषेध उक्तो वृक्षमूलासेवित्वनिष्प्रतिक्रियत्वादि च कायक्लेशलक्षणं तपः स्वागमेऽभ्युपेतमिति। अतस्तपोऽकिञ्चित्करमित्यागमविरोधः। तथा सर्वज्ञप्रणीतागमानुसारिलोचमौण्ड्यातापनादिकः कायक्लेशः प्रतिविशिष्टेष्टफलः आगमचोदितत्वे सति कायक्लेशत्वाद् वृक्षमूलासेवित्वनिष्प्रतिक्रियादिवत्। अन्यजन्मकृतकर्मफलोपभोगित्वादिति यद्यन्यजन्मकृतं ददाति स्वतन्त्रसेवनोपभोक्तुः कश्चिद् व्यापारः, ततो द्रव्य-क्षेत्र-काल-भावनिरपेक्षत्वादसिद्धो हेतुः। नहि किञ्चिदपि द्रव्यादिनिरपेक्षं फलमिष्टं जैनेन्द्रैर्येन कर्मणां विपाकोपशमावात्मचेष्टापूर्वकौ, न तु यादृच्छिकौ। अतः कथं व्यर्थता लोचमौण्ड्यादिक्रियायास्तदुदयहेतुकायाः ?। यथोक्तम्—

> "यदि भाग्यं फलहेतु–र्ननु विफलो हेतुनाऽप्यनुपदेशः।
> न्याय्या पाचयति नृणा–मीहा पुण्यं हि सापेक्षम्॥ १॥—आर्या

---

१ 'दिकाय' इति ङ–पाठः। २ 'यतः कर्म' इति ङ–पाठः। ३ 'यादृच्छिकादिवत्' इति च–पाठः।

उभयोपशमौ युक्तौ, सापेक्षौ कर्मणोः शुभाशुभयोः ।
स्याद् विश्लेषः सर्वं, निरपेक्षं कर्म फलदानः ॥ २ ॥—आर्या
तस्मादवश्यभाव्या, अन्यथाऽस्ति प्रयोगतः सिद्धाः ।
न त्विहं नौभिर्भवति, कदाचिदतुलं सलिलमन्यैः ॥ ३ ॥"—आर्या

तस्मान्मुमुक्षोः श्राद्धस्य प्रवचनानुसारिणः सम्यग्वीर्येण कर्मोदयमाविर्भावयतो न व्यर्थ आतापनादिक्रियाकलापः कर्मनिर्जरणफलः ॥ अथ न स्वतन्त्रमेव फलं ददाति कर्म, न तर्हि व्यर्थमातापनादि तपः पूर्वकृतं तद् भवति कर्म । न च व्यर्थो यत्नः, पुरुषप्रयत्नेन विपच्यमानत्वात् । ततश्च नारकदृष्टान्तः साध्यशून्यः । नारकीयमपि कर्म [अन्य]जन्मान्तरोपात्तं नरकभवापेक्षमुदयति । स्वपरिणामापेक्षं च न व्यर्थं, निर्जराफलत्वात् । एवं चातापनादिप्रयत्नस्यानीश्वरत्वमसिद्धं, कर्मोपगमहेतुत्वात् । यथोक्तं ( पृ० २४२ ) 'न च तत्पूर्वकृतकर्मजं दुःखं प्रयत्नानुविधायित्वात्' इति, तदप्यपेशलम् । यद् यत् प्रयत्नानुविधायि तत् तत् पूर्वकृतकर्मजं न भवति, यथा नर्तकीभ्रूभङ्गकर्मेति । खदिरशलाकाभीतः किल नदयज्ञनाकुलः सुगतः प्रयत्नवानपि पादे विद्धः शलाकया । तच पादवेधनकर्म प्रयत्नानुविधायि भवति पूर्वकृतकर्मजं चेत्यनेकान्तः ।

" इत एकनवते कल्पे, शक्त्या मे पुरुषो हतः ।
तस्य कर्मविपाकेन, पादे विद्धोऽस्मि भिक्षवः ! ॥ १ ॥"

इति तत्सिद्धान्तः । नर्तकीभ्रूभङ्गोऽपि पूर्वकृतकर्म एव । भ्रूभङ्ग इति भ्रुवोर्विन्यासः–औदारिकशरीरावयवः । तच्चौदारिकं पूर्वकृतकर्मजं क्रियाक्रियावतोरभेदादिति साधनशून्यो दृष्टान्तः । न च कर्म क्रियैवार्हतानाम् । कर्म हि पौद्गलिकमिष्टं तच्च पूर्वमिति । अथातापनाद्युपक्रमजनितमेव तद् दुःखं, न पूर्वकृतकर्मजं, ततः कर्मक्षयाभाव इति यदुक्तं (पृ०२४२,पं०१५) तदसम्बध्यकमानेमेव । यस्मात् पूर्वकृतमेव कर्म द्रव्याद्यपेक्षमुदेति, न पुनरातापनादिक्रियया तदपूर्वमेवोत्पद्यत इत्यज्ञातजैनसिद्धान्तेन वैयाघ्रैयादि कल्पितं मूढेनेति । तच्चाशङ्कितमातापनादिप्रयत्नोऽपि पूर्वकर्मकृत एवेति, ततश्च पुरुषकाराभाव इत्येतदप्यज्ञानविजृम्भितम् । जीवकर्मणोरनादिसम्बन्धः । आत्मा च संसारी सकर्मकः कर्ता । क्रियत इति च कर्म, वीर्यान्तरायक्षयोपशमाच्च । वीर्य–प्रयत्नविशेषः आत्मनः करणजन्यः । करणानि च कर्तृव्यापारापेक्षाणि प्रयत्नमारभन्त इति । ईदृशि प्रक्रियायां कथं पुरुषकाराभावश्चोत्पद्यते ? । तथा अपरमुक्तमज्ञेन (पृ० २४२,पं० २१) यदि पापस्य कर्मणो यो विपाकः सोऽपि कर्म, ततो मोक्षाभावः, पापक्षयासम्भवात् । यस्मात् किल तदप्यौपक्रमिकं कर्म तस्याप्यपरो विपाकस्तस्याप्यपर इति कुतो मोक्षः ? । अत्राप्यज्ञानमेवापराध्यति । कर्मपुद्गलानां विपाकोऽनुभावो रसविशेषः । स कर्मैव गुणगुणिनोः कथञ्चिदैक्यात् । तच्च कर्म

१ ' नन्विह्वानोर्मी भवति ' इति च–पाठः । २ ' प्रवृत्तेः ' इति ङ–च–पाठः । ३ ' मानकमेव ' इति ज–पाठः ।

पकं परिशटति जीवप्रदेशेभ्यः, न हि ततोऽन्यत् कर्मोपादानमस्ति, कथं मोक्षाभावः
चायं नियमः–पापस्य कर्मणः पापेनैव विपाकेन भवितव्यं कुशलस्य च कुशलेन
स्थित्यनुभावबन्धयोर्विपर्यासवचनात् । यथोक्तम्—

" मूलप्रकृत्यभिन्नाः, सङ्क्रमयति गुणत उत्तराः प्रकृतीः ।
न त्वात्माऽमूर्तत्वा–दध्यवसानप्रयोगेण ॥ १ ॥—आर्या
शिथिलयति दृढं बन्धं, शिथिलं द्रढयति च कर्म ननु जीवः ।
उत्कृष्टाश्च जघन्या, स्थितिर्विपर्यासयति चापि ॥ २ ॥–आर्या
तारीकरणं ताम्र–स्य शोषणस्तेमने मृदः क्रमशः ।
वृक्षपरिपाचनं वा, काले तेपूपदृष्टान्ताः ॥ ३ ॥"–आर्या

सङ्क्रमस्य तारीकरणं, स्थितेः शोषणस्तेमने, वृक्षपरिपाचनमित्युदीरणाः ।

" अनुभावांश्च विपर्या–सयति तथैव प्रयोगतो जीवः ।
तीव्रत्वमन्दत्वावस्थासु प्रकृतिष्वभिन्नासु ॥ ४ ॥–आर्या
यद्वद् वा मन्दं सत्क्षारी–क्रियते हरिद्रया चूर्णम् ।
वातातपादिमिश्र, क्षारं मन्दीक्रियेत यथा ॥ ५ ॥"–आर्या

इति । यदप्युक्तं ( पृ० २४२ ) असञ्चेतिता कृतबन्धतो मोक्षाभावः इति तदप्ययुक्त
यदि सञ्चेतितमेव शुभमशुभं वा बध्यते नासञ्चेतितं, एवं तर्हि न कश्चिन्मिथ्यादृष्टिरि
न हि साङ्ख्यः काणभुजो वा[4] द्विजादिर्वा स्वं दर्शनं मिथ्येति सञ्चेत्य प्रतिपद्यते । सर्वो
हि स्वं दर्शनं निश्चितमेव सम्यगित्यभ्युपगच्छति, न मिथ्येति सञ्चेतयति । अथैवमाशङ्क्य
विपरीताभिनिवेशात् तस्य मिथ्यादर्शनम्। तदेवं सति रज्जुबुद्ध्या छिन्दतः सर्पमवश्यम्भावि
हिंसाप्राप्तिः, विपरीताभिनिवेशात् संसारमोचकयाज्ञिकगलाकर्तप्रभृतीनां च निघ्नतां धर्मो
मेवेति पापमिति वा सञ्चेतनान्न पापं स्यात् । न हि ते अपुण्यमेव सञ्चेतयन्ति । अथ य
तथा वा प्राणवधे विहिते पापं भवति, ततः सिद्धैव हिंसा नावश्यम् । यदि प्राणी च भव
प्राणिसंज्ञा च भवति वधकचित्तं वाऽस्योत्पद्यते वधितश्च भवति ततो हिंसेति । अथ ते हिं
मित्येवं सञ्चेतयन्ति संसारमोचकादयो भिक्षुरपि तर्हि सञ्चेतयितुं नियमेन जीववधो भवत्
रम्भ इति ।

यथोक्तम्—

" भूकाष्ठाग्न्यपगोमय–वनवायुवनस्पतीन् पशून् प्रेष्यान् ।
मत्वाऽऽरभमाणस्य, प्राणव्यपरोपणं नियतम् ॥ १ ॥—आर्या

---

१ ' निगमः ' इति ङ–पाठः । २ ' सानाप्रयोगेन ' इति ङ–पाठः । ३ ' न तु ' इति ङ–पाठः ।
४ ' वा द्विजो वा ' इत्यधिको ङ–पाठः ।

उभयोपशमौ शुक्लौ, सापेक्षौ कर्मणोः शुभाशुभयोः ।
स्याद् विश्लेषा सर्वं, निरपेक्षं कर्म कारयतः ॥ २ ॥—आर्या
तस्मादवश्यभाजा, अभ्यर्थास्ते प्रयोगतः सिद्धाः ।
न हि वहं नौभिर्भवति, कदाचिदनुन्नं सलिलमन्यैः ॥ ३ ॥"—आर्या

तस्मान्मुमुक्षोः श्राद्धस्य प्रवचनानुसारिप्रवृत्तो स्ववीर्येण कर्मोदयमाविर्भावयतो न व्यर्थ आतापनादिक्रियाकलापः कर्मनिर्जरणफलः ॥ अथ न स्वजन्मन्येव फलं ददाति कर्म, न तर्हि व्यर्थमातापनादि तपः पूर्वकृतं तद् भवति कर्म । न च व्यर्थो यत्नः, पुरुषप्रयत्नेन विपच्यमानत्वात् । ततश्च नारकदृष्टान्तः साध्यशून्यः । नारकीयमपि कर्म [अन्य]जन्मान्तरोपात्तं नरकभवापेक्षमुदयति । स्वपरिणामापेक्षं च न व्यर्थं, निर्जराफलत्वात् । एवं चातापनादिप्रयत्न-स्यानीश्वरत्वमसिद्धं, कर्मापगमहेतुत्वात् । यथोक्तं ( पृ० २४२ ) 'न च तत्पूर्वकृतकर्मजं दुःखं प्रयत्नानुविधायित्वात्' इति, तदप्यपेशलम् । यद् यत् प्रयत्नानुविधायि तत् तत् पूर्वकृतकर्मजं न भवति, यथा नर्तकीभ्रूभङ्गकर्मेति । खदिरशलाकाभीतः किल नष्टप्रनाकुलः सुगतः प्रयत्नवानपि पादे विद्धः शलाकया । तच्च पादवेधनकर्म प्रयत्नानुविधायि भवति पूर्वकृतकर्मजं चेत्यनेकान्तः ।

"इत एकनवते कल्पे, शक्तया मे पुरुषो हतः ।
तस्य कर्मविपाकेन, पादे विद्धोऽस्मि भिक्षवः ! ॥ १ ॥"

इति तत्सिद्धान्तः । नर्तकीभ्रूभङ्गोऽपि पूर्वकृतकर्म एव । भ्रूभङ्ग इति भ्रुवोर्विन्यासः—औदारिक-शरीरावयवः । तच्चौदारिकं पूर्वकृतकर्मजं क्रियाक्रियावतोरभेदादिति साधनशून्यो दृष्टान्तः । न च कर्म क्रियैवार्हतानाम् । कर्म हि पौद्गलिकमिष्टं तच्च पूर्वमिति । अथातापनाद्युपक्रमजनितमेव तद् दुःखं, न पूर्वकृतकर्मजं, ततः कर्मक्षयाभाव इति यदुक्तं (पृ०२४२,पं०१५) तदसम्बध्यकमा-नमेव । यस्मात् पूर्वकृतमेव कर्म द्रव्याद्यपेक्षमुदेति, न पुनरातापनादिक्रियया तदपूर्वमेवोत्पद्यत इत्यज्ञातजैनसिद्धान्तेन वैयावृत्त्यादि कल्पितं मूढेनेति । तच्चाशङ्कितमातापनादिप्रयत्नोऽपि पूर्व-कर्मकृत एवेति, ततश्च पुरुषकाराभाव इत्येतदप्यज्ञानविजृम्भितम् । जीवकर्मणोरनादिसम्बन्धः । आत्मा च संसारी सकर्मकः कर्ता । क्रियत इति च कर्म, वीर्यान्तरायक्षयोपशमाच्च । वीर्य—प्रय-त्नविशेषः आत्मनः करणजन्यः । करणानि च कर्तृव्यापारापेक्षाणि प्रयत्नमारभन्त इति । ईदृशि प्रक्रियायां कथं पुरुषकाराभावश्चोत्पद्यते ? । तथा अपरमुक्तमज्ञेन (पृ० २४२,पं० २१) यदि पापस्य कर्मणो यो विपाकः सोऽपि कर्म, ततो मोक्षाभावः, पापक्षयासम्भवात् । यस्मात् किल तदप्यौप-क्रमिकं कर्म तस्याप्यपरो विपाकस्तस्याप्यपर इति कुतो मोक्षः ? । अत्राप्यज्ञानमेवापराध्यति । कर्मपुद्गलानां विपाकोऽनुभावो रसविशेषः । स कर्मैव गुणगुणिनोः कथञ्चिदैक्यात् । तच्च कर्म

१ 'नन्विहानोर्मी भवति' इति च-पाठः । २ 'प्रवृत्तेः' इति ङ-च-पाठः । ३ 'मानकमेव' इति ज-पाठः ।

अपि वा प्रमत्तमाह–हिंसकमर्हन्न वक्रजडकरणम् ।
सूत्रोदितेन मार्गे–ण विहारश्चाप्रमादाख्यः ॥ ४ ॥–आर्या
ज्ञानस्य हि सगुणो यत्, स्वाध्यायशुभाय कर्मणे यतते ।
नोऽसाध्यं साधयितुं, प्रवर्तते ज्ञानवान् पुरुषः ॥ ५ ॥–आर्या
ज्ञानी कर्मक्षपणा–र्थमुत्थितो नो शठः प्रयतमानः ।
सूत्रोदितेन विधिना, न बन्धकः सत्त्वमरणेऽपि ॥ ६ ॥–आर्या
स्यान्नाम यदा बन्ध–श्छद्मस्थस्य प्रमाददोषेण ।
तस्य प्रायश्चित्तं, दशविधमातिष्ठति तदा सः ॥ ७ ॥–आर्या
उपपादिताश्च कायाः, सर्वे मोक्षश्च सर्वतन्त्रेष्टः ।
यदि चैवं नाहिंसा, स्यात् तस्मान्मोक्ष एव ननु ॥ ८ ॥–आर्या
ब्रुवते परामहिंसां, सर्वे धर्मप्रवादिनो लोके ।
तिष्ठति भिक्षावृत्तौ, ज्ञानरतौ सा त्वनारम्भे ॥ ९ ॥"–आर्या

तस्मादसञ्चेतितोऽपि कर्मबन्धः समस्ति जीवव्याप्तेऽपि लोकेऽस्त्यहिंसकः साधुरिति । यथोक्तमनुत्पादयन्तोऽपि दुःखं परस्य कामक्रोधादीनां निमित्ततां प्रतिपद्यमानाः काययोग-द्वारेणैव सायुज्यन्ते । यतः सर्वाङ्गोपाङ्गसुन्दरो मुनिर्योषितां कामाग्निमुद्दीपयति कस्यचिच्च तद्दर्शनात् प्रद्वेषः । यदि च बाह्यनिमित्तमात्राद् बन्धः, ततो मृगोऽपि वधहेतुरिति स्यात्, न तस्यापि वधनिमित्तत्वाद् बन्धः । तथा जैनैश्चोद्यते–नैमित्तिकं पापमनिच्छतो मायासूनवीयस्य मांसभक्षणमप्यदोषं स्यात् । एवं चोदित आह—यदि त्रिविधमाशयं नोत्पादयति । तद्यथा—मांसरसगृद्धाशयं तत्पर्येष्ट्याशयं वध्ये नैर्घृण्याशयं चेत्येतदप्यज्ञातपरसमयस्य फल्गु वचनम् । यतो यावदात्माधिष्ठितः कायस्तावदप्रमत्तस्य आगमानुसारेण यतमानस्य नैवास्त्येनसा योगः । यथोक्तम्—

"यो रक्तो द्विष्टो वा, मूढो वा यं प्रयोगमाचरति ।
तस्माद्धि तदनुरूपो, बन्धस्तस्यार्हता प्रोक्तः ॥ १ ॥"—आर्या

यदा त्वचेतनः कायोपविद्धः सत्त्वेन तदाऽप्युत्सृष्टस्त्रिविधस्त्रिविधेनेति न तज्जनितः कर्मबन्धोऽस्ति । एतेन काष्ठादीनां पुण्यपापप्रसङ्ग उक्तो वेदितव्यः । यथोक्तमार्षे—"यं हि धर्मपुण्यपापक्रियायामिच्छतः क्रुद्धस्येव पुण्यार्थिनो निर्ग्रन्थशिरोलुञ्चने पापप्रसङ्गात्" इत्यादि सर्वं प्रतिहतं बोद्धव्यम् । न च दृष्टान्तः सर्वैर्विकल्पैरुपनेयः, अनुमानाभावप्रसङ्गादिति । यथोक्तम्—"मृगस्यापि वधनिमित्तकर्मबन्धः" इति । तत्राप्युक्तमेव पूर्वं इति चानुक्तोप-

१ 'कस्यचिच्च' इति ग-पाठः । २ 'पर्येष्याशयं' इति ङ-पाठः । ३ 'चेति तदपि' इति ङ-पाठः ।

आरम्भे सञ्चेतन—मस्त्येतेषां च न तु निर्ग्रन्थानाम् ।
इति तदपि तुल्यमुभये—षामप्यन्याभिसन्धित्वात् ॥ २ ॥—आर्या

सञ्चेतयहिंसकोऽतिनृ—शंसस्तेषां तथा तु नारम्भी ।
बन्धोऽपि तदनुरूपो, बन्धविशेषो हि भावशात् ॥ ३ ॥"—आर्या

अज्ञानत्वमन्यमानो वा यः शोणितमुत्पादयति भावागूनोत्सस्यानन्तर्यकमपुंद्ववृत्ति-त्वान्न समस्ति । न च भक्तिशून्यस्य बुद्धोऽयमिति तत्त्वतोऽनुद्धिरस्ति । यस्य नास्ति भक्तिः स उपासकः कथमुत्पादयेद् बुद्धस्यासृक् ? । न च संज्ञपितस्याभक्षयतश्च सञ्चेतनमिष्टम् । नो चेद् धात्वारम्भेऽपि सर्वपापराशिडनां भवेद् दोषः । यत् ते विदन्ति निर्ग्रन्थानां जीवाः क्लिमे इति । आनन्तर्यकमेवं मातापित्रर्हतां वधेऽर्थे स्तूपभिदश्च तथैव चीवर्याण्यनृतायक्रमलानि यथोक्तेन चतुष्टयसंयोगेनेति । बालस्य पांसुमुष्टी राज्यं फलित इति याऽस्ति बुद्धोक्तिः । न च पांसुष्व-न्नत्वं व्यक्तम् । सञ्चेतयन्ति पांसून् रन्धनायारम्भोपदेशित्वाच्च बुद्धस्य हिंसकत्वं प्राप्तं, न तु चेतयति स जन्तून् काष्ठाद्याश्रितकुन्थूदेहिकापिपीलिकादीन् नो चेन्न भवेत् स सर्वज्ञः यथसञ्चे-तितः कर्मबन्धो न भवति, ततः सर्व एव प्रयत्नो व्यर्थः स्यात् ।

"ईर्याभाषादानो—त्सर्गस्थानशयनाशनादिषु च ।
यतनं व्यर्थं सर्वं, प्रतिलिख्यसमीक्ष्यकरणादि ॥ १ ॥—आर्या

पात्रपरीक्षणमुदक—स्रावणमुपसम्पदादिनियमाश्च ।
भावप्रामाण्येन तु, बुद्धस्य भवन्त्यपार्थानि ॥ २ ॥—आर्या

शुभबुद्ध्या शुभफलदं, यदि च शुभं कर्म तत् समारब्धम् ।
शुभबुद्ध्या विप्राणां, पश्वादिवधे कथमधर्मः? ॥ ३ ॥ "—आर्या

यदप्युक्तं गन्धसमुद्गकवज्जन्तूनामापूर्णो लोकः । तदत्राहिंसकत्वं दुर्लभमिति । उक्तं च—

"जीवव्याप्ते लोके, यतेरहिंसा कथं भवेत् कृत्स्ना ? ।
उदधिमवगाहमानः, कथं न सङ्घट्टयेत् सलिलम् ? ॥ १ ॥—आर्या

अत्रोच्यते—

"इत्येष विप्रलापो, यत्कायाः सूक्ष्मपरिणताः पञ्च ।
अप्रतिघातिन इष्टाः, स्कन्धप्रतिभेद उक्तश्च ॥ २ ॥—आर्या
अपि चाचित्ताः कायाः, प्रचुराः सन्तीह जीवनिर्मुक्ताः ।
स्याद् येषु यतेर्वृत्ति-र्निश्वासप्रभृतिचेष्टासु ॥ ३ ॥—आर्या

---

१ 'भित्तिवेश्मसन्धित्वात्' इति ग-पाठः । २ 'बुद्धिबुद्धत्वात्' इति ङ-पाठः । ३ 'चीयोस्तू' इति ग-पाठः । ४ 'वीर्याण्य' इति ग-पाठः । ५ 'श्रितं उद्देहिका' इति ङ-पाठः ।

अपि वा प्रमत्तमाह–र्हिसकमर्हन्न वक्रजडकरणम् ।
सूत्रोदितेन मार्गे–ण विहारश्चाप्रमादाख्यः ॥ ४ ॥–आर्या
ज्ञानस्य हि सगुणो यत्, स्वाध्यायशुभाय कर्मणे यतते ।
नोऽसाध्यं साधयितुं, प्रवर्तते ज्ञानवान् पुरुषः ॥ ५ ॥–आर्या
ज्ञानी कर्मक्षपणा–र्थमुत्थितो नो शठः प्रयतमानः ।
सूत्रोदितेन विधिना, न बन्धकः सत्त्वमरणेऽपि ॥ ६ ॥–आर्या
स्यान्नाम यदा बन्ध–श्छद्मस्थस्य प्रमाददोषेण ।
तस्य प्रायश्चित्तं, दशविधमातिष्ठति तदा सः ॥ ७ ॥–आर्या
उपपादिताश्च कायाः, सर्वे मोक्षश्च सर्वतन्त्रेष्टः ।
यदि चैवं नाहिंसा, स्यात् तस्मान्मोक्ष एव ननु ॥ ८ ॥–आर्या
ब्रुवते परामहिंसां, सर्वे धर्मप्रवादिनो लोके ।
तिष्ठति भिक्षावृत्तौ, ज्ञानरतौ सा त्वनारम्भे ॥ ९ ॥ "–आर्या

तस्मादसत्त्वेतितोऽपि कर्मबन्धः समस्ति जीवव्याप्तेऽपि लोकेऽस्त्यहिंसकः साधुरिति । यथोक्तमनुत्पादयन्तोऽपि दुःखं परस्य कामक्रोधादीनां निमित्ततां प्रतिपद्यमानाः काययोग-द्वारेणैव सायुज्यन्ते । यतः सर्वाङ्गोपाङ्गसुन्दरो मुनिर्योषितां कामाग्निमुद्दीपयति कस्यचिच्च तद्दर्शनात् प्रद्वेषः । यदि च बाह्यनिमित्तमात्राद् बन्धः, ततो मृगोऽपि वधहेतुरिति स्यात्, न तस्यापि वधनिमित्तत्वाद् बन्धः । तथा जैनैश्चोद्यते–नैमित्तिकं पापमनिच्छतो मायासूनवीयस्य मांसभक्षणमप्यदोषं स्यात् । एवं चोदित आह—यदि त्रिविधमाशयं नोत्पादयति । तद्यथा—मांसरसगृद्ध्याशयं तत्पर्येष्ट्याशयं वध्ये नैर्घृण्याशयं चेत्येतदप्यज्ञातपरसमयस्य फल्गु वचनम् । यतो यावदात्माधिष्ठितः कायस्तावदप्रमत्तस्य आगमानुसारेण यतमानस्य नैवास्त्येनसा योगः । यथोक्तम्—

"यो रक्तो द्विष्टो वा, मूढो वा यं प्रयोगमाचरति ।
तस्माद्धि तदनुरूपो, बन्धस्तस्यार्हता प्रोक्तः ॥ १ ॥ "—आर्या

यदा त्वचेतनः कायोपविद्धः सत्त्वेन तदाऽप्युत्सृष्टस्त्रिविधस्त्रिविधेनेति न तज्जनितः कर्मबन्धोऽस्ति । एतेन काष्ठादीनां पुण्यपापप्रसङ्ग उक्तो वेदितव्यः । यथोक्तमार्षे—"यं हि धर्मपुण्यपापक्रियायामिच्छतः क्रुद्धस्येव पुण्यार्थिनो निर्ग्रन्थशिरोलुञ्चने पापप्रसङ्गात्" इत्यादि सर्वं प्रतिहतं बोद्धव्यम् । न च दृष्टान्तः सर्वैर्विकल्पैरुपनेयः, अनुमानाभावप्रसङ्गादिति । यथोक्तम्—"मृगस्यापि वधनिमित्तकर्मबन्धः" इति । तत्राप्युक्तमेव पूर्वं इति चानुक्तोप-

१ 'कस्याश्चिच्च' इति ग-पाठः । २ 'पर्येष्ट्याशयं' इति ङ-पाठः । ३ 'चेति तदपि' इति क-पाठः ॥

लम्भोऽयम्। बन्धो हि नः प्रयोगवशात्। न च तस्य हन्यमानस्य तत्र हिंसाप्रयोगोऽस्ति। औद्देशिकाद्यारम्भे चावश्यंभावी जीववधः शाक्यानाम्। यथोक्तम्—

" प्रतिसेवासंभासः, प्रतिश्रुतिश्चानुमोदना दृष्टाः।
औद्देशिकादिनिर्व-र्तेन च नियमेन जीववधः ॥ १ ॥—आर्या
भिक्षूनुद्दिश्य हते, दोषो न तु मांसभक्षणेऽभीष्टः।
शाक्यानां सर्वानु-द्दिश्यारब्धमदन् भिक्षुः ॥ २ ॥"—आर्या

कथमदुष्टः ? यस्मात् सत्त्वोऽपि हि न भिक्षुव्यतिरेकेणान्योऽस्ति। यच्च सत्त्वमुद्दिश्य कृतं तद् भिक्षूद्देशेनैव कृतं, तदव्यतिरेकात्। मायासूनवीयश्चोदयति—

" कथमेषणीयमपि भिक्षुरदन् हिंसां न सोऽनुमन्येत।
परितुष्यति यल्लब्ध्वा, ग्रहणं न ह्यस्त्यसति दोषे ॥ १ ॥"—आर्या

जैनेन्द्रास्त्वाहुः—

" इत्येष विप्रलापो, न स तुष्यति येन जीवघाताय।
सुखमुत्सर्पति मेयं, धर्मोऽनेनेति तुष्यति तु ॥ २ ॥—आर्या
ननु देहेन समर्थे-नानेन सुखं तपोऽधितिष्ठामि।
इति तुष्यतोऽस्ति न यते-र्मातापितृमैथुनानुमतिः ॥ ३ ॥"—आर्या

अथ कदाचिदाशङ्कत—

" औद्देशिकादिभोज्यपि, तथैव न तु तुष्यतीत्यपि न युक्तम्।
आत्मार्थं हि हितानां, न यतिर्दयते स जीवानाम् ॥ ४ ॥—आर्या
हत्वाऽऽत्मार्थं सत्त्वं, समक्षमुपहृतमुदीक्ष्य तन्मांसम्।
न हि गृह्णाति दयालु-र्गृह्णन् ननु निर्दयो भवति ॥ ५ ॥—आर्या
परमुद्दिश्यारब्ध-मपि तद् गृह्णन् कथं न विकपः स्यात्।
इत्येष विप्रलाप-स्तद्ध्यारब्धं स्वभावेन ॥ ६ ॥—आर्या
गृहिणा ह्यारम्भः, शक्यो वारयितुं सर्व एव जीवानाम्।
स हि धर्मः संसरतां शक्यस्त्वौद्देशिकारम्भः ॥ ७ ॥"—आर्या

निवारयितुं यच्चोक्तमाशयत्रयविशुद्धमदतो मांसं न दोष इति (पृ० २४७, पं० १९) तत्रोक्तं रसपरित्यागस्तपसि, तत्त्वमिति ॥ १९ ॥

प्रकृतमुच्यते। किञ्च प्रकृतं तपस्तत्र बाह्यमुक्तम्। अधुनाऽऽभ्यन्तरमुच्यते। तच्चातिशयेन कर्मनिर्दहनक्षमम्।

अभ्यन्तराणि षट् तपांसि

## सूत्रम्—प्रायश्चित्त-विनय-वैयावृत्त्य-स्वाध्याय-व्युत्सर्ग-ध्यानान्युत्तरम् ॥ ९-२० ॥

**भा०—सूत्रक्रमप्रामाण्यादुत्तरमित्यभ्यन्तरमाह। प्रायश्चित्तं १ विनयो २ वैयावृत्त्यं ३ स्वाध्यायो ४ व्युत्सर्गो ५ ध्यानं ६ इत्येतत् षड्विधं अभ्यन्तरं तपः ॥ २० ॥**

अभ्यन्तरतपोलक्षणम्

टी०—अन्तर्व्यापारभूयस्त्वा-दन्यतीर्थविशेषतः।
वाह्यद्रव्यानपेक्षत्वा-दान्तरं तप उच्यते ॥ १ ॥—अनु०

प्रायश्चित्तादीनां व्युत्पत्तिः

प्रायश्चित्तादीनां ध्यानान्तानां द्वन्द्वः। मूलोत्तरगुणेषु स्वल्पोऽप्यतीचारः चित्तं मलिनयतीति तत्प्रकाशनाय तच्छुद्धचैव प्रायश्चित्तं विहितं, पापच्छेदकारित्वात् प्रायश्चित्तमिति। पृषोदरादित्वाच्छब्दसंस्कारः। प्रायो बाहुल्येन चित्तविशुद्धिहेतुत्वात् प्रायश्चित्तम्। विनीयते येनाष्टप्रकारं कर्मापनीयते स विनयः। श्रुतोपदेशेन व्यावृत्तो—व्यग्रस्तद्भावो वैयावृत्त्यम्। सुष्ठु—मर्यादया कालवेलापरिहारेण पौरुष्यपेक्षया वाऽऽध्यायः स्वाध्यायः। विविधस्यान्नपानवस्त्रपात्रादेः संसक्तस्यातिरिक्तस्य च परित्याग उत्सर्गो व्युत्सर्गः। वाक्कायचित्तानां आगमविधानेन निरोधो ध्यानम्। उत्तरमिति पूर्वसूत्रोपन्यस्तबाह्यतपोऽपेक्षया सूत्रानुपूर्वीप्रामाण्यादुत्तरमित्यभ्यन्तरमाह। एतदपि षट्प्रकारमभ्यन्तरं तप इति तदेतदभ्यन्तरं तपः ॥ २० ॥

अभ्यन्तरतपोभेदनिर्देशः

## सूत्रम्—नव-चतुर्-दश-पञ्च-द्विभेदं यथाक्रमं प्राग् ध्यानात् ॥ ९-२१ ॥

**भा०—तदभ्यन्तरं तपः नव-चतुर्-दश-पञ्च-द्विभेदं भवति यथाक्रमं प्राग् ध्यानात्। इत उत्तरं वक्ष्यामः ॥ २१ ॥ तद्यथा—**

टी०—नवादीनां भेदशब्दोपसंहितानां भेदशब्देन बहुव्रीहिः, द्विपदवृत्तौ समासे समानाधिकरणे बहुलमुत्तरपदलोपविज्ञानमुष्ट्रमुखन्यायेन। नव च चत्वारश्च दश च पञ्च च द्वौ च भेदाश्च ते नवचतुर्दशपञ्चद्विभेदाः। एते भेदा यस्येत्येकस्य भेदशब्दस्य लोपः। यथाक्रममिति यथासङ्ख्यम्। प्राग् ध्यानात् प्रायश्चित्तादारभ्य यावद् व्युत्सर्ग इति। इतः—अस्मात् सूत्रादुत्तरं यद् वक्ष्यामः प्रायश्चित्तादित्थंभेदमवसेयमिति ॥ २१ ॥

---

१ 'उत्सर्गः—परित्यागः' इति प्रतिभाति।

लम्भोऽयम् । बन्धो हि नः प्रयोगवशात् । न च तस्य हन्यमानस्य तत्र हिंसाप्रयोगोऽस्ति । औद्देशिकाद्यारम्भे चावश्यंभावी जीववधः शाक्यानाम् । यथोक्तम्—

" प्रतिसेवासंवासः, प्रतिश्रुतिश्चानुमोदना दोषाः ।
औद्देशिकादिनिर्व-र्तने च नियमेन जीववधः ॥ १ ॥—आर्या
भिक्षूनुद्दिश्य हते, दोषो न तु मांसमधर्मोऽभीष्टः ।
शाक्यानां सर्वांस्तु-द्दिश्यारब्धमदन् भिक्षुः ॥ २ ॥"—आर्या

कथमदुष्टः ? यस्मात् सत्त्वोऽपि हि न भिक्षुव्यतिरेकेणान्योऽस्ति । यच्च सत्त्वमुद्दिश्य कृतं तत् भिक्षूद्देशेनैव कृतं, तदव्यतिरेकात् । मायासूनवीयश्चोदयति—

" कथमेषणीयमपि भि-क्षुरदन् हिंसां न सोऽनुमन्येत ।
परितुष्यति यल्लब्ध्वा, ग्रहणं नन्वस्त्यसति दोषे ॥ १ ॥"—आर्या

जैनेन्द्रास्त्वाहुः—

" इत्येष विप्रलापो, न स तुष्यति येन जीवघाताय ।
सुखमुत्सर्पति मेयं, धर्मोऽनेनेति तुष्यति तु ॥ २ ॥—आर्या
ननु देहेन समर्थे-नानेन सुखं तपोऽधितिष्ठामि ।
इति तुष्यतोऽस्ति न यते-र्मातापित्रोर्मैथुनानुमतिः ॥ ३ ॥"—आर्या

अथ कदाचिदाशङ्कत—

" औद्देशिकादिभोज्यपि, तथैव न तु तुष्यतीत्यपि न युक्तम् ।
आत्मार्थं हि हितानां, न यतिर्दयते स जीवानाम् ॥ ४ ॥—आर्या
हत्वाऽऽत्मार्थं सत्त्वं, समक्षमुपहृतमुदीक्ष्य तन्मांसम् ।
न हि गृह्णाति दयालु-र्गृह्णन् ननु निर्दयो भवति ॥ ५ ॥—आर्या
परमुद्दिश्यारब्ध-मपि तद् गृह्णन् कथं न विकृपः स्यात् ।
इत्येष विप्रलाप-स्तद्धयारब्धं स्वभावेन ॥ ६ ॥—आर्या
गृहिणा नह्यारम्भः, शक्यो वारयितुं सर्व एव जीवानाम् ।
स हि धर्मः संसरतां शक्यस्त्वौद्देशिकारम्भः ॥ ७ ॥"—आर्या

निवारयितुं यच्चोक्तमाशयत्रयविशुद्धमदतो मांसं न दोष इति (पृ० २४७, पं० १९) तत्रोक्तं रसपरित्यागस्तपसि तत्त्वमिति ॥ १९ ॥

प्रकृतमुच्यते । किञ्च प्रकृतं तपस्तत्र बाह्यमुक्तम् । अधुनाऽऽभ्यन्तरमुच्यते । तच्चाति- शयेन कर्मनिर्दहनक्षमम् ।

युक्तः प्रत्यवमर्शः-पश्चात्तापः उत्सूत्रमिदं मया दुष्टं कृतमिति स्वच्छन्दतो न सूत्रानुसारेणेति समुपजातविप्रतिसारः प्रतीपमपसर्पति प्रत्याख्याति-न पुनरेवं करिष्यामीति प्रत्याख्यानं प्रतिक्रमणं, कायोत्सर्गकरणं चेति। कायस्य-शरीरस्य उत्सर्गः-उज्झनं भावतः कायोत्सर्गः। यस्मात् सुविशुद्धभावस्यापि ममायं कायो बलान्निपतितः कायेष्विति न मे भावदोष इति।

तदेतदेवंविधं प्रतिक्रमणं प्रायश्चित्तमहिंसकस्य गुप्तिसमितिप्रमादिनो गुरूनासादयतो विनयहानिमाचरत इच्छाकारादिसामाचारीमप्रयुञ्जानस्य लघुकमृषादत्तमूर्च्छावतो विधिशून्यकासजृम्भितक्षुतवातमोक्षणकन्दर्पहासविकथादिमतो विहितं तदुभयप्रायश्चित्तनिरूपणायाह—

विवेकस्य पर्यायाः

**भा०—एतदुभयमालोचनप्रतिक्रमणे। विवेको विवेचनं विशोधनं प्रत्युपेक्षणमित्यनर्थान्तरम्। स एष संसक्तान्नपानोपधिशय्यादिषु भवति ॥**

टी०—एतदुभयमालोचनप्रतिक्रमणे इति। आलोचनं व्याख्यातं प्रतिक्रमणं च। एतदेवोभयं प्रायश्चित्तं प्रागालोचनं पश्चाद् गुरुसन्दिष्टस्य प्रतिक्रमणम्। एतच्चोभयं प्रायश्चित्तं सम्भ्रमभयातुरापत्सहसाऽनाभोगानात्मवशगतस्य दुष्टचिन्तितभाषणचेष्टावतश्च विहितम्। सम्प्रति विवेकप्रायश्चित्तावसरः—विवेको विवेचनमित्यादि। विवेकः-त्यागपरिणामः। विवेचनं-भावविशुद्धिः। विशोधनं-निरवयवता पुनः प्रत्युपेक्षणं प्रस्फोटनमीक्षणमेव वा प्रयत्नेन स्वल्पोऽप्यवयवो नास्तीति। विशुद्धिरित्येते पर्यायशब्दा अभिन्नमर्थमभिदधति। विवेकप्रायश्चित्तस्य विषयं दर्शयति—स एष विवेकः संसक्तान्नपानोपकरणादिषु भवतीति। उपयुक्तेन गीतार्थेन गृहीतं प्राक् पश्चादवगतमशुद्धं विवेकार्हम्। अन्नपानग्रहणात् पिण्डपरिग्रहः। उपधिरौधिकौपग्रहिकलक्षणः। शय्या-प्रतिश्रयः। आदिग्रहणाद् डगलकभस्ममल्ल(क)भेषजादिपरिग्रह इत्येवं विवेक एव प्रायश्चित्तमिति ॥

सम्प्रति व्युत्सर्गप्रायश्चित्तमुच्यते—

व्युत्सर्गस्य पर्यायः

**भा०—व्युत्सर्गः प्रतिष्ठापनमित्यनर्थान्तरम्। एषोऽप्यनेषणीयान्नोपकरणादिषु अशङ्कनीयविवेकेषु च भवति ॥**

टी०—व्युत्सर्ग इत्यादि। विशिष्ट उत्सर्गो व्युत्सर्गः-प्रणिधानपूर्वको निरोधः। कायवाग्व्यापारस्य[1], पर्यायान्तरेण व्याचष्टे-प्रतिष्ठापनमित्यनर्थान्तरम्। प्रतिष्ठापनशब्दः परित्यागार्थः। कायोत्सर्गप्रायश्चित्तस्य विषयमादर्शयति—एषोऽपि कायोत्सर्गः प्रायश्चित्तं भवति। क्व? अनेषणीयादिषु-त्यक्तेषु। तत्रानेषणीयमुद्गमाद्यविशुद्धमन्नपानमुपकरणं वा प्रतिष्ठाप्य

१ 'कायव्यापारस्य' इति क-पाठः।

तद्यथेत्यनेन सूत्रं सम्बध्नाति । अभ्यन्तरतपोभेदस्याद्यस्य निर्दिष्टविकल्पसङ्ख्यस्य तद्भेदानामाख्याविशेषप्रकाशनार्थमिदमुच्यतेऽत्र—

प्रायश्चित्तस्य नव भेदाः

**सूत्रम्—आलोचन-प्रतिक्रमण-तदुभय-विवेक-व्युत्सर्ग-तपश्छेद-परिहारोपस्थापनानि ॥ ९-२२ ॥**

भा०—प्रायश्चित्तं नवभेदम् । तद्यथा—आलोचनं, प्रतिक्रमणं, आलोचनप्रतिक्रमणे, विवेकः, व्युत्सर्गः, तपः, छेदः, परिहारः, उपस्थापनमिति ॥

टी०—आलोचनादय उपस्थापनान्ताः कृतद्वन्द्वा नपुंसकलिङ्गेन निर्दिष्टाः । प्रायश्चित्तं नवभेदमित्यादि विवरणम् । औपसङ्ख्यानिकः सुट् । तद्यथेत्यादिना नवापि भेदान् विवेकेन दर्शयति । तदुभयमित्येतद् व्याचष्टे—आलोचन-प्रतिक्रमणे इति । तदित्यनेनालोचनं प्रतिक्रमणं च सङ्गृहीतम् । एष च तृतीयो भेदः । आलोचनादीन् भाष्यकार एव क्रमेण विवृणोति । अनया मर्यादया दोषरहितः कार्याकार्यव्युत्पन्नबालजल्पितवत् सकलमतीचारमाचष्टे—प्रत्यक्षीकरोति प्रकाशयत्यालोचनार्हाय गुरवे । तत्र कश्चिदतीचारः प्रकाशमात्रेणैवापोह्यते, यथाश्रुतोपदिष्टव्यापारानुष्ठायी मोक्षाय प्रयतमानोऽवश्यकरणीयेषु प्रत्युपेक्षणप्रमार्जनवैयावृत्त्यस्वाध्यायतपश्चरणाहाराद्युचारविहारावनिचैत्ययतिवन्दनादिषु कार्येषु अत्यन्तोपयुक्तो [4]निःसपत्नः प्रवर्तते व्यस्तस्थूलातिचारः सूक्ष्मास्रवप्रमादक्रियाविशुद्ध्यर्थमालोचनमात्रादेव विशुध्यति । तस्यालोचनस्यैकार्थाः पर्यायाः—

आलोचनस्य पर्यायाः

भा०—आलोचनं [5]विवरणं प्रकाशनमाख्यानं प्रादुष्करणमित्यनर्थान्तरम् ॥

टी०—आलोचनं मर्यादनं मर्यादया गुरोर्निवेदनम् । पिण्डिताख्यानस्य विवरणं द्रव्यादिभेदेन । प्रकाशनं गुरोश्चेतसि सम्यगतीचारसमारोपणम् । आख्यानं प्रथमं मृदुना चेतसा । प्रादुष्करणं निन्दा-गर्हाद्वारेण । इति—एवमनर्थान्तरम्—एकार्थत्वं परमार्थत इति ॥

प्रतिक्रमणमित्यादि स्वयमेव विवृणोति भाष्यकारः—

भा०—प्रतिक्रमणं मिथ्यादुष्कृतसंप्रयुक्तं प्रत्यवमर्शः प्रत्याख्यानं कायोत्सर्गकरणं च ॥

टी०—अतीचाराभिमुख्यपरिहारेण प्रतीपं क्रमणम्—अपसरणं प्रतिक्रमणम् । एतदाह—मिथ्या-अलीकमुत्सूत्रमुन्मार्गः । दुष्टं कृतं दुष्कृतं चरणविराधनमित्यर्थः । तेन सम्प-

---

१ 'प्रकृत्यर्थं' इति ङ-च-पाठः । २ 'स्थानानि' इति च-पाठः । ३ 'स्थानमिति' इति ग-पाठः । ४ 'निष्पन्नः' इति च-पाठः । ५ 'प्रकटनं' इति घ-पाठः ।

युक्तः प्रत्यवमर्शः-पश्चात्तापः उत्सूत्रमिदं मया दुष्टं कृतमिति स्वच्छन्दतो न सूत्रानुसारेणेति समुपजातविप्रतिसारः प्रतीपमपसर्पति प्रत्याख्याति-न पुनरेवं करिष्यामीति प्रत्याख्यानं प्रतिक्रमणं, कायोत्सर्गकरणं चेति। कायस्य-शरीरस्य उत्सर्गः-उज्झनं भावतः कायोत्सर्गः। यस्मात् सुविशुद्धभावस्यापि ममायं कायो बलान्निपतितः कायेष्विति न मे भावदोष इति।

तदेतदेवंविधं प्रतिक्रमणं प्रायश्चित्तमहिंसकस्य गुप्तिसमितिप्रमादिनो गुरूनासादयतो विनयहानिमाचरत इच्छाकारादिसामाचारीमप्रयुञ्जानस्य लघुकमृषादत्तमूर्च्छावतो विधिशून्यकासजृम्भितक्षुतवातमोक्षणकन्दर्पहासविकथादिमतो विहितं तदुभयप्रायश्चित्तनिरूपणायाह—

विवेकस्य पर्यायाः

**भा०—एतदुभयमालोचनप्रतिक्रमणे। विवेको विवेचनं विशोधनं प्रत्युपेक्षणमित्यनर्थान्तरम्। स एष संसक्तान्नपानोपधिशय्यादिषु भवति॥**

**टी०—एतदुभयमालोचनप्रतिक्रमणे** इति। आलोचनं व्याख्यातं प्रतिक्रमणं च। एतदेवोभयं प्रायश्चित्तं प्रागालोचनं पश्चाद् गुरुसन्दिष्टस्य प्रतिक्रमणम्। एतच्चोभयं प्रायश्चित्तं सम्भ्रमभयातुरापत्सहसाऽनाभोगानात्मवशगतस्य दुष्टचिन्तितभाषणचेष्टावतश्च विहितम्। सम्प्रति विवेकप्रायश्चित्तावसरः—**विवेको विवेचनमित्यादि**। विवेकः-त्यागपरिणामः। विवेचनं-भावविशुद्धिः। विशोधनं-निरवयवता पुनः प्रत्युपेक्षणं प्रस्फोटनमीक्षणमेव वा प्रयत्नेन स्वल्पोऽप्यवयवो नास्तीति। विशुद्धिरित्येते पर्यायशब्दा अभिन्नमर्थमभिदधति। विवेकप्रायश्चित्तस्य विषयं दर्शयति—**स एष विवेकः संसक्तान्नपानोपकरणादिषु भवतीति**। उपयुक्तेन गीतार्थेन गृहीतं प्राक् पश्चादवगतमशुद्धं विवेकार्हम्। अन्नपानग्रहणात् पिण्डपरिग्रहः। उपधिरौधिकौपग्रहिकलक्षणः। शय्या-प्रतिश्रयः। आदिग्रहणाद् डगलकभस्ममल्ल(क)भेषजादिपरिग्रह इत्येवं विवेक एव प्रायश्चित्तमिति॥

सम्प्रति व्युत्सर्गप्रायश्चित्तमुच्यते—

व्युत्सर्गस्य पर्यायः

**भा०—व्युत्सर्गः प्रतिष्ठापनमित्यनर्थान्तरम्। एषोऽप्यनेषणीयान्नोपकरणादिषु अशङ्कनीयविवेकेषु च भवति॥**

**टी०—व्युत्सर्ग** इत्यादि। विशिष्ट उत्सर्गो व्युत्सर्गः-प्रणिधानपूर्वको निरोधः। कायवाग्व्यापारस्य[1], पर्यायान्तरेण व्याचष्टे-**प्रतिष्ठापनमित्यनर्थान्तरम्**। प्रतिष्ठापनशब्दः परित्यागार्थः। कायोत्सर्गप्रायश्चित्तस्य विषयमादर्शयति—**एषोऽपि** कायोत्सर्गः प्रायश्चित्तं भवति। क्व? **अनेषणीयादिषु**-त्यक्तेषु। तत्रानेषणीयमुद्गमाद्यविशुद्धमन्नपानमुपकरणं वा प्रतिष्ठाप्य

---

1 'कायव्यापारस्य' इति क-पाठः।

कायोत्सर्गः कार्यः । आदिग्रहणाद् गमनागमनविहारश्रुतगाथपदसमुद्देशनौसन्तरणोच्चार-प्रस्रवणावरणपरिग्रहः । अशङ्कनीयविवेकेषु चेति । घनसंसक्तकक्षुद्रपिपीलिकादिषु न प्राणिनो विवेक्तुं शक्यन्त इत्यशङ्कनीयविवेकेषु च सक्तुप्रभृतिषु प्रतिष्ठापितेषु कायोत्सर्ग एव तपः प्रायश्चित्तं भवतीति ॥

तपःप्रायश्चित्तविवक्षया त्वाह—

**भा०—तपो बाह्यमनशनादि प्रकीर्णं चानेकविधं चन्द्रप्रतिमादि ॥**

टी०—तपो बाह्यमनशनादि । प्रायश्चित्तमित्यभ्यन्तरं तपः, अनशनादि तु बाह्यम् । बाह्याभ्यन्तरता च केनचिदंशेनेत्यविरोधः । तत्रानशनग्रहणाच्चतुर्थभक्तपरिग्रहः, श्रुतानुसारात् पञ्चमव्यवहारानुसाराच्च । तच्च मध्यमग्रहणं मध्यमग्रहणाच्चाद्यभेदपरिग्रहोऽपि । तत्राद्याः पञ्चक-दशक-विंशति-पञ्चविंशतिभेदा लघवो गुरवश्च । मासोऽपि च लघुर्गुरुः । चत्वारश्च मासा लघवो गुरवश्च । षट् च मासा लघुगुरवः मध्यं च । भिन्नमासो लघुगुरुभेदः । सर्वमेतत् तपः प्रायश्चित्तं ज्ञानदर्शनचारित्रापराधानुरूपमागमेऽतिचारविशुद्ध्यर्थम् । सम्प्रति पञ्चमव्यवहारप्रमाणेन यतयो भूयसा विशुद्धिमाचरन्ति । तच्च निर्विकृत्याद्यष्टमभक्तान्तम् । तच्चानेकातिचारविषयम् । यथा उद्देशकाध्ययनश्रुतस्कन्धाङ्गेषु प्रमादिनः कालविनयातिक्रमादिषु क्रमेण निर्विकृत्याद्याचाम्लान्तमनागाढयोगे, आगाढे तु पुरस्तादर्धचतुर्थभक्तान्तम् । एवमादि प्रकीर्णकं चानेकविधं चन्द्रप्रतिमादीत्युक्तलक्षणं बाह्ये तपसि प्राक् प्रपञ्चेनेति ॥

छेदप्रायश्चित्ताभिधित्सयोवाच—

छेदस्य पर्यायाः

**भा०—छेदोऽपवर्तनमपहार इत्यनर्थान्तरम् । स प्रव्रज्यादिवस-पक्ष-मास-संवत्सराणामन्यतमेषां भवति ॥**

टी०—छेदोऽपवर्तनमपहार इत्यभिन्नार्थाः पर्यायाः । स च छेदः पर्यायस्य महाव्रतारोपणकालादारभ्य गण्यते । एतदेवाह—प्रव्रज्येत्यादि । प्रव्रज्यादिवस-पक्ष-मास-संवत्सराणामन्यतमेषां भवति । प्रव्रज्यादिवसो यत्र महाव्रतारोपणं कृतं तदादिः पर्यायः । तत्र पञ्चकादिच्छेदपर्यायस्य यथा यस्य तावद् दश वर्षाण्यारोपितमहाव्रतस्यापराधानुरूपः कदाचित् पञ्चकच्छेदः कदाचिच्च दशक इत्यादि यावत् षण्मासपरिमाणच्छेदो लघुर्गुरुर्वा, एवंविधेन छेदेन छिद्यमानः प्रव्रज्यादिवसमप्यपहरतीति । अस्य च विषयस्तपसा गर्वितः तपसोऽसमर्थस्तपश्चाश्रद्दधानः तपसा च यो न दाम्यत्यतिपरिणामकश्चेत्यादि ॥

सम्प्रति मूलप्रायश्चित्तमभिधीयते—

उपस्थापनस्य पर्यायाः

**भा०—परिहारो मासिकादिः । उपस्थानं पुनर्दीक्षणं पुनश्चरणं पुनर्व्रतारोपणमित्यनर्थान्तरम् ॥**

---

१ 'श्रुताङ्गेषु' इति ङ-पाठः । २ 'विनयता' इति ङ-पाठः । ३ 'दिवसादिपक्ष०' इति ग-पाठः ।

टी०—परिहारो मासिकादिरिति। इदं मूलप्रायश्चित्तोपलक्षणम्। परिह्रियते अस्मिन् सति वन्दनालापान्नपानप्रदानादिक्रियया साधुभिरिति परिहारः। स च मासादिकः षण्मासान्तः। तस्य चान्ते क्वचिन्मूलं पुनर्व्रतारोपणं तद्विषयः सङ्कल्पात् कृतः प्राणातिपातो दर्पाच्चतुर्थासेवनमुत्कृष्टं मृषावादादि वा सेव्रमानस्येत्येवमादिः। अनवस्थाप्यपारञ्चिकप्रतिपादनार्थमाह—उपस्थापनं पुनर्दीक्षणमित्यादि। अनवस्थाप्यपारञ्चिकप्रायश्चित्ते लिङ्गक्षेत्रकालतपःसाधर्म्यादेकस्थीकृत्योक्ते

अनवस्थाप्यपारञ्चिकयोरन्तर्भावः

तत्र यथोक्तं तपो यावन्न कृतं तावन्न व्रतेषु लिङ्गे वा स्थाप्यते इत्यनवस्थाप्य तेनैव तपसाऽतिचारपारमञ्चतीति पारञ्चिकः। पृषोदरादिपाठाच्च संस्कारः शब्दस्य। तयोः पर्यन्ते तेषूपस्थापनं–व्यवस्थानं पुनर्दीक्षणं–पुनः प्रव्रज्याप्रतिपत्तिः पुनश्चरणं–चारित्रं पुनर्व्रतारोपणमित्यनर्थान्तरम्। तत्रानवस्थाप्यविषयः साधर्मिकान्यधार्मिकास्तेयहस्तताडनादिः दुष्टमूढान्योन्यकरणादिः पारञ्चिकस्येति॥

भा०—तदेतन्नवविधं प्रायश्चित्तं देशं कालं शक्तिं संहननं संयमविराधनां च कायेन्द्रियजातिगुणोत्कर्षकृतां च प्राप्य विशुद्ध्यर्थं यथाऽर्हं दीयते चाचर्यते च॥

टी०—तदेतन्नवविधं प्रायश्चित्तमित्यादि। तदेतदित्यालोचनादेः परामर्शः। नवविधमिति स्वकृतसूत्रसन्निवेशमाश्रित्योक्तम्। आर्षे तु दशधा विंशतिधा वाऽभिहितं प्रायश्चित्तं वक्ष्यमाणनिर्वचनम्। देशो निर्गुणः स्निग्धं क्षेत्रम्। कालः स्निग्धो रूक्षः साधारणश्च। शक्तिः प्रायश्चित्तकारिणो

प्रायश्चित्तप्रकाराणां सङ्ख्या

वीर्य–सामर्थ्यम्। संहननं वज्रर्षभनाराचादि। संयमः सप्तदशभेदः समस्तो वा मूलगुणोत्तरगुणकलापः तस्य विराधना–खण्डनमतिचरणम्। चशब्दः समुच्चयार्थः। तां विराधनां विशिनष्टि–कायेन्द्रियेत्यादि। कायाः पृथिव्यादयः षट्सङ्ख्याः। तत्रावनि-जल-ज्वलन-पवन-प्रत्येकवनस्पतिषु सङ्घट्टन-परितापना-ऽपद्रावणविषयमन्यादृशं प्रायश्चित्तमन्यादृक् साधारणवनस्पतावन्यादृशं च द्वि-त्रि-चतुः-पञ्चेन्द्रियकायेषु इत्थमुपयुज्य यथावद् देयम्। एवं कालादयोऽपि पर्यालोचनीयास्तदनुरूपं च देयमिति। तथा एक-द्वि-त्रि-चतुः-पञ्चेन्द्रियप्राणिप्रत्युपेक्षणेन च विभजनीयं प्रायश्चित्तम्। अथवा एक-द्वि-त्रि-चतुः-पञ्चेन्द्रियजातिद्वारेण गुणा राग-द्वेष-मोहाः तेषामुत्कर्षा-ऽपकर्ष-मध्यावस्थाः समीक्ष्य मृगराज-गवादिव्यापादकवत् तत्कृतां च विराधनां प्राप्य अतिचारविशोधनार्थं यथाऽर्हमपराधानुरूपं दीयते चाचर्यते च प्रायश्चित्तमिति॥

१ 'मूलं मता' इति ङ–पाठः। २ 'यावत्कृतं' इति ङ–पाठः। ३ 'लिङ्गे वा स्थाप्यः' इति ङ–पाठः। ४ 'कृत-स्तत्र' इति ङ–पाठः। ५ 'स्निग्धक्षेत्रं' इति ङ–च–पाठः।

कायोत्सर्गः कार्यः । आदिग्रहणाद् गमनागमनविहारश्रुतमार्गपथसमर्दनोच्चार-प्रस्रवणावरणपरिग्रहः । अशङ्कनीयविवेकेषु नेति । मनःसंकल्पकल्पितकादिषु न प्राणिनो विवेक्तुं शक्यन्त इत्यशङ्कनीयविवेकेषु च गर्तप्रभृतिषु प्रतिष्ठापितेषु कायोत्सर्ग एव तपः प्रायश्चित्तं भवतीति ॥

तपःप्रायश्चित्तविवक्षया त्वाह—

भा०—तपो बाह्यमनशनादि प्रकीर्णं चानेकविधं चन्द्रप्रतिमादि ॥

टी०—तपो बाह्यमनशनादि । प्रायश्चित्तमित्यभ्यन्तरं तपः, अनशनादि तु बाह्यम् । बाह्याभ्यन्तरता च केनचिदंशेनेत्यविरोधः । तत्रानशनग्रहणाच्चतुर्थभक्तपरिग्रहः, श्रुतानुसारात् पञ्चमव्यवहारानुसाराच्च । तथ मध्यमग्रहणं मध्यमग्रहणाच्चापभेदपरिग्रहोऽपि । तत्राद्याः पञ्चक-दशक-विंशति-पञ्चविंशतिभेदा लघवो गुरवश्च । मासोऽपि च लघुर्गुरुः । चत्वारश्च मासा लघवो गुरवश्च । षट् च मासा लघुगुरवः मध्यं च । निम्नमासो लघुगुरुभेदः । सर्वमेतद् तपः प्रायश्चित्तं ज्ञानदर्शनचारित्रापराधानुरूपमागमेऽतिचारविशुद्धपर्थम् । सम्प्रति पञ्चमव्यवहारप्रमाणेन यतयो भूयसा विशुद्धिमाचरन्ति । तथ निर्विकृत्याद्यष्टमभक्तान्तम् । तथानेकातिचारविषयम् । यथा उद्देशकाध्ययनश्रुतस्कन्धाङ्गेषु प्रमादिनः कालविनयातिक्रमादिषु क्रमेण निर्विकृत्याद्याचाम्लान्तमनागाढयोगे, आगाढे तु पुरस्तादर्धचतुर्थभक्तान्तम् । एवमादि प्रकीर्णकं चानेकविधं चन्द्रप्रतिमादीत्युक्तलक्षणं बाह्ये तपसि प्राक् प्रपञ्चेनेति ॥

छेदप्रायश्चित्ताभिधित्सयोवाच—

छेदस्य पर्यायाः

भा०—छेदोऽपवर्तनमपहार इत्यनर्थान्तरम् । स प्रव्रज्यादिवस-पक्ष-मास-संवत्सराणामन्यतमेषां भवति ॥

टी०—छेदोऽपवर्तनमपहार इत्यभिन्नार्थाः पर्यायाः । स च छेदः पर्यायस्य महाव्रतारोपणकालादारभ्य गण्यते । एतदेवाह—प्रव्रज्येत्यादि । प्रव्रज्यादिवस-पक्ष-मास-संवत्सराणामन्यतमेषां भवति । प्रव्रज्यादिवसो यत्र महाव्रतारोपणं कृतं तदादिः पर्यायः । तत्र पञ्चकादिच्छेदपर्यायस्य यथा यस्य तावद् दश वर्षाण्यारोपितमहाव्रतस्यापराधानुरूपः कदाचित् पञ्चकच्छेदः कदाचिच्च दशक इत्यादि यावत् षण्मासपरिमाणच्छेदो लघुर्गुरुर्वा, एवंविधेन छेदेन छिद्यमानः प्रव्रज्यादिवसमप्यपहरतीति । अस्य च विषयस्तपसा गर्वितः तपसोऽसमर्थस्तपश्चाश्रद्धधानः तपसा च यो न दाम्यत्यतिपरिणामकश्चेत्यादि ॥

सम्प्रति मूलप्रायश्चित्तमभिधीयते—

उपस्थापनस्य पर्यायाः

भा०—परिहारो मासिकादिः । उपस्थानं पुनर्दीक्षणं पुनश्चरणं पुनर्व्रतारोपणमित्यनर्थान्तरम् ॥

---

१ 'श्रुताङ्गेषु' इति ङ-पाठः । २ 'विनयता' इति ङ-पाठः । ३ 'दिवसादिपक्ष०' इति ग-पाठः ।

टी०—परिहारो मासिकादिरिति। इदं मूलप्रायश्चित्तोपलक्षणम्। परिह्रियते अस्मिन् सति वन्दनालापान्नपानप्रदानादिक्रियया साधुभिरिति परिहारः। स च मासादिकः षण्मासान्तः। तस्य चान्ते क्वचिन्मूलं पुनर्व्रतारोपणं तद्विषयः सङ्कल्पात् कृतः प्राणातिपातो दर्पाच्चतुर्थासेवनमुत्कृष्टं मृषावादादि वा सेवमानस्येत्येवमादिः। अनवस्थाप्यपारञ्चिकप्रतिपादनार्थमाह—उपस्थापनं पुनर्दीक्षणमित्यादि। अनवस्थाप्यपारञ्चिकप्रायश्चित्ते लिङ्गक्षेत्रकालतपःसाधर्म्यादेकस्थीकृत्योक्ते तत्र यथोक्तं तपो यावन्न कृतं तावन्न व्रतेषु लिङ्गे वा स्थाप्यते इत्यनवस्थाप्य तेनैव तपसाऽतिचारपारमञ्चतीति पारञ्चिकः। पृषोदरादिपाठाच्च संस्कारः शब्दस्य। तयोः पर्यन्ते तेषूपस्थापनं–व्यवस्थानं पुनर्दीक्षणं–पुनः प्रव्रज्याप्रतिपत्तिः पुनश्चरणं–चारित्रं पुनर्व्रतारोपणमित्यनर्थान्तरम्। तत्रानवस्थाप्यविषयः साधर्मिकान्यधार्मिकास्तेयहस्तताडनादिः दुष्टमूढान्योन्यकरणादिः पारञ्चिकस्येति॥

अनवस्थाप्यपारञ्चिकयोरन्तर्भावः

*भा०—तदेतन्नवविधं प्रायश्चित्तं देशं कालं शक्तिं संहननं संयमविराधनां च कायेन्द्रियजातिगुणोत्कर्षकृतां च प्राप्य विशुध्यर्थं यथाऽर्हं दीयते चाचर्यते च॥*

टी०—तदेतन्नवविधं प्रायश्चित्तमित्यादि। तदेतदित्यालोचनादेः परामर्शः। नवविधमिति स्वकृतसूत्रसन्निवेशमाश्रित्योक्तम्। आर्षे तु दशधा विंशतिधा वाऽभिहितं प्रायश्चित्तं वक्ष्यमाणनिर्वचनम्। देशो निर्गुणः किल क्षेत्रम्। कालः स्निग्धो रूक्षः साधारणश्च। शक्तिः प्रायश्चित्तकारिणो वीर्य–सामर्थ्यम्। संहननं वज्रर्षभनाराचादि। संयमः सप्तदशभेदः समस्तो वा मूलगुणोत्तरगुणकलापः तस्य विराधना–खण्डनमतिचरणम्। चशब्दः समुच्चयार्थः। तां विराधनां विशिनष्टि–कायेन्द्रियेत्यादि। कायाः पृथिव्यादयः षट्सङ्ख्याः। तत्रावनि-जल-ज्वलन-पवन-प्रत्येकवनस्पतिषु सङ्घट्टन-परितापना-ऽपद्रावणविषयमन्यादृशं प्रायश्चित्तमन्यादृक् साधारणवनस्पतावन्यादृशं च द्वि-त्रि-चतुः-पञ्चेन्द्रियकायेषु इत्थमुपयुज्य यथावद् देयम्। एवं कालादयोऽपि पर्यालोचनीयास्तदनुरूपं च देयमिति। तथा एक-द्वि-त्रि-चतुः-पञ्चेन्द्रियप्राणिप्रत्युपेक्षणेन च विभजनीयं प्रायश्चित्तम्। अथवा एक-द्वि-त्रि-चतुः-पञ्चेन्द्रियजातिद्वारेण गुणा राग-द्वेष-मोहाः तेषामुत्कर्षा-ऽपकर्ष-मध्यावस्थाः समीक्ष्य मृगराज-गवादिव्यापादकवत् तत्कृतां च विराधनां प्राप्य अतिचारविशोधनार्थं यथाऽर्हमपराधानुरूपं दीयते चाचर्यते च प्रायश्चित्तमिति॥

प्रायश्चित्तप्रकाराणां सङ्ख्या

---

१ 'मूलं मता' इति ङ-पाठः। २ 'यावत्कृतं' इति ङ-पाठः। ३ 'लिङ्गे वा स्थाप्यः' इति ङ-पाठः। ४ 'कृत-स्तत्र' इति ङ-पाठः। ५ 'खिलक्षेत्रं' इति ङ-च-पाठः।

सम्प्रति प्रायश्चित्तमिति शब्दं व्युत्पादयति—

प्रायश्चित्तशब्दस्य व्युत्पादनम्

भा०—'चिती सञ्ज्ञानविशुद्धयोः' धातुः । तस्य चित्तमिति भवति निष्ठान्तमौणादिकं च ॥ एवमेभिरालोचनादिभिः कृच्छ्रैस्तपोविशेषैर्जनितात्प्रमादः तं व्यतिक्रमं प्रायश्चेतयति, चेतयंश्च न पुनराचरतीति । अतः प्रायश्चित्तमपराधो वा प्रायस्तेन विशुध्यत इति । अतश्च प्रायश्चित्तमिति ॥ २२ ॥

टी०—चिती सञ्ज्ञानविशुद्धयोर्धातुरित्यादि । भीमसेनात् परतोऽन्यैर्वैयाकरणैरर्थद्वये पठितो धातुः सञ्ज्ञाने विशुद्धौ च । इह विशुद्ध्यर्थस्य सह सञ्ज्ञानेन ग्रहणम् । अथवाऽनेकार्था धातव' इति सञ्ज्ञाने पठितो विशुद्धावपि वर्तते । भाष्यकृता चोपयुज्यमानमेवार्थमभिसन्धाय विशुद्धिरपि पठिता तस्य चित्तमिति रूपं भवति निष्ठान्तमौणादिकं च चेततीति चित्तं विशुद्धयतीत्यर्थः । भावविशुद्धिमुपजायमानां सञ्जानीते चेतति—प्रणिदधान इति । 'अञ्जिघृसिभ्यः क्तः' ( उणादिसूत्रे ३७७ ) क्तस्य च निष्ठासञ्ज्ञा । औणादिकं चैतच्छब्दरूपं चित्तमिति नान्यलक्षणमन्वेष्यम् 'उणादयो बहुलं' ( पा० अ० ३, पा० ३, सू० १ ) इति चितेरपि क्तः कर्तरि । केन पुनः प्रकारेण विशुद्धिरित्याह—एवमेभिरित्यादि । उक्तलक्षणैरालोचनादिभिः पाराञ्चिकावसानैः कृच्छ्रैः—दुष्करैस्तपोविशेषैर्जनितात्प्रमादः कृतप्रमादः, अप्रमत्त इत्यर्थः । तं च मूलोत्तरविषयं व्यतिक्रममतिचारमुपयुक्तः प्रायो—बाहुल्येन चेतयति । प्रायोग्रहणमत्यन्तसूक्ष्मातिचारव्युदासार्थम् । चेतयंश्च—सञ्जानानो न पुनराचरति—आसेवते तादृशमपराधमित्यतः प्रायश्चित्तमुच्यते । प्रायःशब्देन वाऽपराधोऽभिधीयते । तेनालोचनादिना सूत्रविहितेन सोऽपराधो विशुद्धयत्यपीति । अतश्च—अस्माच्च हेतोः प्रायश्चित्तमिति ॥ २२ ॥

उक्तं प्रायश्चित्तम् । अधुना विनयोऽभिधीयते । तत्प्रतिपादनायाह—

विनयस्य चातुर्विध्यम्

सूत्रम्—ज्ञानदर्शनचारित्रोपचाराः ॥ ९–२३ ॥

भा०—विनयश्चतुर्भेदः । तद्यथा—ज्ञानविनयः, दर्शनविनयः, चारित्रविनयः, उपचारविनय इति । तत्र ज्ञानविनयः पञ्चविधो मतिज्ञानादिः ।

टी०—ज्ञानादयः कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टाः । एतद्विवरणायाह—विनयश्चतुर्भेद इति । विनयनिर्वचनमुपरि व्याख्यास्यते तांश्चतुर्धा भेदान्नामग्राहमाचष्टे । तद्यथाशब्दस्तदुपन्यासार्थः । ज्ञानविनय इत्यादि । तत्र—तेषु चतुर्षु भेदेषु ज्ञानविनयस्तावत् पञ्च-

---

१ 'चिती सञ्ज्ञाने' इति पाणिनीये (धा० ३९)। २ 'महणमा' इति ङ-पाठः।

ज्ञानविनयस्य पञ्चविधत्वम्

विधो मतिज्ञानादिः। आदिग्रहणात् श्रुता-ऽवधि-मनःपर्याय-केवलज्ञानपरिग्रहः । अस्मिन् सति ज्ञानादिपञ्चके भक्तिर्बहुमानो ज्ञानस्वरूपश्रद्धानं तद्विषयं श्रद्धानं च ज्ञानविनयः । श्रुते च विशेषः—"काले विणए वहुमाणे उवहाणे" इत्यादि ॥

दर्शनविनयस्य एकविधत्वम्

**भा०—दर्शनविनयस्त्वेकविध एव सम्यग्दर्शनविनयः ।**

टी०—दर्शनविनयस्त्वेकविध एव । "तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्" (अ० १, सू० २) इत्येकलक्षणत्वादेकविध एव सम्यग्दर्शनविनयः । तथाऽर्हत्प्रणीतस्य च धर्मस्याचार्योपाध्याय-स्थविर-कुल-गण-सङ्घ-साधु-संभोगा(मनोज्ञा १)नां चानासादनाप्रशम-संवेग-निर्वेदानुकम्पाऽऽस्तिक्यानि च सम्यग्दर्शनविनय इति ॥

**भा०—चारित्रविनयः पञ्चविधः। सामायिकविनयादिः । औपचारिकविनयोऽनेकविधः—**

टी०—सामायिकादयः प्रागुक्तलक्षणाः सामायिकादिस्वरूपश्रद्धानपूर्वकं चानुष्ठानविधिना च प्ररूपणमित्येष चारित्रविनयः। औपचारिकेत्यादि। उपचरणं उपचारः–श्रद्धानपूर्वकः क्रियाविशेषलक्षणो व्यवहारः, स प्रयोजनमस्येत्यौपचारिकः । स चानेकप्रकारः । तस्य विषयनिर्देशार्थमाह—

**भा०—सम्यग्दर्शनज्ञानचारित्रादिगुणाधिकेषु अभ्युत्थानासनप्रदानवन्दनानुगमनादिः। विनीयते तेन तस्मिन् वा विनयः ॥ २३ ॥**

टी०—सम्यग्दर्शनेत्यादि । सम्यक्त्वज्ञानचरणानि गुणास्तैरभ्यधिका ये मुनयः । आदिग्रहणाद् दशविधसामाचारीसम्पत्परिग्रहः तेषु। अभ्युत्थानासनप्रदानेत्यादि। अभिमुखमागच्छति गुणाधिके उत्थानमासनादभ्युत्थानं अदृष्टपूर्वे च साधुवेषभाजि कार्यमभ्युत्थानम् तदनन्तरमासनप्रदानं ततो वन्दनप्रतिपत्तिः। गच्छतः कतिचित् पदान्यनुगमनमनुव्रजनम् । आदिग्रहणान्मुकुलितकरकमलद्वयस्य ललाटदेशे न्यासोऽञ्जलिप्रग्रहः, वस्त्रादिपूजासत्कारः। सद्भूतगुणोत्कीर्तनं सन्मानः। विनयशब्दनिर्भेदप्रदर्शनायाह—विनीयते–क्षिप्यतेऽनेनाष्टप्रकारं कर्मेति विनयः। पचाद्यचि करणसाधनम्। विनीयते चास्मिन् सति ज्ञानावरणादिरजोराशिरिति विनयः। अधिकरणसाधने च ॥ २३ ॥

---

१ सम्पूर्णा गाथा तच्छाया चैवम्—

" काले विणए बहुमाणे उवहाणे तह अनिन्हवणे ।
वंजण अत्थ तदुभए अट्ठविहो नाणमायारो ॥ "
[ काले विनये बहुमाने उपधाने तथा अनिह्नवने ।
व्यञ्जनेऽर्थे तदुभये अष्टविधो ज्ञाने आचारः ॥ ]

सम्प्रति प्रायश्चित्तमिति शब्दं व्युत्पादयति—

प्रायश्चित्तशब्दस्य व्युत्पादनम्

भा०—'चिती सञ्ज्ञानविशुद्ध्योः' धातुः । तस्य चित्तमिति भवति निष्ठान्तमौणादिकं च ॥ एवमेभिरालोचनादिभिः कृच्छ्रैस्तपोविशेषैर्जनिताप्रमादः तं व्यतिक्रमं प्रायश्चेतयति, चेतयंश्च न पुनराचरतीति । अतः प्रायश्चित्तमपराधो वा प्रायस्तेन विशुध्यत इति । अतश्च प्रायश्चित्तमिति ॥ २२ ॥

टी०—चिती सञ्ज्ञानविशुद्ध्योर्धातुरित्यादि । भीमसेनात् परतोऽन्यैर्वैयाकरणैरर्थद्वये पठितो धातुः सञ्ज्ञाने विशुद्धौ च । इह विशुद्ध्यर्थस्य सह सञ्ज्ञानेन ग्रहणम् । अथवा'ऽनेकार्था धातव' इति सञ्ज्ञाने पठितो विशुद्धावपि वर्तते । भाष्यकृता चोपयुज्यमानमेवार्थमभिसन्धाय विशुद्धिरपि पठिता तस्य चित्तमिति रूपं भवति निष्ठान्तमौणादिकं च चेततीति चित्तं विशुद्ध्यतीत्यर्थः । भावविशुद्धिमुपजायमानां सञ्जानीते चेतविप्रणिधान इति । 'अञ्जिघृसिभ्यः क्तः' ( उणादिसूत्रे ३७७ ) क्तस्य च निष्ठासञ्ज्ञा । औणादिकं चैतच्छब्दरूपं चित्तमिति नान्यलक्षणमन्वेष्यम् 'उणादयो बहुलं' ( पा० अ० ३, पा० ३, सू० १ ) इति चितेरपि क्तः कर्तरि । केन पुनः प्रकारेण विशुद्धिरित्याह—एवमेभिरित्यादि । उक्तलक्षणैरालोचनादिभिः पाराञ्चिकावसानैः कृच्छ्रैः–दुष्करैस्तपोविशेषैर्जनिताप्रमादः कृताप्रमादः, अप्रमत्त इत्यर्थः । तं च मूलोत्तरविषयं व्यतिक्रममतिचारमुपयुक्तः प्रायो–बाहुल्येन चेतयति । प्रायोग्रहणमत्यन्तसूक्ष्मातिचारव्युदासार्थम् । चेतयंश्च–सञ्जानानो न पुनराचरति–आसेवते तादृशमपराधमित्यतः प्रायश्चित्तमुच्यते । प्रायःशब्देन वाऽपराधोऽभिधीयते । तेनालोचनादिना सूत्रविहितेन सोऽपराधो विशुद्ध्यत्यपीति । अतश्च–अस्माच्च हेतोः प्रायश्चित्तमिति ॥ २२ ॥

उक्तं प्रायश्चित्तम् । अधुना विनयोऽभिधीयते । तत्प्रतिपादनायाह—

विनयस्य चातुर्विध्यम्

## सूत्रम्—ज्ञानदर्शनचारित्रोपचाराः ॥ ९–२३ ॥

भा०—विनयश्चतुर्भेदः । तद्यथा—ज्ञानविनयः, दर्शनविनयः, चारित्रविनयः, उपचारविनय इति । तत्र ज्ञानविनयः पञ्चविधो मतिज्ञानादिः ।

टी०—ज्ञानादयः कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टाः । एतद्विवरणायाह—विनयश्चतुर्भेद इति । विनयनिर्वचनमुपरि व्याख्यास्यते तांश्चतुर्धा भेदान्नामग्राहमाचष्टे । तद्यथाशब्दस्तदुपन्यासार्थः । ज्ञानविनय इत्यादि । तत्र–तेषु चतुर्षु भेदेषु ज्ञानविनयस्तावत् पञ्च-

१ 'चिती सञ्ज्ञाने' इति पाणिनीये ( धा० ३९ ) । २ 'महणमा' इति ङ-पाठः ।

ज्ञानविनयस्य पञ्चविधत्वम्

विधो मतिज्ञानादिः। आदिग्रहणात् श्रुता-ऽवधि-मनःपर्याय-केवलज्ञानपरिग्रहः। अस्मिन् सति ज्ञानादिपञ्चके भक्तिर्बहुमानो ज्ञानस्वरूपश्रद्धानं तद्विषयं श्रद्धानं च ज्ञानविनयः। श्रुते च विशेषः—"[1]काले विणए बहुमाणे उवहाणे" इत्यादि ॥

दर्शनविनयस्य एकविधत्वम्

**भा०—दर्शनविनयस्त्वेकविध एव सम्यग्दर्शनविनयः।**

टी०—दर्शनविनयस्त्वेकविध एव। "तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्" (अ० १, सू० २) इत्येकलक्षणत्वादेकविध एव सम्यग्दर्शनविनयः। तथाऽर्हत्प्रणीतस्य च धर्मस्याचार्योपाध्याय-स्थविर-कुल-गण-सङ्घ-साधु-संभोगा(मनोज्ञा ?)नां चानासादनाप्रशम-संवेग-निर्वेदानुकम्पाऽऽस्तिक्यानि च सम्यग्दर्शनविनय इति ॥

**भा०—चारित्रविनयः पञ्चविधः। सामायिकविनयादिः। औपचारिकविनयोऽनेकविधः—**

टी०—सामायिकादयः प्रागुक्तलक्षणाः सामायिकादिस्वरूपश्रद्धानपूर्वकं चानुष्ठानविधिना च प्ररूपणमित्येष चारित्रविनयः। औपचारिकेत्यादि। उपचरणं उपचारः—श्रद्धानपूर्वकः क्रियाविशेषलक्षणो व्यवहारः, स प्रयोजनमस्येत्यौपचारिकः। स चानेकप्रकारः। तस्य विषयनिर्देशार्थमाह—

**भा०—सम्यग्दर्शनज्ञानचारित्रादिगुणाधिकेषु अभ्युत्थानासनप्रदानवन्दनानुगमनादिः। विनीयते तेन तस्मिन् वा विनयः ॥ २३ ॥**

टी०—सम्यग्दर्शनेत्यादि। सम्यक्त्वज्ञानचरणानि गुणास्तैरभ्यधिका ये मुनयः। आदिग्रहणाद् दशविधसामाचारीसम्पत्परिग्रहः तेषु। अभ्युत्थानासनप्रदानेत्यादि। अभिमुखमागच्छति गुणाधिके उत्थानमासनादभ्युत्थानं अदृष्टपूर्वे च साधुवेषभाजि कार्यमभ्युत्थानम् तदनन्तरमासनप्रदानं ततो वन्दनप्रतिपत्तिः। गच्छतः कतिचित् पदान्यनुगमनमनुव्रजनम्। आदिग्रहणान्मुकुलितकरकमलद्वयस्य ललाटदेशे न्यासोऽञ्जलिप्रग्रहः, वस्त्रादिपूजासत्कारः। सद्भूतगुणोत्कीर्तनं सन्मानः। विनयशब्दनिर्भेदप्रदर्शनायाह—विनीयते—क्षिप्यतेऽनेनाष्टप्रकारं कर्मेति विनयः। पचाद्यचि करणसाधनम्। विनीयते चास्मिन् सति ज्ञानावरणादिरजोराशिरिति विनयः। अधिकरणसाधने च ॥ २३ ॥

---

१ सम्पूर्णा गाथा तच्छाया चैवम्—

" काले विणए बहुमाणे उवहाणे तह अनिन्हवणे।
वंजण अत्थ तदुभए अट्ठविहो नाणमायारो ॥ "
[ काले विनये बहुमाने उपधाने तथा अनिह्नवने।
व्यञ्जनेऽर्थे तदुभये अष्टविधो ज्ञाने आचारः ॥ ]

सम्प्रति वैयावृत्त्यमुच्यते—

वैयावृत्त्यस्य दशविधता

सूत्रम्—आचार्योपाध्याय-तपस्वि-शैक्षक-ग्लान-गण-कुल-सङ्घ-साधु-समनोज्ञानाम् ॥ ९–२४ ॥

टी०—आचार्यादीनां समनोज्ञानानां द्वन्द्वानां षष्ठीबहुवचनेन निर्देशः ॥

भा०—वैयावृत्त्यं दशविधम्। तद्यथा—आचार्यवैयावृत्त्यं, उपाध्यायवैयावृत्त्यं, तपस्विवैयावृत्त्यं, शिक्षकवैयावृत्त्यं, ग्लानवैयावृत्त्यं, गणवैयावृत्त्यं, कुलवैयावृत्त्यं, सङ्घवैयावृत्त्यं, साधुवैयावृत्त्यं, समनोज्ञवैयावृत्त्यं, इति व्यावृत्तभावो वैयावृत्त्यमिति व्यावृत्तकर्म वा ॥

टी०—वैयावृत्त्यं दशविधमित्यादि। आचार्यादिभेदाद् दशधा। तान् दश प्रकारान् नामग्राहमाख्याति—आचार्यवैयावृत्त्यमित्यादिना। वैयावृत्त्यशब्दव्युत्पादनायाह—व्यावृत्तेत्यादि। व्यावृत्तो-व्यापारप्रवृत्तः, प्रवचनचोदितक्रियाविशेषानुष्ठानपरः, तस्य यो भावः-तथाभवनं तथापरिणामस्तद्वैयावृत्त्यम्। व्यावृत्तकर्म चेति। तथाभूतस्य यत् कर्म क्रियते तद् वैयावृत्त्यम्। पूर्वत्र क्रियाक्रियावतोः प्राधान्यमुत्तरत्र क्रियाया इति। तत्र वैयावृत्त्यं यथासम्भवं क्षेत्रवसतिप्रत्यवेक्षणभक्तपानवस्त्रपात्रभेषजशरीरशुश्रूषणतदादेशगमनविद्यामन्त्रप्रयोगसाध्यादिः। आचार्याद्युद्देशेनाचार्यादीनां यत् कर्तव्यं तत्र व्यग्रता ॥

भा०—तत्राचार्यः पूर्वोक्तः (अ० ९, सू० ६) पञ्चविधः। आचारगोचरविनयं स्वाध्यायं वाऽऽचार्यादनु तस्मादुपाधीयत इत्युपाध्यायः, सङ्ग्रहोपग्रहानुग्रहार्थं चोपाधीयते सङ्ग्रहादीन् वाऽस्योपाध्येतीत्युपाध्यायः। द्विसङ्ग्रहो निर्ग्रन्थः आचार्योपाध्यायसंग्रहः। त्रिसङ्ग्रहा निर्ग्रन्था आचार्योपाध्याय-प्रवर्तिनीसङ्ग्रहाः ॥

उपाध्यायशब्दस्य अर्थः

टी०—आचार्यः पूर्वोक्तः पञ्चविध इत्यादि। आचरत्याचरयति वेत्याचार्यः। 'कृत्यल्युटो बहुलं' (पा० अ० ३, पा० ३, सू० ११३) वचनात्। पूर्वोक्त इति ('उत्तमः) क्षमामार्दवा'दिसूत्रे (पृ० १८९) पञ्चप्रकारः—प्रव्राजकः १ दिगाचार्यः २ श्रुतोद्देष्टा ३ श्रुतसमुद्देष्टा ४ आम्नायवाचक५श्चेति। आचारो ज्ञानादिभेदः पञ्चधा। तस्य गोचरो-विषयो यथास्वं तद्विषयो विनयस्तमाचारगोचरविनयं स्वाध्यायं पञ्चप्रकारं वक्ष्यमाणं आचार्याल्लब्धानुज्ञाः साधवोऽनु-पश्चात् तस्मादुपाधीयत इत्युपाध्यायः अपादानसाधनो घञ्। सङ्ग्रहोपग्रहानुग्रहार्थं चेति। वस्त्रपात्रप्रदानात् सङ्ग्रहः। अन्नपानभेषजप्रदानाद् उपग्रहः। एतदर्थं चोपाधीयते—सेव्यत

---

१ 'च' इति घ-पाठः। २ 'तत्क्रियाया' इति ङ-पाठः।

इत्युपाध्यायः पृषोदरादित्वात्। सङ्ग्रहादीन् चाऽस्योपाध्येतीति संग्रहोपग्रहानुग्रहान् वाऽस्य सम्बन्धिनस्तत्समीपभवांस्तत्कृतानुपाध्येति स्मरतीति उपाध्यायः द्विसङ्ग्रहो निर्ग्रन्थ इति। सङ्गृह्यतेऽनेनेति सङ्ग्रहः। द्वाभ्यां सङ्गृह्यते इत्यर्थः॥

का पुनरियं प्रवर्तनीत्याह—

**भा०—प्रवर्तनी दिगाचार्येण व्याख्याता। हिताय प्रवर्तते प्रवर्तयति चेति प्रवर्तनी॥**

टी०—**प्रवर्तनी दिगाचार्येण व्याख्यातेति।** दिगाचार्यो दिशामनुजानाति। सचित्ताचित्तमिश्रप्रदायीत्यर्थः। तेन व्याख्याता तत्सदृशी द्रष्टव्या श्रुतसकलनिशीथाध्ययना-समुचितकल्पव्यवहारस्तत्र ग्राहिणी संविग्ना प्राप्तदिगनुज्ञा चात्महिताय **प्रवर्तते** निःश्रेयसायैव घटते। अन्यांश्च **प्रवर्तयति** साध्वीः स्मारणावधारणवारणादिप्रयोगेणेति **प्रवर्तनी**॥

**भा०—विकृष्टोग्रतपोयुक्तस्तपस्वी। अचिरप्रव्रजितः शिक्षयितव्यः शिक्षः, शिक्षामर्हतीति शैक्षो वा। ग्लानः प्रतीतः। गणः स्थविरसन्ततिसंस्थितिः। कुलं एकाचार्यसन्ततिसंस्थितिः। सङ्घश्चतुर्विधः श्रमणादिः। साधवः-संयताः। सम्भोगयुक्ताः समनोज्ञाः॥**

टी०—**विकृष्टेत्यादि।** विकृष्टं-दशमादि किञ्चिन्न्यूनषण्मासान्तं उग्रं-भावविशुद्ध-मनिश्रितमल्पसत्त्वस्य वा भयानकमुग्रं तपस्तेन **युक्तस्तपस्वीति**। **अचिरप्रव्रजित इत्यादि।** आद्यपश्चिमतीर्थयोर्मध्यमतीर्थेषु च कतिचिदहानि प्रतिपन्नस्य सामायिकस्य गतानि यस्य सोऽ-चिरप्रव्रजितः। अनारोपितविविक्तव्रतो वा ग्रहणासेवनशिक्षासुभयीं **शिक्षयितव्यः शिक्षः। शिक्षामर्हतीति।** वा शिक्षाशीलो **वा शैक्षः।** छत्रादित्वाण्णप्रत्ययः। **ग्लानो** मन्दोऽ-पटुर्व्याध्यभिभूतः। **प्रतीतः**-सुज्ञात एवेत्यर्थः। कुलानि स्थानीयादीनि। कुलं-समुदायः। **गणः-स्थविरसन्ततिसंस्थितिः।** स्थविरग्रहणेन श्रुतस्थविरपरिग्रहः, न वयसा पर्यायेण वा, तेषां सन्ततिः-परम्परा तस्याः संस्थानं-वर्तनं अद्यापि भवनं **संस्थितिः कुलमाचार्य-सन्ततिसंस्थितिः** एकाचार्यप्रणेयसाधुसमूहो गच्छः। बहूनां गच्छानां एकजातीयानां समूहः कुलम्। तत्र ये आचार्यगुणोपेतास्तत्सन्तति-संस्थितिः कुलं तेषां प्राधान्यम्। **सङ्घश्चतुर्विधः**—साधु-साध्वी-श्रावक-श्राविकाः। तत्र ये व्यवस्थिताः ज्ञान-दर्शन-चरणगुणास्ते परमार्थतः सङ्घः **श्रमणादिरिति**। 'पुरुषोत्तरो धर्मः' इति ज्ञापनार्थमुक्तम्। **साधवः संयता इति।** ज्ञानादिलक्षणाभिः पौरुषेयीभिः शक्तिभिः साध-

(हाशिये में: गच्छ-कुलयोरर्थः)

१ 'अविरते प्रव्रजित' इति घ-पाठः। २ 'आचार्य०' इति घ-पाठः। ३ 'गुणो यस्तत्' इति ङ-पाठ। ४ "धम्मो पुरिसप्पभवो पुरिसवरदेसिओ पुरिसजिट्ठो। लोए वि पहू पुरिसो किं पुण लोगुत्तमे धम्मे ?॥" इत्युल्लेख उपदेशमालायां ( गा० १६ )। ५ 'ऽक्ष्याभिः' इति ग-पाठः।

सम्प्रति वैयावृत्त्यमुच्यते—

वैयावृत्त्यस्य दशविधता

सूत्रम्—आचार्यो-पाध्याय-तपस्वि-शैक्षक-ग्लान-गण-कुल-सङ्घ-साधु-समनोज्ञानाम् ॥ ९–२४ ॥

टी०—आचार्यादीनां समनोज्ञान्तानां कृतद्वन्द्वानां षष्ठीबहुवचनेन निर्देशः ॥

भा०—वैयावृत्त्यं दशविधम्। तद्यथा—आचार्यवैयावृत्त्यं, उपाध्यायवैयावृत्त्यं, तपस्विवैयावृत्त्यं, शिक्षकवैयावृत्त्यं, ग्लानवैयावृत्त्यं, गणवैयावृत्त्यं, कुलवैयावृत्त्यं, सङ्घवैयावृत्त्यं, साधुवैयावृत्त्यं, समनोज्ञवैयावृत्त्यं, इति व्यावृत्तभावो वैयावृत्त्यमिति व्यावृत्तकर्म वा ॥

टी०—वैयावृत्त्यं दशविधमित्यादि। आचार्यादिभेदाद् दशधा। तान् दश प्रकारान् नामग्राहमाख्याति—आचार्यवैयावृत्त्यमित्यादिना। वैयावृत्त्यशब्दव्युत्पादनायाह—व्यावृत्तेत्यादि। व्यावृत्तो-व्यापारप्रवृत्तः, प्रवचनचोदितक्रियाविशेषानुष्ठानपरः, तस्य यो भावः—तथाभवनं तथापरिणामस्तद्वैयावृत्त्यम्। व्यावृत्तकर्म चेति। तथाभूतस्य यत् कर्म क्रियते तद् वैयावृत्त्यम्। पूर्वत्र क्रियाक्रियावतोः प्राधान्यमुत्तरत्र क्रियाया इति। तच्च वैयावृत्त्यं यथासम्भवं क्षेत्रवसतिप्रत्यवेक्षणभक्तपानवस्त्रपात्रभेषजशरीरशुश्रूषणतदादेशगमनविद्यामन्त्रप्रयोगसाध्यादिः। आचार्याद्युद्देशेनाचार्यादीनां यत् कर्तव्यं तत्र व्यग्रता ॥

भा०—तत्राचार्यः पूर्वोक्तः (अ० ९, सू० ६) पञ्चविधः। आचारगोचरविनयं स्वाध्यायं वाऽऽचार्यादनु तस्मादुपाधीयत इत्युपाध्यायः, सङ्ग्रहोपग्रहानुग्रहार्थं चोपाधीयते सङ्ग्रहादीन् वाऽस्योपाध्येतीत्युपाध्यायः। द्विसङ्ग्रहो निर्ग्रन्थः आचार्यो-पाध्यायसंग्रहः। त्रिसङ्ग्रहा निर्ग्रन्था आचार्यो-पाध्याय-प्रवर्तिनीसङ्ग्रहाः ॥

उपाध्यायशब्दस्य अर्थः

टी०—आचार्यः पूर्वोक्तः पञ्चविध इत्यादि। आचरत्याचरयति वेत्याचार्यः। 'कृत्यल्युटो बहुलं' (पा० अ० ३, पा० ३, सू० ११३) वचनात्। पूर्वोक्त इति ('उत्तमः) क्षमामार्दवा'दिसूत्रे (पृ० १८९) पञ्चप्रकारः—प्रव्राजकः १ दिगाचार्यः २ श्रुतोद्देष्टा ३ श्रुतसमुद्देष्टा ४ आम्नायवाचक ५ श्चेति। आचारो ज्ञानादिभेदः पञ्चधा। तस्य गोचरो-विषयो यथास्वं तद्विषयो विनयस्तमाचारगोचरविनयं स्वाध्यायं पञ्चप्रकारं वक्ष्यमाणं आचार्याल्लब्धानुज्ञाः साधवोऽनु-पश्चात् तस्मादुपाधीयत इत्युपाध्यायः अपादानसाधनो घञ्। सङ्ग्रहोपग्रहानुग्रहार्थं चेति। -वस्त्रपात्रप्रदानात् सङ्ग्रहः। अन्नपानभेषजप्रदानाद् उपग्रहः। एतदर्थं चोपाधीयते—सेव्यत

१ 'च' इति घ–पाठः। २ 'तत्क्रियाया' इति ङ–पाठः।

अधुना व्युत्सर्गो व्याख्यायते—

## सूत्रम्—बाह्या-ऽभ्यन्तरोपध्योः ॥ ९-२६ ॥

**भा०—व्युत्सर्गो द्विविधः-बाह्योऽभ्यन्तरश्च। तत्र बाह्यो द्वादशरूपकस्योपधेः। अभ्यन्तरः शरीरस्य कषायाणां चेति ॥ २६ ॥**

**टी०—व्युत्सर्गो द्विविध** इत्यादि। विविधस्योत्सर्गो व्युत्सर्गः। संसक्तासंसक्तपानादेः विधिना प्रवचनविहितेनोत्सर्गो **व्युत्सर्गः**। स द्विप्रकारः **बाह्या-ऽभ्यन्तरभेदात्**। तत्र तयोर्बाह्यस्य तावद् **द्वादशरूपकस्योपधेः** पात्रतद्बन्धपात्रस्थापनादीनि द्वादश रूपाण्यस्येति द्वादशरूपकः। उपग्राहकत्वादुपकारत्वादुपधिः। **अभ्यन्तरः शरीरस्य कषायाणां चेति**। शरीरस्य पर्यन्तकाले विज्ञायाकिञ्चित्करत्वं शरीरकं परित्यजति-उज्झति। यथोक्तम् ( भग० श० २, उ० १, सू० ९५ )-"जं पि य इमं सरीरं इट्ठं कंतं"[1] इत्यादि। क्रोधादयः कषायाः संसारपरिभ्रमणहेतवः तेषां व्युत्सर्गः-परित्यागो मनो-वाक्-कायैः कृत-कारिता-ऽनुमतिभिश्चेति ॥ २६ ॥

सम्यक्त्वादित्रयं मोक्षसाधनं, तत्रापि ध्यानं गरीयस्तन्निरूपणायाह—

ध्यानस्य लक्षणम्

## सूत्रम्—उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानम् ॥ ९-२७ ॥

**भा०—उत्तमसंहननं वज्रर्षभनाराचं वज्रनाराचं नाराचं अर्धनाराचं च[2]। तद्युक्तस्यैकाग्रचिन्तानिरोधश्च ध्यानम् ॥ २७ ॥**

**टी०—उत्तमं**-प्रकृष्टं **संहननम्**-अस्थ्नां बन्धविशेषः। उत्तमं संहननमस्येत्युत्तमसंहननं, तदुत्तमसंहननं चतुर्विधं वज्रर्षभनाराचं वज्रनाराचं नाराचं अर्धनाराचम्। वज्रं-कीलिका[3], ऋषभः-पट्टः, नाराचो-मर्कटबन्धः। प्रथमं त्रितययुक्तम्[4]। द्वितीयसंहनने पट्टो नास्ति। तृतीये वज्रर्षभौ न स्तः। ततो वज्रर्षभं अर्धवज्रर्षभं नाराचं चेत्यनेन चत्वारो भेदाः प्रतिपाद्याः उत्तमसंहननवाच्याः। उत्तमसंहननग्रहणं निरोधे कार्ये प्रतिविशिष्टसामर्थ्यप्रतिपादनार्थम्। तस्यो-त्तमसंहननस्य **एकाग्रचिन्तानुरोधो ध्यानम्**। अग्रम्-आलम्बनं एकं च तदग्रं चेत्येकाग्रं, एकालम्बनमित्यर्थः। एकस्मिन्नालम्बने चिन्तानिरोधः। चलं चित्तमेव चिन्ता, तन्निरोधस्तस्यैकत्रावस्थापनमन्यत्राप्रचारो[5] निरोधः। अतो निश्चलं स्थिरमध्यवसानमेकालम्बनं छद्मस्थविषयं ध्यानम्। केवलिनां पुनर्वाक्काययोगनिरोध एव ध्यानम्, अभावान्मनसः। नह्यवाप्तकेवलस्य

---

1 छाया—

यदपि च इदं शरीरमिष्टं कान्तम्।

२ 'भमर्धवज्रनाराचं च' इति घ-पाठः। ३ 'नाराचं कीलका' इति ग-पाठः। ४ 'त्रिनयन' इति च-पाठः। ५ 'मन्यत्राथवा निरोधः' इति च-पाठः।

यन्तीति साधवो मोक्षम्, संयता इति मूलोत्तरगुणसम्पन्नाः द्वादशविधसम्भोगभाजः समनोज्ञाः ज्ञानदर्शनचारित्राणि मनोज्ञानि सह मनोज्ञैः समनोज्ञाः तानि तानि वा सम्भोगकारणानि संविग्नेष्वपि विद्यन्ते ॥

भा०—एषामन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसंस्तारादिभिर्धर्मसाधनैरुपग्रहः शुश्रूषा भेषजक्रिया कान्तारविषमदुर्गोपसर्गेषु अभ्युपपत्तिरित्येतदादि वैयावृत्त्यम् ॥ २४ ॥

टी०—एषामित्यादि । आचार्यादयः समनोज्ञान्ताः सम्बध्यन्ते एषामित्यनेन । अन्नपानादयः प्रसिद्धाः तैरुपग्रहः—उपकारः । शुश्रूषा-विश्रामणादिका । भेषजक्रिया-मान्द्ये सति तदनुरूपभेषजसम्पादनम् । कान्तारम्-अरण्यम् । श्वापदबहुलत्वाद् विषमदुर्गं-गर्ताकूपकण्टकादिप्रचितम् । उपसर्गो-ज्वरातीसार-कास-श्वास-मरकादिः । अभ्युपपत्तिः—अभ्युद्धरणं परिपालनं परिरक्षणमन्नपानादि(भिः) यत् तद् वैयावृत्त्यमिति ॥ २४ ॥

सम्प्रति स्वाध्यायोऽभिधीयते—

स्वाध्यायस्य पञ्चविधत्वम्

सूत्रम्—वाचना-प्रच्छना-ऽनुप्रेक्षा-ऽऽम्नाय-धर्मोपदेशाः ॥ ९–२५ ॥

भा०—स्वाध्यायः पञ्चविधः। तद्यथा—वाचना, प्रच्छनं, अनुप्रेक्षा, आम्नायः, धर्मोपदेश इति। तत्र वाचनं शिष्याध्यापनम्। प्रच्छनं ग्रन्थार्थयोः। अनुप्रेक्षा ग्रन्थार्थयोरेव मनसाऽभ्यासः। आम्नायो घोषविशुद्धं परिवर्तनं गुणनं, रूपादानमित्यर्थः। अर्थोपदेशो व्याख्यानं अनुयोगवर्णनं धर्मोपदेश इत्यनर्थान्तरम् ॥ २५ ॥

धर्मोपदेशस्य पर्यायाः

टी०—स्वाध्यायः पञ्चविध इत्यादि । तद्यथेत्यनेन भेदपञ्चकोपन्यासं सूचयति । तत्र वाचनेत्यादि । शिष्याणामध्यापनं वाचना कालिकस्योत्कालिकस्य वाऽऽलापकप्रदानम् । ग्रन्थः सूत्रार्थः सूत्राभिधेयं तद्विषयं प्रच्छनम् । सन्देहे सति ग्रन्थार्थयोर्मनसाऽभ्यासोऽनुप्रेक्षा । न तु बहिर्वर्णोच्चारणमनुश्रावणीयम् । आम्नायोऽपि परिवर्तनं उदात्तादिपरिशुद्धमनुश्रावणीयमभ्यासविशेषः। गुणनं—सङ्ख्यानं पदाक्षरद्वारेण रूपादानमेकरूपम् । एका परिपाटी द्वे रूपे त्रीणि रूपाणीत्यादि। धर्मोपदेशस्तु सूत्रार्थकथनं व्याख्यानमनुयोगवर्णनमनुयोगद्वारप्रक्रमेण श्रुतचरणधर्मोपदेश इत्यनर्थान्तरमिति ॥ २५ ॥

---

१ 'म्नाया' इति ग-पाठः। २ 'मन्थः सूत्राभि०' इति ग-ङ-पाठः। ३ 'रुपदान०' इति क-पाठः।

अधुना व्युत्सर्गो व्याख्यायते—

सूत्रम्—बाह्या-ऽभ्यन्तरोपध्योः ॥ ९-२६ ॥

**भा०—व्युत्सर्गो द्विविधः-बाह्योऽभ्यन्तरश्च। तत्र बाह्यो द्वादशरूपकस्योपधेः। अभ्यन्तरः शरीरस्य कषायाणां चेति ॥ २६ ॥**

**टी०—व्युत्सर्गो द्विविध** इत्यादि। विविधस्योत्सर्गो व्युत्सर्गः। संसक्तासंसक्तपानादेः विधिना प्रवचनविहितेनोत्सर्गो व्युत्सर्गः। स द्विप्रकारः बाह्या-ऽभ्यन्तरभेदात्। तत्र तयोर्बाह्यस्य तावद् **द्वादशरूपकस्योपधेः** पात्रतद्बन्धपात्रस्थापनादीनि द्वादश रूपाण्यस्येति द्वादशरूपकः। उपग्राहकत्वादुपकारत्वादुपधिः। **अभ्यन्तरः शरीरस्य कषायाणां चेति**। शरीरस्य पर्यन्तकाले विज्ञायाकिञ्चित्करत्वं शरीरकं परित्यजति-उज्झति। यथोक्तम् ( भग० श० २, उ० १, सू० ९५ )-"जं पि य इमं सरीरं इट्ठं कंतं" इत्यादि। क्रोधादयः कषायाः संसारपरिभ्रमणहेतवः तेषां व्युत्सर्गः-परित्यागो मनो-वाक्-कायैः कृत-कारिता-ऽनुमतिभिश्चेति ॥ २६ ॥

सम्यक्त्वादित्रयं मोक्षसाधनं, तत्रापि ध्यानं गरीयस्तन्निरूपणायाह—

ध्यानस्य लक्षणम्

सूत्रम्—उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानम् ॥ ९-२७ ॥

**भा०—उत्तमसंहननं वज्रर्षभनाराचं वज्रनाराचं नाराचं अर्धनाराचं च। तद्युक्तस्यैकाग्रचिन्तानिरोधश्च ध्यानम् ॥ २७ ॥**

**टी०—उत्तमं**-प्रकृष्टं **संहननम्**-अस्थ्नां बन्धविशेषः। उत्तमं संहननमस्येत्युत्तमसंहननं, तदुत्तमसंहननं चतुर्विधं वज्रर्षभनाराचं वज्रनाराचं नाराचं अर्धनाराचम्। वज्रं-कीलिका, ऋषभः-पट्टः, नाराचो-मर्कटबन्धः। प्रथमं त्रितययुक्तम्। द्वितीयसंहनने पट्टो नास्ति। तृतीये वज्रर्षभौ न स्तः। ततो वज्रर्षभं अर्धवज्रर्षभं नाराचं चेत्यनेन चत्वारो भेदाः प्रतिपाद्याः उत्तमसंहननवाच्याः। उत्तमसंहननग्रहणं निरोधे कार्ये प्रतिविशिष्टसामर्थ्यप्रतिपादनार्थम्। तस्योत्तमसंहननस्य **एकाग्रचिन्तानुरोधो ध्यानम्**। अग्रम्-आलम्बनं एकं च तदग्रं चेत्येकाग्रं, एकालम्बनमित्यर्थः। एकस्मिन्नालम्बने चिन्तानिरोधः। चलं चित्तमेव चिन्ता, तन्निरोधस्तस्यैकत्रावस्थापनमन्यत्राप्रचारो निरोधः। अतो निश्चलं स्थिरमध्यवसानमेकालम्बनं छद्मस्थविषयं ध्यानम्। केवलिनां पुनर्वाक्काययोगनिरोध एव ध्यानम्, अभावान्मनसः। नह्यवाप्तकेवलस्य

१ छाया—

यदपि च इदं शरीरमिष्टं कान्तम्।

२ 'भमर्धवज्रनाराचं च' इति घ-पाठः। ३ 'नाराचं कीलका' इति ग-पाठः। ४ 'त्रिनयन' इति च-पाठः। ५ 'मन्यत्रायवा निरोधः' इति च-पाठः।

यन्तीति साधवो मोक्षम्, संयता इति मूलोत्तरगुणसम्पन्नाः द्वादशविधसम्भोगभाजः समनो-ज्ञानदर्शनचारित्राणि मनोज्ञानि सह मनोज्ञैः समनोज्ञाः तानि तानि वा सम्भोगकारणानि संविग्नेष्वपि विद्यन्ते ॥

भा०—एषामन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसंस्तारादिभिर्धर्मसाधनैरुपग्रहः शुश्रूषा भेषजक्रिया कान्तारविषमदुर्गोपसर्गेषु अभ्युपपत्तिरित्येतदादि वैयावृत्त्यम् ॥ २४ ॥

टी०—एषामित्यादि । आचार्यादयः समनोज्ञान्ताः सम्बन्ध्यन्ते एषामित्यनेन । अन्न-पानादयः प्रसिद्धाः तैरुपग्रहः—उपकारः । शुश्रूषा-विश्रामणादिका । भेषजक्रिया-मान्द्ये सति तदनुरूपभेषजसम्पादनम् । कान्तारम्-अरण्यम् । श्वापदसङ्कुलत्वाद् विषमदुर्गं-गर्ता-कूपकण्टकादिप्रचितम् । उपसर्गो-ज्वराऽतीसार-कास-श्वास-मरकादिः । अभ्युपपत्तिः—अभ्युद्धरणं परिपालनं परिरक्षणमन्नपानादि(भिः) यत् तद् वैयावृत्त्यमिति ॥ २४ ॥

सम्प्रति स्वाध्यायोऽभिधीयते—

स्वाध्यायस्य पञ्चविधत्वम्

सूत्रम्—वाचना-प्रच्छना-ऽनुप्रेक्षा-ऽऽम्नाय-धर्मोपदेशाः ॥ ९–२५ ॥

भा०—स्वाध्यायः पञ्चविधः । तद्यथा—वाचना, प्रच्छनं, अनुप्रेक्षा, आम्नायः, धर्मोपदेश इति । तत्र वाचनं शिष्याध्यापनम् । प्रच्छनं ग्रन्थार्थयोः । अनुप्रेक्षा ग्रन्थार्थयोरेव मनसाऽभ्यासः । आम्नायो घोषविशुद्धं परिवर्तनं गुणनं, रूपादानमित्यर्थः । अर्थोपदेशो व्याख्यानं अनुयोगवर्णनं धर्मोपदेश इत्यनर्थान्तरम् ॥ २५ ॥

धर्मोपदेशस्य पर्यायाः

टी०—स्वाध्यायः पञ्चविध इत्यादि । तद्यथेत्यनेन भेदपञ्चकोपन्यासं सूचयति । तत्र वाचनेत्यादि । शिष्याणामध्यापनं वाचना कालिकस्योत्कालिकस्य वाऽऽलापकप्रदानम् । ग्रन्थः सूत्रार्थः सूत्राभिधेयं तद्विषयं प्रच्छनम् । सन्देहे सति ग्रन्थार्थयोर्मनसाऽभ्यासोऽनुप्रेक्षा । न तु बहिर्वर्णोच्चारणमनुश्रावणीयम् । आम्नायोऽपि परिवर्तनं उदात्तादिपरिशुद्धमनुश्रावणीयमभ्यासविशेषः । गुणनं—सङ्ख्यानं पदाक्षरद्वारेण रूपादानमेकरूपम् । एका परिपाटी द्वे रूपे त्रीणि रूपाणीत्यादि । धर्मोपदेशस्तु सूत्रार्थकथनं व्याख्यानमनुयोगवर्णनमनुयोगद्वारक्रमेण श्रुतचरणधर्मोपदेश इत्यनर्थान्तरमिति ॥ २५ ॥

---

१ 'म्नाया' इति ग-पाठः । २ 'ग्रन्थः सूत्राभि०' इति ग-ङ-पाठः । ३ 'रूपदान०' इति क-पाठः ।

टी०—कृतद्वन्द्वान्यार्तादीनि नपुंसकबहुवचनेन निर्दिष्टानि—तच्चतुर्विधं भवतीत्यादि। तद्ध्यानं सामान्येन लक्षितं चतुर्विधं भवति—चतुर्धा भिद्यते। चतस्रो विधा यस्य तच्चतुर्विधम्। [1]विधाप्रदर्शनायाह—तद्यथेति। आर्तं, रौद्रं, धर्म्यं, शुक्लमिति। तत्रार्तस्य शब्दनिर्भेदाभिधानम्। ऋतशब्दो दुःखपर्यायवाच्याश्रीयते। अर्तेर्गमिक्रियापरिस्पन्दिनो निष्ठाप्रत्ययान्तः। तस्मादागतार्थे तद्धितप्रत्ययो णित्। आर्तं दुःखभवं दुःखानुबन्धि चेति। तथाचामनोज्ञविषयप्रयोगो दुःखम्। वेदना च नेत्रशिरोदशनादिका दुःखमेव। तथा मनोज्ञविषयविप्रयोगोऽशर्मैव। निदानमपि चित्तदुःखासिकयैव क्रियत इत्युपपन्नः प्रत्ययार्थः। तथा रोदयत्यपरानिति रुद्रो दुःखस्य हेतुः तेन कृतं तत्कर्म वा रौद्रं प्राणिवधबन्धपरिणत आत्मैव रुद्र इत्यर्थः। धर्मः क्षमादिदशलक्षणकस्तस्मादनपेतं धर्म्यम्। शुक्लं–शुचि निर्मलं सकलकर्मक्षयहेतुत्वादिति। शुग्वा दुःखमष्टप्रकारं कर्म तां च शुचं क्लमयति–ग्लपयति निरस्यति शुक्लं इत्येतावदेव ध्यानं चतुर्विधमिति ॥ २९ ॥

(आर्तादीनां व्युत्पत्तिः)

तेषामित्यनेन सूत्रं सम्बध्नाति—

## सूत्रम्—परे मोक्षहेतू ॥ ९–३० ॥

**भा०—तेषां चतुर्णां ध्यानानां परे धर्म्य–शुक्ले मोक्षहेतू भवतः। पूर्वे त्वार्तरौद्रे संसारहेतू इति ॥ ३० ॥**

टी०—तेषां चतुर्णामित्यादि। यानि प्रस्तुतानि ध्यानानि तेषामार्त-रौद्र-धर्म-शुक्लानां चतुर्णां ध्यानानां सूत्रसन्निवेशमाश्रित्य परे धर्म्य-शुक्ले मोक्षहेतू–मुक्तेः कारणतां प्रतिपद्येते। तत्रापि साक्षात् मुक्तेः कारणीभवतः। पाश्चात्यौ शुक्लध्यानभेदौ सूक्ष्मक्रियमप्रतिपाति व्युपरतक्रियां वा निवर्ति, धर्म्यध्यानं पुनराद्याभ्यां सह शुक्लभेदाभ्यां पारंपर्येण मोक्षस्य कारणं भवति, न साक्षादिति। ततश्चैतद्धर्म्यध्यानादि देवगतेर्मुक्तेश्च कारणं, न मुक्तेरेव। अर्थादिदमगम्यमानमाह—पूर्वे त्वार्तरौद्रे संसारहेतू इति। आर्त-रौद्रयोः संसारहेतुतैव, न जातुचिन्मुक्तिहेतुता। संसारश्च नारकादिभेदश्चतुर्गतिक इति। परमार्थतस्तु रागद्वेषमोहाः संसारहेतवः। तदनुगतं चार्तरौद्ररूपमपि प्रकृष्टतमरागद्वेषमोहभाजः, अतः संसारपरिभ्रमणहेतुता तयोरिति ॥ ३० ॥

**भा०—अत्राह—किमेषां लक्षणमिति ?। अत्रोच्यते—**

टी०—सम्प्रति ध्येयप्रकाराः विषयविषयिविकल्पनिमित्तभेदेनोच्यन्ते—अत्राहेत्यादि। सम्बन्धो लक्ष्यते येन तल्लक्षणं विलापशोकादि। अमनोज्ञविषयसम्बन्धे क्रन्दति शोचतीति लक्ष्यते आर्तध्यायी ॥

---

१ 'तत्प्रदर्शनाय' इति ख पाठः। 'विधानप्र०' इति च पाठः।

मनोव्यापारः समस्ति, सकलकरणग्रामनिरपेक्षत्वादिति । तदुक्तस्येति तेन प्रतिविशिष्टेन संह-ननत्रयेणाद्येन चतुर्विधेन वा शुक्लस्य-प्रशस्तस्य । एकाग्रचिन्तानिरोधः । अथवा वाक्-काय-निरोधश्च ध्यानम् । अत्र च ध्याता संसार्यात्मा ध्यानस्वरूपमेकाग्रचिन्तानिरोधः । ध्यातिर्ध्यान-मिति भावसाधनः । कालतो मुहूर्तमात्रं चतुःप्रकारमार्तादिभेदेन । ध्येयप्रकारास्त्वमनोज्ञविषय-संप्रयोगादयः । शोकाक्रन्दनविलपनादिलक्षणमार्तं, उत्सन्नवधादिलक्षणं रौद्रं, जिनप्रणीत-भावश्रद्धानादिलिङ्गं धर्म्यं, अबाधाऽसम्मोहादिलक्षणं शुक्लम् । फलं पुनस्तिर्यङ्नरकदेवगत्यादि-मोक्षाख्यमिति क्रमेण उत्तमसंहननपदार्थलभ्यो ध्याता अभिहितः । ध्यानस्वरूपं भावसाधनता च विज्ञेया ॥ २७ ॥

सम्प्रति ध्यानकालप्रमाणनिरूपणायाह—

ध्यानस्य कालमानम्

## सूत्रम्—आ मुहूर्तात् ॥ ९-२८ ॥

भा०—तद्ध्यानमा मुहूर्तात् भवति परतो न भवति दुर्ध्यानत्वात् ॥ २८ ॥

टी०—आ मुहूर्तादिति । घटिकाद्वयं मुहूर्तः । अभिविधावाङ् । अन्तर्मुहूर्तपरिमाणं न परतो मुहूर्तादित्यर्थः । तद्ध्यानमित्यादि । तदेतत् सामान्यलक्षणोक्तं ध्यानं चतुर्विधम-प्यामुहूर्तात् भवति, परतो न भवत्यशक्तेरेव । यस्मान्मोहनीयकर्मानुभावात् संक्लेशाद् वा विशोध्य वान्तर्मुहूर्तात् परावर्तते । उक्तं च—

" नान्तर्मुहूर्तकालं, व्यतीत्य शक्यं हि जगति सङ्क्लेष्टुम् ।
नापि विशोद्धुं शक्यं, प्रत्यक्षो ह्यात्मनः सोऽर्थः ॥"—आर्या

किं पुनः कारणं परतो न ध्यानमस्तीत्याह—दुर्ध्यानत्वात् । दुरितिशब्दो वैकृते वर्तते । विकृतो वर्णो दुर्वर्ण इति यथा, एवं विकृतं ध्यानं विकारान्तरमापन्नं दुर्ध्यानमिति । अथवा

दुःशब्दस्य अर्थाः

न्यृद्धौ दुःशब्दः । ऋद्धिवियुक्ता यवना दुर्यवनं दुष्कं(ष्टं?) बीजमिति । एवं ध्यानलक्षणविनिर्मुक्तं दुर्ध्यानं । अनीप्सायां वा दुःशब्दः । अनीप्सितोऽस्या भग इति दुर्भगा कन्या । एवमनीप्सितं दुर्ध्यानमिति तद्भावो दुर्ध्यानत्वं तस्माद् दुर्ध्यानत्वान्न परतो ध्यानमस्ति ॥ २८ ॥

सामान्येन ध्यानलक्षणमभिधाय सम्प्रति भेदकथनायाह—

ध्यानस्य चतुर्विधता

## सूत्रम्—आर्त-रौद्र-धर्म्य-शुक्लानि ॥ ९-२९ ॥

भा०—तच्चतुर्विधं भवति—तद्यथा आर्तं, रौद्रं, धर्म्यं, शुक्लमिति ॥ २९ ॥ तेषाम्—

---

१ 'ध्यानमिति' इति ग-पाठः । २ 'धर्मं' इति घ-पाठः । ३ 'धर्मं' इति घ-पाठः ।

टी०—कृतद्वन्द्वान्यार्तादीनि नपुंसकबहुवचनेन निर्दिष्टानि—तच्चतुर्विधं भवतीत्यादि। तद्ध्यानं सामान्येन लक्षितं चतुर्विधं भवति—चतुर्धा भिद्यते। चतस्रो विधा यस्य तच्चतुर्विधम्। [1]विधाप्रदर्शनायाह—तद्यथेति। आर्तं, रौद्रं, धर्म्यं, शुक्लमिति। तत्रार्तस्य शब्दनिर्भेदाभिधानम्। ऋतशब्दो दुःखपर्यायवाच्याश्रीयते। अर्तेर्गमिक्रियापरिस्पन्दिनो निष्ठाप्रत्ययान्तः। तस्मादागतार्थे तद्धितप्रत्ययो णित्। आर्तं दुःखभवं दुःखानुबन्धि चेति। तथाचामनोज्ञविषयप्रयोगो दुःखम्। वेदना च नेत्रशिरोदशनादिका दुःखमेव। तथा मनोज्ञविषयविप्रयोगोऽशर्मैव। निदानमपि चित्तदुःखासिकयैव क्रियत इत्युपपन्नः प्रत्ययार्थः। तथा रोदयत्यपरानिति रुद्रो दुःखस्य हेतुः तेन कृतं तत्कर्म वा रौद्रं प्राणिवधबन्धपरिणत आत्मैव रुद्र इत्यर्थः। धर्मः क्षमादिदशलक्षणकस्तस्मादनपेतं धर्म्यम्। शुक्लं—शुचि निर्मलं सकलकर्मक्षयहेतुत्वादिति। शुग्वा दुःखमष्टप्रकारं कर्म तां च शुचं क्लमयति-ग्लपयति निरस्यति शुक्लं इत्येतावदेव ध्यानं चतुर्विधमिति ॥ २९ ॥

(आर्तादीनां व्युत्पत्तिः)

तेषामित्यनेन सूत्रं सम्बध्नाति—

## सूत्रम्—परे मोक्षहेतू ॥ ९–३० ॥

**भा०—तेषां चतुर्णां ध्यानानां परे धर्म्य-शुक्ले मोक्षहेतू भवतः। पूर्वे त्वार्तरौद्रे संसारहेतू इति ॥ ३० ॥**

टी०—तेषां चतुर्णामित्यादि। यानि प्रस्तुतानि ध्यानानि तेषामार्त-रौद्र-धर्म-शुक्लानां चतुर्णां ध्यानानां सूत्रसन्निवेशमाश्रित्य परे धर्म्य-शुक्ले मोक्षहेतू—मुक्तेः कारणतां प्रतिपद्येते। तत्रापि साक्षात् मुक्तेः कारणीभवतः। पाश्चात्यौ शुक्लध्यानभेदौ सूक्ष्मक्रियमप्रतिपाति व्युपरतक्रियां वा निवर्ति, धर्म्यध्यानं पुनराद्याभ्यां सह शुक्लभेदाभ्यां पारंपर्येण मोक्षस्य कारणं भवति, न साक्षादिति। ततश्चैतद्धर्म्यध्यानादि देवगतेर्मुक्तेश्च कारणं, न मुक्तेरेव। अर्थादिदमगम्यमानमाह—पूर्वे त्वार्तरौद्रे संसारहेतू इति। आर्त-रौद्रयोः संसारहेतुतैव, न जातुचिन्मुक्तिहेतुता। संसारश्च नारकादिभेदश्चतुर्गतिक इति। परमार्थतस्तु रागद्वेषमोहाः संसारहेतवः। तदनुगतं चार्तरौद्ररूपमपि प्रकृष्टतमरागद्वेषमोहभाजः, अतः संसारपरिभ्रमणहेतुता तयोरिति ॥ ३० ॥

**भा०—अत्राह—किमेषां लक्षणमिति ?। अत्रोच्यते—**

टी०—सम्प्रति ध्येयप्रकाराः विषयविषयिविकल्पनिमित्तभेदेनोच्यन्ते—अत्राहेत्यादि। सम्बन्धो लक्ष्यते येन तल्लक्षणं विलापशोकादि। अमनोज्ञविषयसम्बन्धे क्रन्दति शोचतीति लक्ष्यते आर्तध्यायी ॥

---

१ 'तत्प्रदर्शनाय' इति ङ पाठः। 'विधानप्र०' इति च पाठः।

मनोव्यापारः समस्ति, सकलकरणग्रामनिरोधत्वादिति । उत्तमसंहननस्येति तेन प्रतिविशिष्टेन संहननत्रयेणाद्येन चतुर्विधेन वा युक्तस्य-सम्पन्नस्य । एकाग्रचिन्तानिरोधः । चञ्चलाद् वाक्-काय-निरोधश्च ध्यानम् । अत्र च ध्याता संसार्यात्मा ध्यानस्वरूपमेकाग्रचिन्तानिरोधः । ध्यातिर्ध्यानमिति भावसाधनः । कालतो मुहूर्तमात्रं चतुःप्रकारमार्तादिभेदेन । ध्येयप्रकारास्त्वमनोज्ञविषयसंप्रयोगादयः । शोकाक्रन्दनविलपनादिलक्षणमार्तं, उत्सन्नवधादिलक्षणं रौद्रं, जिनप्रणीतभावश्रद्धानादिलिङ्गं धर्म्यं, अबाधासम्मोहादिलक्षणं शुक्लम् । फलं पुनस्तिर्यङ्नरकदेवगत्यादिमोक्षाख्यमिति क्रमेण उत्तमसंहननपदार्थलभ्यो ध्याता अभिहितः । ध्यानस्वरूपं भावसाधनता च विज्ञेया ॥ २७ ॥

सम्प्रति ध्यानकालप्रमाणनिरूपणायाह—

ध्यानस्य कालमानम् **सूत्रम्—आ मुहूर्तात् ॥ ९–२८ ॥**

**भा०—तद्ध्यानमा मुहूर्तात् भवति परतो न भवति दुर्ध्यानत्वात् ॥ २८ ॥**

**टी०—**आ मुहूर्तादिति । घटिकाद्वयं मुहूर्तः । अभिविधावाङ् । अन्तर्मुहूर्तपरिमाणं न परतो मुहूर्तादित्यर्थः । तद्ध्यानमित्यादि । तदेतत् सामान्यलक्षणोक्तं ध्यानं चतुर्विधमप्यामुहूर्तात् भवति, परतो न भवत्यशक्तेरेव । यस्मान्मोहनीयकर्मानुभावात् संक्लेशाद् वा विशोध्य वान्तर्मुहूर्तात् परावर्तते । उक्तं च—

> " नान्तर्मुहूर्तकालं, व्यतीत्य शक्यं हि जगति सङ्क्लेष्टुम् ।
> नापि विशोद्धुं शक्यं, प्रत्यक्षो ह्यात्मनः सोऽर्थः ॥"—आर्या

किं पुनः कारणं परतो न ध्यानमस्तीत्याह—दुर्ध्यानत्वात् । दुरितिशब्दो वैकृते वर्तते । विकृतो वर्णो दुर्वर्ण इति यथा, एवं विकृतं ध्यानं विकारान्तरमापन्नं दुर्ध्यानमिति । अथवा

दुःशब्दस्य अर्थाः

व्यृद्धौ दुःशब्दः । ऋद्धिवियुक्ता यवना दुर्यवनं दुष्कं(द्वं?) बीजमिति । एवं ध्यानलक्षणविनिर्मुक्तं दुर्ध्यानं । अनीप्सायां वा दुःशब्दः । अनीप्सितोऽस्या भग इति दुर्भगा कन्या । एवमनीप्सितं दुर्ध्यानमिति तद्भावो दुर्ध्यानत्वं तस्माद् दुर्ध्यानत्वान्न परतो ध्यानमस्ति ॥ २८ ॥

सामान्येन ध्यानलक्षणमभिधाय सम्प्रति भेदकथनायाह—

ध्यानस्य चतुर्विधता **सूत्रम्—आर्त-रौद्र-धर्म्य-शुक्लानि ॥ ९–२९ ॥**

**भा०—तच्चतुर्विधं भवति—तद्यथा आर्तं, रौद्रं, धर्म्यं, शुक्लमिति ॥ २९ ॥**

तेषाम्—

---

१ 'ध्यानमिति' इति ग-पाठः । २ 'धर्मं' इति घ-पाठः । ३ 'धर्मं' इति घ-पाठः ।

आर्तस्य तृतीय-विकल्पः

## सूत्रम्—विपरीतमनोज्ञानाम् ॥ ९-३३ ॥

**भा०—मनोज्ञानां विषयाणां मनोज्ञायाश्च वेदनाया विप्रयोगे तत्सम्प्रयोगाय स्मृतिसमन्वाहार आर्तम् ॥ ३३ ॥ किञ्चान्यत्—**

टी०—मनोज्ञा-अभिरुचिता इष्टाः प्रीतिहेतवः तेषां विपरीतं संयोजनं कार्यम् । मनोज्ञानामित्यादि । मनोज्ञानां विषयाणां वेदनायाश्च मनोज्ञायाः विपरीतप्रधानार्थाभिसम्बन्धो विपरीतशब्देन क्रियत इत्याह—विप्रयोगे तत्सम्प्रयोगायेत्यादि। तत्सम्प्रयोगार्थः तत्सम्प्रयोगाय सम्प्रयोगप्रयोजनः स्मृतेः समन्वाहारः । कथं नु नाम भूयोऽपि तैः सह मनोज्ञविषयैः संप्रयोगः स्यान्ममेति । एवं प्रणिधत्ते दृढं मनस्तदप्यार्तमिति ॥ ३३ ॥

किञ्चान्यदिति तुरीयमार्तप्रकारं दर्शयति—

आर्तस्य चतुर्थो विकल्पः

## सूत्रम्—निदानं च ॥ ९-३४ ॥

टी०—निपूर्वाद् दातेर्लवनार्थस्य ल्युटि रूपम् । निदायते-लूयते लुप्यते येनात्महितमैकान्तिकात्यन्तिकानाबाधसुखलक्षणं तन्निदानमिति । चशब्दः समुच्चये । एष चार्तप्रकार इत्यर्थः ।

निदानशब्दस्य सिद्धिः ।

**भा०—कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवति ॥ ३४ ॥**

टी०—कामोपहतचित्तानामित्यादि । काम-इच्छाविशेषः शब्दाद्युपयोगविषयः । अथवा मदनः-कामः चिरमुग्रतपोनिष्ठाय कर्मक्षपणक्षमदीर्घदर्शितया स्वल्पस्य विनश्वरस्यावितृप्तिकारिणः सुरमनुजसुखैश्वर्यसौभाग्यादेः कृते तत्रैव कृतदृढप्रणिधाना बहुविनश्वरं सतततृप्तिकारणमुक्तिसुखमनुपमम्[1]वमन्य, प्रवर्तमानाः कामोपहतचेतसः पुनर्भवविषयगृद्धा विदधति यन्निदानं तदार्तध्यानं निदानरूपम् । एष एवार्थो विभक्त्यन्तरेण प्रतिपादितः । कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवतीति । तस्यैतस्यार्तध्यानस्य चतुःप्रकारस्यापि शोकादीनि लक्षणानि भवन्ति । यैरार्तध्यायी लक्ष्यते करतलपर्यस्तप्र[2]म्लानवदनः शोचति क्रन्दति विलपति हा हा अहो धिक् कष्टं हुं मौनस्योरस्ताडं[3] परिदेवते दीर्घं निश्वसिति कवोष्णं शून्यव्याक्षिप्तचित्त इवोपलक्ष्यते । तथा कलहमायामात्सर्यासूयास्तथा अरतिः स्त्रीभोजनकथासुहृत्स्वजनानुरागाश्च तस्य लक्षणानि भवन्ति परिस्फुटानीति ॥ ३४ ॥

इत्थमार्तध्यानं सभेदकमभिधायाऽधुनास्यैव ध्यातारः स्वामिनो निरूप्यन्ते इति तदर्थमाह—

---

१ 'मवगम्य' इति च पाठः । २ 'पर्यस्तप्रम्लान०' इति ग-पाठः, 'पर्यन्तप्रलान०' इति तु ङ-पाठः । ३ 'मारस्ताडनं' इति ङ-पाठः ।

आर्तस्य प्रथमो विकल्पः

सूत्रम्—आर्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः॥ ९–३१ ॥

भा०—अमनोज्ञानां विषयाणां सम्प्रयोगे तेषां विप्रयोगार्थं यः स्मृतिसमन्वाहारो भवति तदार्तध्यानमित्याचक्षते ॥ ३१ ॥ किञ्चान्यत्—

टी०—आर्तममनोज्ञानां इत्यादि। आर्तशब्दः पूर्ववद् व्याख्येयः। अयं चापरप्रकारः। अर्तिधातुर्दुःखार्थः। तस्यार्तिरिति रूपम्। अर्तिः-दुःखं शारीरं मानसं चानेकप्रकारं तस्यां भवमार्तं ध्यानम्। अमनोज्ञा अनिष्टाः शब्दादयः तेषां सम्बन्धे इन्द्रियेण सह सम्पर्के सति चतुर्णां शब्द-स्पर्श-रस-गन्धानामेकस्य च योग्यदेशावस्थितस्य द्रव्यादेर्दर्शने विषयिणा ग्राह्यग्राहकलक्षणे सम्प्रयोगे सति तद्विप्रयोगायेति। तदित्यमनोज्ञविषयाभिसम्बन्धः। तेषाममनोज्ञानां शब्दादीनां विप्रयोगः अपगमस्तदर्थं विप्रयोगायानिष्टशब्दादिविषयपरिहाराय यः स्मृतिसमन्वाहारस्तदार्तम्। स्मृतिसमन्वाहारो नाम तद्विप्रयोगादेवानुग्रहप्रतिपत्तीच्छया य आत्मनः प्रणिधानविशेषः स समन्वाहारः स्मृतेः कथमहमस्मादमनोज्ञविषयसम्प्रयोगाद् विमुच्येयेति। स्मर्यतेऽनेनेति स्मृतिर्मनोऽभिधीयते। स्मृतिहेतुत्वाद् वा-स्मृतिर्मनः। तस्याः स्मृतेः प्रणिधानरूपायाः समन्वाहरणं समन्वाहारः। अमनोज्ञविषयविप्रयोगोपाये व्यवस्थापनं मनसो निश्चलमार्तध्यानं केनोपायेन वियोगः स्यादित्येकतानमनोनिवेशनमार्तध्यानमित्यर्थः ॥ ३१ ॥ किञ्चान्यदिति सम्बध्नाति।

प्रकारान्तरमन्यदस्यार्तस्यास्तीत्याह—

आर्तस्य द्वितीयो विकल्पः

सूत्रम्—वेदनायाश्च ॥ ९–३२ ॥

टी०—वेदनं-वेदनाया अनुभवः। अनन्तरसूत्रमनुवर्तते तदभिसम्बध्नन् भाष्यकृदाह—

भा०—वेदनायाश्चामनोज्ञायाः सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहार आर्तमिति ॥ ३२ ॥ किञ्चान्यत्—

टी०—वेदनाया अमनोज्ञाया इत्यादि। सुखा दुःखा चोभयी वेदना। तत्रामनोज्ञायाः सम्प्रयोगे वेदनायाः प्रकुपितपवनपित्तश्लेष्मसन्निपातनिमित्तैरुपजातायाः शूलशिरःकम्पज्वराक्षिश्रवणदशनादिकायास्तद्विप्रयोगाय स्मृतिसमन्वाहारो ध्यानमार्तमेष द्वितीयो विकल्पः। किञ्चान्यदित्यार्तप्रकारान्तरं दर्शयति—

१ 'स्वेन' इति ङ पाठः।

आर्तस्य तृतीय-विकल्पः

## सूत्रम्—विपरीतमनोज्ञानाम् ॥ ९-३३ ॥

**भा०—मनोज्ञानां विषयाणां मनोज्ञायाश्च वेदनाया विप्रयोगे तत्सम्प्रयोगाय स्मृतिसमन्वाहार आर्तम् ॥ ३३ ॥ किञ्चान्यत्—**

टी०—मनोज्ञा-अभिरुचिता इष्टाः प्रीतिहेतवः तेषां विपरीतं संयोजनं कार्यम् । **मनोज्ञानामित्यादि** । **मनोज्ञानां विषयाणां वेदनायाश्च मनोज्ञायाः** विपरीतप्रधानार्थाभिसम्बन्धो विपरीतशब्देन क्रियत इत्याह—**विप्रयोगे तत्सम्प्रयोगायेत्यादि** । तत्सम्प्रयोगार्थः तत्सम्प्रयोगाय सम्प्रयोगप्रयोजनः **स्मृतेः समन्वाहारः** । कथं नु नाम भूयोऽपि तैः सह मनोज्ञविषयैः संप्रयोगः स्यान्ममेति । एवं प्रणिधत्ते दृढं मनस्तदप्यार्तमिति ॥ ३३ ॥

किञ्चान्यदिति तुरीयमार्तप्रकारं दर्शयति—

आर्तस्य चतुर्थो विकल्पः

## सूत्रम्—निदानं च ॥ ९-३४ ॥

टी०—निपूर्वाद् दातेर्लवनार्थस्य ल्युटि रूपम् । निदायते—लूयते लुप्यते येनात्महितमैकान्तिकात्यन्तिकानाबाधसुखलक्षणं तन्निदानमिति । चशब्दः समुच्चये । एष चार्तप्रकार इत्यर्थः ।

निदानशब्दस्य सिद्धिः ।

**भा०—कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवति ॥ ३४ ॥**

टी०—**कामोपहतचित्तानामित्यादि** । काम—इच्छाविशेषः शब्दाद्युपयोगविषयः । अथवा मदनः—कामः चिरमुग्रतपोनिष्ठाय कर्मक्षपणक्षमदीर्घदर्शितया स्वल्पस्य विनश्वरस्यावितृप्तिकारिणः सुरमनुजसुखैश्वर्यसौभाग्यादेः कृते तत्रैव कृतदृढप्रणिधाना ह्यविनश्वरं सतततृप्तिकारणमुक्तिसुखमनुपममवमन्य,[1] प्रवर्तमानाः कामोपहतचेतसः पुनर्भवविषयगृद्धा विदधति यन्निदानं तदार्तध्यानं निदानरूपम् । एष एवार्थो विभक्त्यन्तरेण प्रतिपादितः । **कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवतीति** । तस्यैतस्यार्तध्यानस्य चतुःप्रकारस्यापि शोकादीनि लक्षणानि भवन्ति । यैरार्तध्यायी लक्ष्यते करतलपर्यस्तम्लानवदनः[2] शोचति क्रन्दति विलपति हा हा अहो धिक् कष्टं हुं मौनस्योरस्ताडं[3] परिदेवते दीर्घं निश्वसिति कवोष्णं शून्यन्याक्षिप्तचित्त इवोपलक्ष्यते । तथा कलहमायामात्सर्यासूयास्तथा अरतिः स्त्रीभोजनकथासुहृत्स्वजनानुरागाश्च तस्य लक्षणानि भवन्ति परिस्फुटानीति ॥ ३४ ॥

इत्थमार्तध्यानं सभेदक्रममभिधायाऽधुनास्यैव ध्यातारः स्वामिनो निरूप्यन्ते इति तदर्थमाह—

---

१ 'मवगम्य' इति च पाठः । २ 'पर्यस्तप्रम्लान०' इति ग-पाठः, 'पर्यन्तप्रलान०' इति तु ङ-पाठः । ३ 'मारस्ताडनं' इति ङ-पाठः ।

आर्तस्य प्रथमो विकल्पः

## सूत्रम्—आर्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः॥ ९-३१ ॥

भा०—अमनोज्ञानां विषयाणां सम्प्रयोगे तेषां विप्रयोगार्थं यः स्मृतिसमन्वाहारो भवति तदार्तध्यानमित्याचक्षते ॥ ३१ ॥ किश्चान्यत्—

टी०—आर्तममनोज्ञानां इत्यादि। आर्तशब्दः पूर्वाद् व्याख्येयः। अयं नापरप्रकारः। अर्तिधातुर्दुःखार्थः। तस्मादिगिति रूपम्। अर्तिश्च-दुःखं शारीरं मानसं चानेकप्रकारं तस्यां भवमार्तं ध्यानम्। अमनोज्ञा अनिष्टाः शब्दादयः तेषां सम्बन्धे इन्द्रियेण सह सम्पर्के सति चतुर्णां शब्द-स्पर्श-रस-गन्धानामेकस्य च योग्यदेशावस्थितस्य द्रव्यादेस्तेन विषयिणा ग्राह्यग्राहकलक्षणे सम्प्रयोगे सति तद्विप्रयोगायेति। तदित्यमनोज्ञविषयाभिसम्बन्धः। तेषाममनोज्ञानां शब्दादीनां विप्रयोगः अपगमस्तदर्थं विप्रयोगायानिष्टशब्दादिविषयपरिहाराय यः स्मृतिसमन्वाहारस्तदार्तम्। स्मृतिसमन्वाहारो नाम तद्विप्रयोगादेवानुग्रहप्रतिपत्तीच्छया च आत्मनः प्रणिधानविशेषः स समन्वाहारः स्मृतेः कथमहमस्मादमनोज्ञविषयसम्प्रयोगाद् विमुच्येयेति। स्मर्यतेऽनेनेति स्मृतिर्मनोऽभिधीयते। स्मृतिहेतुत्वाद् वा स्मृतिर्मनः। तस्याः स्मृतेः प्रणिधानरूपायाः समन्वाहरणं समन्वाहारः। अमनोज्ञविषयविप्रयोगोपाये व्यवस्थापनं मनसो निश्चलमार्तध्यानं केनोपायेन वियोगः स्यादित्येकतानमनोनिवेशनमार्तध्यानमित्यर्थः ॥ ३१ ॥ किश्चान्यदिति सम्बध्नाति।

प्रकारान्तरमन्यदस्यार्तस्यास्तीत्याह—

आर्तस्य द्वितीयो विकल्पः

## सूत्रम्—वेदनायाश्च ॥ ९-३२ ॥

टी०—वेदनं-वेदनाया अनुभवः। अनन्तरसूत्रमनुवर्तते तदभिसम्बध्नन् भाष्यकृदाह—

भा०—वेदनायाश्चामनोज्ञायाः सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहार आर्तमिति ॥ ३२ ॥ किश्चान्यत्—

टी०—वेदनाया अमनोज्ञाया इत्यादि। सुखा दुःखा चोभयी वेदना। तत्रामनोज्ञायाः सम्प्रयोगे वेदनायाः प्रकुपितपवनपित्तश्लेष्मसन्निपातनिमित्तैरुपजातायाः शूलशिरःकम्पज्वराक्षिश्रवणदशनादिकायास्तद्विप्रयोगाय स्मृतिसमन्वाहारो ध्यानमार्तमेष द्वितीयो विकल्पः। किश्चान्यदित्यार्तप्रकारान्तरं दर्शयति—

१ 'स्वेन' इति ङ पाठः।

आर्तस्य तृतीय-विकल्पः

## सूत्रम्—विपरीतमनोज्ञानाम् ॥ ९-३३ ॥

**भा०—मनोज्ञानां विषयाणां मनोज्ञायाश्च वेदनाया विप्रयोगे तत्सम्प्रयोगाय स्मृतिसमन्वाहार आर्तम् ॥ ३३ ॥ किञ्चान्यत्—**

टी०—मनोज्ञा-अभिरुचिता इष्टाः प्रीतिहेतवः तेषां विपरीतं संयोजनं कार्यम् । **मनोज्ञानामित्यादि । मनोज्ञानां विषयाणां** वेदनायाश्च **मनोज्ञायाः** विपरीतप्रधानार्थाभिसम्बन्धो विपरीतशब्देन क्रियत इत्याह—**विप्रयोगे तत्सम्प्रयोगायेत्यादि** । तत्सम्प्रयोगार्थः तत्सम्प्रयोगाय सम्प्रयोगप्रयोजनः **स्मृतेः समन्वाहारः** । कथं नु नाम भूयोऽपि तैः सह मनोज्ञविषयैः संप्रयोगः स्यान्ममेति । एवं प्रणिधत्ते दृढं मनस्तदप्यार्तमिति ॥ ३३ ॥

किञ्चान्यदिति तुरीयमार्तप्रकारं दर्शयति—

आर्तस्य चतुर्थो विकल्पः

## सूत्रम्—निदानं च ॥ ९-३४ ॥

टी०—निपूर्वाद् दातेर्लवनार्थस्य ल्युटि रूपम् । निदायते—लूयते लुप्यते येनात्महितमैकान्तिकात्यन्तिकानाबाधसुखलक्षणं तन्निदानमिति । चशब्दः समुच्चये । एष चार्तप्रकार इत्यर्थः ।

निदानशब्दस्य सिद्धिः ।

**भा०—कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवति ॥ ३४ ॥**

टी०—**कामोपहतचित्तानामित्यादि** । काम—इच्छाविशेषः शब्दाद्युपयोगविषयः । अथवा मदनः—कामः चिरसुव्रतपोनिष्ठाय कर्मक्षपणक्षमदीर्घदर्शितया स्वल्पस्य विनश्वरस्यावितृप्तिकारिणः सुरमनुजसुखैश्वर्यसौभाग्यादेः कृते तत्रैव कृतदृढप्रणिधाना बह्वविनश्वरं सतततृप्तिकारणमुक्तिसुखमनुपममवमन्य, प्रवर्तमानाः कामोपहतचेतसः पुनर्भवविषयगृद्धा विदधति यन्निदानं तदार्तध्यानं निदानरूपम् । एष एवार्थो विभक्त्यन्तरेण प्रतिपादितः । **कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवतीति** । तस्यैतस्यार्तध्यानस्य चतुःप्रकारस्यापि शोकादीनि लक्षणानि भवन्ति । यैरार्तध्यायी लक्ष्यते करतलपर्यस्तम्लानवदनः[2] शोचति क्रन्दति विलपति हा हा अहो धिक् कष्टं हुं मा नस्योरस्ताडं[3] परिदेवते दीर्घं निश्वसिति कवोष्णं शून्यव्याक्षिप्तचित्त इवोपलक्ष्यते । तथा कलहमायामात्सर्यासूयास्तथा अरतिः स्त्रीभोजनकथासुहृत्स्वजनानुरागाश्च तस्य लक्षणानि भवन्ति परिस्फुटानीति ॥ ३४ ॥

इत्थमार्तध्यानं सभेदकमभिधायाऽधुनास्यैव ध्यातारः स्वामिनो निरूप्यन्ते इति तदर्थमाह—

१ 'भवगम्य' इति च पाठः । २ 'पर्यस्तप्रम्लान०' इति ग-पाठः, 'पर्यन्तप्रलान०' इति तु ङ-पाठः ।
३ 'मारस्ताडनं' इति ङ-पाठः ।

आर्तस्य प्रथमो विकल्पः

## सूत्रम्—आर्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥ ९-३१ ॥

भा०—अमनोज्ञानां विषयाणां सम्प्रयोगे तेषां विप्रयोगार्थं यः स्मृति-समन्वाहारो भवति तदार्तध्यानमित्याचक्षते ॥ ३१ ॥ किञ्चान्यत्—

टी०—आर्तममनोज्ञानां इत्यादि। आर्तशब्दः पूर्वाद् व्यापेक्षः। अयं चाद्यप्रकारः। अर्तिधातुर्दुःखार्थः। तत्रार्तमिति रूपम्। अतिदुःखं शारीरं मानसं चानेकप्रकारं तत्र भवमार्तं ध्यानम्। अमनोज्ञा अनिष्टाः शब्दादयः तेषां सम्बन्धे इन्द्रियेण सह सम्पर्के सति चतुर्णां शब्द-स्पर्श-रस-गन्धाना-मेकस्य च योग्यदेशावस्थितस्य द्रव्यादर्शने विषादिना ग्राह्यग्राहकलक्षणे सम्प्रयोगे सति तद्विप्रयोगायेति। तदित्यमनोज्ञविषयाभिसम्बन्धः। तेषाममनोज्ञानां शब्दादीनां विप्रयोगः अपगमस्तदर्थं विप्रयोगायानिष्टशब्दादिविषयपरिहाराय यः स्मृतिसमन्वाहारस्तदार्तम्। स्मृतिसमन्वाहारो नाम तद्विप्रयोगादेवानुग्रहप्रतिपत्त्यिच्छया य आत्मनः प्रणिधानविशेषः स समन्वाहारः स्मृतेः कथमहमस्मादमनोज्ञविषयसम्प्रयोगाद् विमुच्येयेति। स्मर्यतेऽनेनेति स्मृति-र्मनोऽभिधीयते। स्मृतिहेतुत्वाद् वा स्मृतिर्मनः। तस्याः स्मृतेः प्रणिधानरूपायाः सम-न्वाहरणं समन्वाहारः। अमनोज्ञविषयविप्रयोगोपाये व्यवस्थापनं मनसो निश्चलमार्तध्यानं केनोपायेन वियोगः स्यादित्येकतानमनोनिवेशनमार्तध्यानमित्यर्थः ॥ ३१ ॥ किञ्चान्यदिति सम्बध्नाति।

प्रकारान्तरमन्यदस्यार्तस्यास्तीत्याह—

आर्तस्य द्वितीयो विकल्पः

## सूत्रम्—वेदनायाश्च ॥ ९-३२ ॥

टी०—वेदनं-वेदनाया अनुभवः। अनन्तरसूत्रमनुवर्तते तदभिसम्बध्नन् भाष्यकृदाह—

भा०—वेदनायाश्चामनोज्ञायाः सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहार आर्तमिति ॥ ३२ ॥ किञ्चान्यत्—

टी०—वेदनाया अमनोज्ञाया इत्यादि। सुखा दुःखा चोभयी वेदना। तत्रा-मनोज्ञायाः सम्प्रयोगे वेदनायाः प्रकुपितपवनपित्तश्लेष्मसन्निपातनिमित्तैरुपजातायाः शूल-शिरःकम्पज्वराक्षिश्रवणदशनादिकायास्तद्विप्रयोगाय स्मृतिसमन्वाहारो ध्यानमार्तमेष[1] द्वितीयो विकल्पः। किञ्चान्यदित्यार्तप्रकारान्तरं दर्शयति—

---

१ 'स्वेन' इति ङ पाठः।

आर्तस्य तृतीय-विकल्पः

## सूत्रम्—विपरीतमनोज्ञानाम् ॥ ९-३३ ॥

**भा०—मनोज्ञानां विषयाणां मनोज्ञायाश्च वेदनाया विप्रयोगे तत्सम्प्रयोगाय स्मृतिसमन्वाहार आर्तम् ॥ ३३ ॥ किञ्चान्यत्—**

टी०—मनोज्ञा-अभिरुचिता इष्टाः प्रीतिहेतवः तेषां विपरीतं संयोजनं कार्यम् । **मनोज्ञानामित्यादि** । **मनोज्ञानां विषयाणां वेदनायाश्च मनोज्ञायाः** विपरीतप्रधानार्थाभिसम्बन्धो विपरीतशब्देन क्रियत इत्याह—**विप्रयोगे तत्सम्प्रयोगायेत्यादि** । तत्सम्प्रयोगार्थः तत्सम्प्रयोगाय सम्प्रयोगप्रयोजनः **स्मृतेः समन्वाहारः** । कथं नु नाम भूयोऽपि तैः सह मनोज्ञविषयैः संप्रयोगः स्यान्ममेति । एवं प्रणिधत्ते दृढं मनस्तदप्यार्तमिति ॥ ३३ ॥

किञ्चान्यदिति तुरीयमार्तप्रकारं दर्शयति—

आर्तस्य चतुर्थो विकल्पः

## सूत्रम्—निदानं च ॥ ९-३४ ॥

टी०—निपूर्वाद् दातेर्लवनार्थस्य ल्युटि रूपम् । निदायते-लूयते लुप्यते येनात्महितमैकान्तिकात्यन्तिकानाबाधसुखलक्षणं तन्निदानमिति । चशब्दः समुच्चये । एष चार्तप्रकार इत्यर्थः ।

निदानशब्दस्य सिद्धिः ।

**भा०—कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवति ॥ ३४ ॥**

टी०—**कामोपहतचित्तानामित्यादि** । काम-इच्छाविशेषः शब्दाद्युपयोगविषयः । अथवा मदनः-कामः चिरसुग्रतपोनिष्ठाय कर्मक्षपणक्षमदीर्घदर्शितया स्वल्पस्य विनश्वरस्यावितृप्तिकारिणः सुरमनुजसुखैश्वर्यसौभाग्यादेः कृते तत्रैव कृतदृढप्रणिधाना बहविनश्वरं सतततृप्तिकारणमुक्तिसुखमनुपममेवमन्य, प्रवर्तमानाः कामोपहतचेतसः पुनर्भवविषयगृद्धा विदधति यन्निदानं तदार्तध्यानं निदानरूपम् । एष एवार्थो विभक्त्यन्तरेण प्रतिपादितः । **कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्तध्यानं भवतीति** । तस्यैतस्यार्तध्यानस्य चतुःप्रकारस्यापि शोकादीनि लक्षणानि भवन्ति । यैरार्तध्यायी लक्ष्यते करतलपर्यस्तप्रम्लानवदनः शोचति क्रन्दति विलपति हा हा अहो धिक् कष्टं हुं मांनस्योरस्ताडं परिदेवते दीर्घं निश्वसिति कवोष्णं शून्यव्याक्षिप्तचित्त इवोपलक्ष्यते । तथा कलहमायामात्सर्यासूयास्तथा अरतिः स्त्रीभोजनकथासुहृत्स्वजनानुरागाश्च तस्य लक्षणानि भवन्ति परिस्फुटानीति ॥ ३४ ॥

इत्थमार्तध्यानं सभेदकमभिधायाऽधुनास्यैव ध्यातारः स्वामिनो निरूप्यन्ते इति तदर्थमाह—

---

१ 'मवगम्य' इति च पाठः । २ 'पर्यस्तप्रम्लान०' इति ग-पाठः, 'पर्यन्तप्रलान०' इति तु ङ-पाठः ।
३ 'मारस्ताडनं' इति ङ-पाठः ।

आर्तध्यानस्य स्वामिनः

सूत्रम्—तदविरतदेशविरतप्रमत्तसंयतानाम् । ९–३५॥

भा०—तदेतदार्तध्यानं अविरतदेशविरतप्रमत्तसंयतानामेव भवतीति ॥ ३५ ॥

टी०—तदित्यार्तमभिसम्बध्यते । तदार्तध्यानमविरतसम्यग्दृष्ट्यादीनां त्रयाणां स्वामिनां सम्भवति । एतस्य त्रयः स्वामिनश्चतुर्थ-पञ्चम-षष्ठगुणस्थानवर्तिनः क्रमेणाविरत-देशविरतप्रमत्तसंयताः । अविरतश्चासौ सम्यग्दृष्टिश्चेति अविरतसम्यग्दृष्टिः प्रत्याख्यानाव-रणोदये सति विरतिलक्षणस्य संयमस्याभावादविरतसम्यग्दृष्टिः । आह च—

" आवृण्वन्ति प्रत्या-ख्यानं स्वल्पमपि येन जीवस्य ।
तेनाप्रत्याख्याना-वरणास्ते नञ् हि सोऽल्पार्थः ॥ १ ॥—आर्या
प्रत्याख्यानावरणसद्भावाद् वा तत् तथा भवति सिद्धम् ।
न त्वत्राक्षणवचने, तत्सदृशः पुरुष एवेष्टः ॥ २ ॥"—आर्या

औपशमिक-क्षायोपशमिक-क्षायिकभेदात् त्रिविधं सम्यग्दर्शनं, तद्योगात् सम्यग्दृष्टिः देशविरतः संयतासंयतः हिंसादिभ्यो देशतो विरतत्वात् संयतः, अन्यतः सावद्ययोगादनिवृत्त इति स एवासंयतः, सोऽविरतसम्यग्दृष्टिस्थानादसंख्येयानि विशोधिस्थानानि गत्वा अप्रत्या-ख्यानावरणकषायेषु क्षयोपशमं नीतेषु प्रत्याख्यानावरणकषायोदयात् कृत्स्नप्रत्याख्यानाभावाद् देशविरतः । आह च—

" तस्मादविरतसम्यग्-दृष्टिस्थानाद् विशोधिमुपगम्य ।
स्थानान्तराण्यनेका-न्यारोहति पूर्वविधिनैव ॥ १ ॥—आर्या
क्षपयत्युपशमयति वा, प्रत्याख्यानावृतः कषायांस्तान् ।
स ततो येन भवेत् त-स्य विरमणे बुद्धिरल्पेऽल्पा ॥ २ ॥—,,
तस्य तथैव विशोधि-स्थानान्यारोहतोऽतिसङ्ख्यानि ।
गच्छन्ति सर्वथाऽपि, प्रकर्षतस्ते क्षयोपशमम् ॥ ३ ॥—,,
श्रावकधर्मो द्वादश-भेदः सञ्जायते ततस्तस्य ।
पञ्चत्रिचतुःसङ्ख्य-व्रतगुणशिक्षामयः शुद्धः ॥ ४ ॥—,,
सर्वं प्रत्याख्यानं, येनावृण्वन्ति तदभिलपतोऽपि ।
तेन प्रत्याख्याना-वरणास्ते निर्विशेषोक्ताः ॥ ५ ॥"—,,

इदानीं प्रमत्तसंयतः । तस्मादसङ्ख्येयानि विशोधिस्थानान्यारोहतस्तृतीयकषायेषु प्रकर्षात् क्षयोपशमं गतेषु सर्वसावद्ययोगप्रत्याख्यानविरतिर्भवति । उक्तं च—

१ 'संयतानो' इति ङ-पाठः । २ 'वरणो देशविरति' इति च-पाठः । ३ 'संयतीसंयतः' इति घ-पाठः । ४ 'धितस्थानानि' इति च-पाठः । ५ 'शमनीयेषु' इति घ-पाठः ।

" देशविरतोऽपि तनः. ... विशोधिमुत्तमां प्राप्य ।
... कानि ॥ १ ॥ —आर्या
... धूतः कषायांस्तान् ।
विरा ... सर्वतोऽपि मतिः ॥ २ ॥—,,
... सामायि . चारित्रं वा ।
... प्रत्या-ख्यानावरणक्षयोपशमात् ॥ ३ ॥ —,,

तस्येदानीं महाव्रतगुप्तिसमितियुक्तस्य कषायनिग्रहाद् इन्द्रियदमाच्च निरुद्धाश्रवस्य निर्वेदादिवैराग्यभावनाभिः स्थिरीकृतसंवेगस्य यथोक्तद्वादशप्रकारतपोयोगात् सञ्चितानि कर्माणि निर्जरयतः सूत्रानुसाराद् यतमानस्यापि मोहनीयकर्मानुभावात् सङ्क्लेशाद् वा विशोध्या वाऽन्तर्मुहूर्तात् परावर्तते । ततः सञ्ज्वलनकषायोदयाद्, इन्द्रियविकथाप्रमादाद्, योगदुष्प्रणिधानात्, कुशलेष्वनादराच्च प्रमत्तसंयतो भवति, तस्मात् सङ्क्लेशाद्धायां वर्तमानः प्रमत्तसंयतः । एते त्रयोऽप्यार्तध्यायिनो भवन्ति, आर्तध्यानस्वामिन इत्यर्थः । एतदार्तध्यानमविरतादीनामेव भवति, नाप्रमत्तसंयतादीनामित्यर्थः । तदेतदार्तं नातिसंक्लिष्टकापोतनीलकृष्णलेश्यानुयायि द्रष्टव्यमिति॥३५॥

सम्प्रति रौद्रध्यानं सस्वामिकमभिधित्सुराह—

रौद्रध्यानस्य स्वामिनः

**सूत्रम्—हिंसा-ऽनृत-स्तेय-विषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ९–३६ ॥**

**भा०—हिंसार्थमनृतवचनार्थं स्तेयार्थं विषयसंरक्षणार्थं च स्मृतिसमन्वाहारो रौद्रध्यानं, तदविरतदेशविरतयोरेव भवति ॥ ३६ ॥**[4]

**टी०—हिंसा अनृतं स्तेयं विषयसंरक्षणं** चेति द्वन्द्वः । ततो द्वन्द्वसमासः । लिङ्गान्यस्योत्सन्नबहुज्ञानामरणदोषाः । तत्र हिंसानन्दादीनां चतुर्णां प्रकाराणामन्यतमभेदेऽनवरतमविश्रान्त्या प्रवर्तमानस्य बहुकृत्यः सञ्चितदोष उत्सन्नशब्दवाच्यः । यथोत्सन्नकालान्तरमुपचितमिति । तथा हिंसानन्दादिषु चतुर्ष्वपि प्रवर्तमानस्याभिनिविष्टान्तःकरणस्य बहुदोषता अज्ञानदोषता तेष्वेव हिंसादिषु अधर्मकार्येष्वभ्युदयकार्यबुद्धिव्यपाश्रयस्य चैकतानविधानावलम्बितसंसारमोचकस्येव भवति । अथवा नानाप्रकारेषु हिंसानन्दाद्युपायेषु प्रवर्तमानस्य प्रचण्डक्रोधाविष्टस्य महामोहाभिभूतस्य तीव्रवधबन्धसंक्लिष्टाध्यवसायस्य नानाविधदोषता, पाठान्तरव्याख्यानं तृतीयविकल्पस्य । तुर्यदोषस्तु मरणावस्थायामपि हिंसानन्दादिकृतः स्वल्पोऽपि पश्चात्तापो यस्य नास्ति तस्यामरणान्तदोषतेति ॥ ३६ ॥

१ 'विरतेऽपि' इति ङ-पाठः । २ 'चरित्रं' इति ङ-पाठः । ३ 'प्रमोदात्' इति ङ-पाठः । ४ भाष्यस्य विवरणं समुपलभ्यतेऽनन्तरसूत्रटीकायाम् । ५ 'हिंसादिषु' इति च-पाठः ।

आर्तध्यानस्य स्वामिनः

सूत्रम्—तदविरतदेशविरतप्रमत्तसंयतानाम् । ९-३५ ॥

भा०—तदेतदार्तध्यानं अविरतदेशविरतप्रमत्तसंयतानामेव भवतीति ॥ ३५ ॥

टी०—तदित्यार्तमभिसम्बध्यते । तदार्तध्यानमविरतसम्यग्दृष्ट्यादीनां त्रयाणां स्वामिनां सम्भवति । एतस्य त्रयः स्वामिनश्चतुर्थ-पञ्चम-षष्ठगुणस्थानवर्तिनः क्रमेणाविरत-देशविरतप्रमत्तसंयताः । अविरतश्चासौ सम्यग्दृष्टिश्चेति अविरतसम्यग्दृष्टिः प्रत्याख्यानाव-रणोदये सति विरतिलक्षणस्य संयमस्याभावादविरतसम्यग्दृष्टिः । आह च—

" आवृण्वन्ति प्रत्या-ख्यानं स्वल्पमपि येन जीवस्य ।
तेनाप्रत्याख्याना-वरणास्ते नञ् हिंसोऽल्पार्थः ॥ १ ॥—आर्या
प्रत्याख्यानावरणसदृशत्वाद् वा तत् तथा भवति सिद्धम् ।
न त्वत्राक्षणवचने, तत्सदृशः पुरुष एवेष्टः ॥ २ ॥"—आर्या

औपशमिक-क्षायोपशमिक-क्षायिकभेदात् त्रिविधं सम्यग्दर्शनं, तद्योगात् सम्यग्दृष्टिः देशविरतः संयतासंयतः हिंसादिभ्यो देशतो विरतत्वात् संयतः, अन्यतः सावद्ययोगादनिवृत्त इति स एवासंयतः, सोऽविरतसम्यग्दृष्टिस्थानादसंख्येयानि विशोधिस्थानानि गत्वा अप्रत्या-ख्यानावरणकषायेषु क्षयोपशमं नीतेषु प्रत्याख्यानावरणकषायोदयात् कृत्स्नप्रत्याख्यानाभावाद् देशविरतः । आह च—

" तस्मादविरतसम्यग्-दृष्टिस्थानाद् विशोधिमुपगम्य ।
स्थानान्तराण्यनेका-न्यारोहति पूर्वविधिनैव ॥ १ ॥—आर्या
क्षपयत्युपशमयति वा, प्रत्याख्यानावृतः कषायांस्तान् ।
सततो येन भवेत् त-स्य विरमणे बुद्धिरल्पेऽल्पा ॥ २ ॥—„
तस्य तथैव विशोधि-स्थानान्यारोहतोऽतिसङ्ख्यानि ।
गच्छन्ति सर्वथाऽपि, प्रकर्षतस्ते क्षयोपशमम् ॥ ३ ॥—„
श्रावकधर्मो द्वादश-भेदः सञ्जायते ततस्तस्य ।
पञ्चत्रिचतुःसङ्ख्य-व्रतगुणशिक्षामयः शुद्धः ॥ ४ ॥—„
सर्वं प्रत्याख्यानं, येनावृण्वन्ति तदभिलपतोऽपि ।
तेन प्रत्याख्याना-वरणास्ते निर्विशेषोक्ताः ॥ ५ ॥"—„

इदानीं प्रमत्तसंयतः । तस्मादसङ्ख्येयानि विशोधिस्थानान्यारोहतस्तृतीयकषायेषु प्रकर्षात् क्षयोपशमं गतेषु सर्वसावद्ययोगप्रत्याख्यानविरतिर्भवति । उक्तं च—

१ 'संयतानां' इति ङ-पाठः । २ 'वरणो देशविरति' इति च-पाठः । ३ 'संयतासंयतः' इति घ-पाठः ।
४ 'धितस्थानानि' इति च-पाठः । ५ 'शमनीयेषु' इति घ-पाठः ।

" देशविरतोऽपि ततः [illegible] विशोधिमुत्तमां प्राप्य ।
[illegible] कानि ॥ १ ॥ —आर्या
[illegible] वृतः कषायांस्तान् ।
विर[illegible] सर्वतोऽपि मतिः ॥ २ ॥—,,
[illegible] सामायि[illegible] चरित्रं वा ।
[illegible] प्रत्या-ख्यानावरणक्षयोपशमात् ॥ ३ ॥ —,,

तस्येदानीं महाव्रतगुप्तिसमितियुक्तस्य कषायनिग्रहाद् इन्द्रियदमाच्च निरुद्धाश्रवस्य निर्वेदादिवैराग्यभावनाभिः स्थिरीकृतसंवेगस्य यथोक्तद्वादशप्रकारतपोयोगात् सञ्चितानि कर्माणि निर्जरयतः सूत्रानुसाराद् यतमानस्यापि मोहनीयकर्मानुभावात् सङ्क्लेशाद् वा विशोध्या वाऽन्तर्मुहूर्तात् परावर्तते । ततः सञ्ज्वलनकषायोदयाद्, इन्द्रियविकथाप्रमादाद्, योगदुष्प्रणिधानात्, कुशलेष्वनादराच्च प्रमत्तसंयतो भवति, तस्मात् सङ्क्लेशाद्वायां वर्तमानः प्रमत्तसंयतः । एते त्रयोऽप्यार्तध्यायिनो भवन्ति, आर्तध्यानस्वामिन इत्यर्थः । एतदार्तध्यानमविरतादीनामेव भवति, नाप्रमत्तसंयतादीनामित्यर्थः । तदेतदार्तं नातिसंक्लिष्टकापोतनीलकृष्णलेश्यानुयायि द्रष्टव्यमिति॥३५॥

सम्प्रति रौद्रध्यानं सस्वामिकमभिधित्सुराह—

रौद्रध्यानस्य स्वामिनः

**सूत्रम्—हिंसा-ऽनृत-स्तेय-विषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ९–३६ ॥**

**भा०—हिंसार्थमनृतवचनार्थं स्तेयार्थं विषयसंरक्षणार्थं च स्मृतिसमन्वाहारो रौद्रध्यानं, तदविरतदेशविरतयोरेव भवति ॥ ३६ ॥**[4]

**टी०—हिंसा** अनृतं स्तेयं विषयसंरक्षणं चेति द्वन्द्वः । ततो द्वन्द्वसमासः । लिङ्गान्यस्योत्सन्नबहुज्ञानामरणदोषाः । तत्र हिंसानन्दादीनां चतुर्णां प्रकाराणामन्यतमभेदेऽनवरतमविश्रान्त्या प्रवर्तमानस्य बहुकृत्वः सञ्चितदोष उत्सन्नशब्दवाच्यः । यथोत्सन्नकालान्तरमुपचितमिति । तथा हिंसानन्दादिषु चतुर्ष्वपि प्रवर्तमानस्याभिनिविष्टान्तःकरणस्य बहुदोषता अज्ञानदोषता तेष्वेव हिंसादिषु अधर्मकार्येष्वभ्युदयकार्यबुद्धिव्यपाश्रयस्य चैकतानविधानावलम्बितसंसारमोचकस्येव भवति । अथवा नानाप्रकारेषु हिंसानन्दाद्युपायेषु प्रवर्तमानस्य प्रचण्डक्रोधाविष्टस्य महामोहाभिभूतस्य तीव्रवधबन्धसंक्लिष्टाध्यवसायस्य नानाविधदोषता, पाठान्तरव्याख्यानं तृतीयविकल्पस्य । तुर्यदोषस्तु मरणावस्थायामपि हिंसानन्दादिकृतः स्वल्पोऽपि पश्चात्तापो यस्य नास्ति तस्यामरणान्तदोषतेति ॥ ३६ ॥

---

१ 'विरतेऽपि' इति ङ-पाठः । २ 'चरित्रं' इति ङ-पाठः । ३ 'प्रमोदात्' इति ङ-पाठः । ४ भाष्यस्य विवरणं समुपलभ्यतेऽनन्तरसूत्रटीकायाम् । ५ 'हिंसादिषु' इति च-पाठः ।

आर्तमिदं ध्यानम् । प्रमत्तो धर्मध्यानस्यानधिकारी । अत एवं धर्मध्यानस्वामिन-माख्याति—

धर्मध्यानस्य स्व-रूपे स्वामि-नियम

**सूत्रम्—आज्ञा-अपाय-विपाक-संस्थानविचयाय धर्ममप्र-मत्तसंयतस्य ॥ ९-३७ ॥**

भा०—आज्ञाविचयाय अपायविचयाय विपाकविचयाय संस्थानविचयाय च स्मृतिसमन्वाहारो धर्मध्यानम् । तदप्रमत्तसंयतस्य भवति ॥ ३७ ॥ किञ्चान्यत्—

टी०—आज्ञादीनां कृतद्वन्द्वानां विचयशब्देन सह षष्ठीसमासः। आज्ञादीनां विचयः— पर्यालोचनम्। विचयशब्दः प्रत्येकमभिसम्बध्यते। आज्ञापायविपाकसंस्थानविचयेभ्यस्तादर्थ्ये चतुर्थी। धर्मशब्दो व्याख्यातः। अप्रमत्तसंयतस्येति स्वामिनिर्देशः। तत्राज्ञा— सर्वज्ञप्रणीत आगमः। तामाज्ञामित्थं विचिनुयात्–पर्यालोचयेत्—पूर्वापराविशुद्धामतिनिपुणामशेषजीवकायहितामनवद्यां महार्थां महानुभावां निपुणजनाज्ञेयां द्रव्यपर्यायप्रपञ्चवतीमनादिनिधनां "इच्चेइयं दुवालसंगं गणिपिडगं न कयाइ नासी" इत्यादि (नन्दी सू० ५८) वचनात्। तत्र प्रज्ञायाः परिदुर्बलत्वादुपयुक्तोऽपि सूक्ष्मया शेमुष्या यदि नावैति भूतमर्थं सावरणज्ञानत्वात्। यथोक्तम्—

"नहि नामानाभोग–श्छद्मस्थस्येह कस्यचिन्नास्ति ।
ज्ञानावरणीयं हि, ज्ञानावरणप्रकृति कर्म ॥ १ ॥"—आर्या

तथाप्येवं विचिन्वतोऽवितथवादिनः क्षीणरागद्वेषमोहाः सर्वज्ञा नान्यथाव्यवस्थितमन्यथा-वयन्ति भाषन्ते वाऽनृतकारणाभावात् । अतः सत्यमिदं शासनमनेकदुःखगहनात् संसारसाग-रादुत्तारकमित्याज्ञायां स्मृतिसमन्वाहारः । प्रथमं धर्मध्यानमाज्ञाविचयाख्यम् ।

अपायविचयं द्वितीयं धर्मध्यानमुच्यते । अपाया–विपदः शारीर-मानसानि दुःखानीति पर्यायास्तेषां विचयः–अन्वेषणमिहामुत्र च रागद्वेषाकुलितचेतोवृत्तयः सत्त्वा मूलोत्तरप्रकृति-विभागार्पितजन्मजरामरणार्णवभ्रमणपरिखेदितान्तरात्मानः सांसारिकसुखप्रपञ्चेष्ववितृप्तमानसाः कायेन्द्रियादिष्वास्रवद्वारप्रवाहेषु वर्तमाना मिथ्यात्वाज्ञानाविरतिपरिणतिभिर्निर्वृत्ताः । प्रातिप-दिकात् तादर्थ्ये चतुर्थीबहुवचनम् । हिंसायै हिंसार्थं हिंसाप्रयोजनं रौद्रं भवति ध्यानम् । एवमनृताय स्तेयाय विषयसंरक्षणाय चेति वाच्यं रौद्रमित्युक्तं निर्वचनं प्राक् । अविरतश्च

१ छाया—
इत्येतद् द्वादशाङ्गं गणिपिटकं न कदापि नासीत् ।
२ 'विचिन्वता' इति च–पाठः ।

देशविरतश्च कृतद्वन्द्वौ स्वामिनौ रौद्रध्यानस्य निर्दिष्टौ षष्ठीद्विवचनेन । अविरत-देशविरतयोस्तु रौद्रध्यानमेतावस्य ध्यातारावित्यर्थः । एतदेव भाष्यकारो विवृणोति-हिंसार्थमित्यादिना । स्पष्टमेव तादर्थ्यं दर्शयति । "प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा" ( अ० ७, सू० ८ ) तच्च सत्त्वव्यापादनोद्बन्धपरितापनताडनकरचरणश्रवणनासिकाऽधरवृषणशिश्नादिच्छेदनस्वभावं हिंसानन्दम् । तत्र स्मृतिसमन्वाहारो रौद्रध्यानम् । ये च जीवव्यापादनोपायाः परस्य च दुःखोत्पादनप्रयोगास्तेषु च स्मृतिसमन्वाहारो हिंसानन्दमिति प्रथमो विकल्पः ।

प्रबलरागद्वेषमोहस्य अनृतप्रयोजनवत् कन्याक्षितिनिक्षेपापलापपिशुनासत्यासद्भूतघाताभिसन्धानप्रवणमसदभिधानमनृतं तत्परोपघातार्थमनुपरततीव्ररौद्राशयस्य स्मृतेः समन्वाहारः । तत्रैवं दृढप्रणिधानमनृतानन्दमिति ।

स्तेयार्थं स्तेयप्रयोजनमधुनोच्यते । तीव्रसङ्क्लेशाध्यवसायस्य ध्यातुः प्रबलीभूतलोभप्रचाराहितसंस्कारस्य अपास्तपरलोकापेक्षस्य परस्वादित्सोरकुशलः स्मृतिसमन्वाहारः । द्रव्यहरणोपाय एव चेतसो निरोधः प्रणिधानमित्यर्थः ।

विषयसंरक्षणार्थं चेति चतुर्थो विकल्पः । चशब्दः समुच्चये । विषयपरिपालनप्रयोजनं च भवति रौद्रं ध्यानम् । विषमिव यान्ति विसर्पन्ति परिभुज्यमानाः । पृषोदरादित्वात् संस्कारः । अथवा 'षिञ् बन्धने' ( पा० धा० १४७८ ) भोक्तारं विशेषेण विविधं वा सिन्वन्ति-बध्नन्तीति विषयाः-शब्दादयः । तत्साधनानि च चेतनाचेतनव्यामिश्रवस्तूनि विषयशब्दवाच्यानि । विषीदन्ति वा प्राणिनो येषु परिभुञ्जानास्ते विषयाः । यथोक्तं ( प्रशमरतौ श्लो० १०७ )—

विषयशब्दस्य निष्पादनम्

"यद्यपि निषेव्यमाणा, मनसः परितुष्टिकारका विषयाः ।
किम्पाकफलादनवद्, भवन्ति पश्चादतिदुरन्ताः ॥"—आर्या

विषयाणां च संरक्षणमुक्तं परिग्रहेष्वप्राप्तनष्टेषु काङ्क्षाशोकौ प्राप्तेषु रक्षणमुपभोगे चावितृप्तिः । इत्थं च विषयसंरक्षणाहितक्रौर्यस्य म्लेच्छमलिम्लुचाग्निक्षेत्रमृदायादिभ्यः समुदितायुधस्यानायुधस्य वा रक्षतः तीव्रेण लोभकषायेणानुरक्तचेतसः तद्गतप्रणिधानस्य तत्रैव स्मृतिसमन्वाहारमाचरतो विषयसंरक्षणानन्दम् रौद्रं भवति ध्यानम् । तच्चैतदविरतस्वामिकम् । तौ च पूर्वोक्तलक्षणौ । तयोरेव च भवत्येतत् प्रमत्तसंयतादीनामिति । रौद्रध्यायिनः तीव्रसंक्लिष्टाः कापोतनीलकृष्णलेश्यास्तिस्रस्तदनुगमाच्च नरकगतिमूलमेतत् । पर्याप्तमादाय कर्मजालं दुरन्तं

१ 'ये च व्यापादनो' इति ङ-पाठः । २ 'प्रसंगा' इति च-पाठः । ३ 'ष्वप्राप्तनष्टेषु' इति च-पाठः ।
४ 'त्येव त(?) प्रमत्त' इति ग-पाठः । ५ 'संक्लेशाः' इति ङ-पाठः । ६ 'नीललेश्या' इति ङ-पाठः ।

भा०—मिथ्यादर्शनादयो बन्धहेतवोऽभिहिताः (पृ० १२१)। तेषामपि तदावरणीयस्य कर्मणः क्षयादभावो भवति सम्यग्दर्शनादीनां चोत्पत्तिः। "तत्त्वार्थश्रद्धानं सम्यग्दर्शनं" (अ० १, सू० २), "तन्निसर्गादधिगमाद् वा" (अ० १, सू० ३) इत्युक्तम्॥

टी०—मिथ्यादर्शनादय इत्यादि भाष्यम्। प्रागभिहिता मिथ्यादर्शनादयस्तेषामपि मिथ्यादर्शनादीनां बन्धहेतूनां तदावरणीयस्य कर्मणः क्षयादभावो भवति। मिथ्यादर्शनं अज्ञानविशेषः। ज्ञानावरणीयेन कर्मणा ज्ञानमेवाच्छादितं सदज्ञानमुच्यते। अन्यथा व्यवस्थितान् जीवादिपदार्थान् अन्यथा—वैपरीत्येन प्रतिपद्यते, अत आह—तदावरणीयस्य कर्मणः क्षयादात्यन्तिकात् तस्य मिथ्याज्ञानस्य यदावरणं तदभावान्मिथ्यादर्शनाभावः। नाप्यविरति-प्रमाद-कषाया-दर्शनावरणमोहक्षयात् योगनिरोधकाले च योगनिमित्तोऽप्यपैति बन्धः। इत्थं बन्धहेत्वभावे सति निर्जरणमुपचितस्य कर्मणोऽन्त्यकाले समस्ति। सम्यग्दर्शनज्ञानावरणानां[1] चोत्पत्तिः प्रागभिहितानामुपलक्षयति—"तत्त्वार्थश्रद्धानं सम्यग्दर्शनं" (अ० १, सू०२) "तन्निसर्गादधिगमाद् वा" (अ० १, सू० ३) इत्युक्तैव न पुनरपि व्याख्यायते। अथवा सर्वमेतत् पूर्वमुक्तम्।

भा०—एवं संवरसंवृतस्य महात्मनः सम्यग्व्यायामस्याभिनवस्य कर्मणः उपचयो न भवति।

टी०—एवं संवरसंवृतस्येत्यादि। एवम् उक्तेन प्रकारेण बन्धहेत्वसम्भव एव संवरस्तेन संवृतस्य-स्थगितसकलास्रवद्वारस्य महात्मनः परमातिशयसम्पन्नस्य सम्यग्व्यायामस्य—सम्यक्क्रियानुष्ठायिनः छद्मस्थस्य सयोगिकेवलिनश्च निरुद्धसकलयोगस्य च अभिनवस्यापूर्वकर्मणः उपचयो—बन्धो न भवति॥

भा०—पूर्वोपचितस्य च यथोक्तैर्निर्जराहेतुभिरत्यन्तक्षयः। ततः सर्वद्रव्यपर्यायविषयं पारमैश्वर्यमनन्तं केवलं ज्ञानदर्शनं प्राप्य शुद्धो बुद्धः सर्वज्ञः सर्वदर्शी जिनः केवली भवति। ततः प्रतनुशुभचतुःकर्मावशेषः आयुःकर्मसंस्कारवशाद् विहरति॥ २॥ ततोऽस्य

टी०—पूर्वोपचितस्य—प्राग्बद्धस्य क्षयो यथोक्तैस्तपोऽनुष्ठानादिभिर्निर्जराहेतुभिरात्यन्तिको घातिकर्मक्षयः, इतरस्तु भवधारणीयक्षयः। ततो घातिकर्मक्षयात् समनन्तरमेव समस्तद्रव्यपर्यायविषयमित्यनेनैतावदेव ज्ञेयमिति सूचयति। परं—प्रकृष्टमैश्वर्य—विभूतिः परम्—असाधारणं ईश्वरत्वं ऐश्वर्यं अनन्तमपर्यवसानत्वादनुच्छेदित्वात् केवलम्-असहायं मत्यादिरहितं ज्ञानं च दर्शनं च प्राप्य—लब्ध्वा शुद्धो धौतोऽपनीत[2]सकलकर्ममलः। बुद्ध इति कर्तरि

१ 'सम्यग्दर्शनज्ञानावरणानां' इति ग-पाठः। २ 'अपगत' इति ग-पाठः।

अभावोऽपि हि निमित्तं भवति यथा विपक्षे हेत्वभावोऽस्य गमकः । तत्क्षयादुत्पद्यत इति, घातिकर्मक्षयाज्जायत इत्यर्थः । अथवाऽऽद्विकल्पे गुणो हेतुः । "विभाषा गुणेऽस्त्रियाम्" (पा० अ० २, पा० ३, सू० २५) इति ॥

भा०—हेतौ पञ्चमीनिर्देशः । मोहक्षयादिति पृथक्करणं क्रमप्रसिद्ध्यर्थम् । यथा—गम्येत पूर्वं मोहनीयं कृत्स्नं क्षीयते । ततोऽन्तर्मुहूर्तं छद्मस्थवीतरागो भवति । ततोऽस्य ज्ञानदर्शनावरणान्तरायप्रकृतीनां तिसृणां युगपत् क्षयो भवति । ततः केवलमुत्पद्यत इति ॥ १ ॥

टी०—हेतौ पञ्चमीनिर्देशः । मोहक्षयादिति । शेषेषु कर्मचतुष्टये व्यपेते निरावरणो जीवस्वभावो ज्ञानदर्शनलक्षणः सदा प्रकाशि । तस्य च शेषकर्मविगमो निमित्तं किरणमालिन इवातिघनदलाभ्रपटलप्रच्छादितमण्डलस्य सङ्कुचितकिरणकलापस्य तदपगमे निरावरणसमस्तगभस्तिविस्तरणवद् विकसति ज्ञानं दर्शनं च । मोहक्षयादिति पृथक्करणं प्रतिविशिष्टक्रमप्रसिद्ध्यर्थम् । क्रमप्रसिद्धिः यथाऽऽगमे तत् प्राङ्मोहनीयक्षय एव सर्वस्य मुमुक्षोः । ततश्च मोहसागरमुत्तीर्यान्तर्मुहूर्तमात्रं विश्राम्यति छद्मस्थवीतरागावस्थः । ततोऽस्य ज्ञानदर्शनावरणान्तरायक्षयो युगपदेव भवति । तत्समनन्तरमेव च केवलज्ञानं केवलदर्शनं चोपजनमासादयति । यथोक्तमागमे—"वीसमिऊण नियंठो" इत्यादि "चरिमे नाणावरणं" इत्यादि ॥ १ ॥

भा०—अत्राह—उक्तं (पृ० २९३) मोहक्षयात् ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलमिति । अथ मोहनीयादीनां क्षयः कथं भवतीति ? । अत्रोच्यते—

टी०—अत्राह—उक्तमित्यादिनोत्तरसूत्रं सम्बध्नाति । मोहक्षयात् केवलज्ञानोत्पत्तिः । अथैषां मोहादीनां क्षयः कथं—केन प्रकारेण भवतीति ? । अयमभिप्रायः प्रश्नयतः—यावदपि सकषाययोगस्तावदपि कर्म सततं बध्नाति कषाययोगप्रत्ययम् । तच्च प्रतिक्षणं बध्नन् कथं क्षयं करोतीति ? । अत्रोच्यत इत्याह—

कर्मपरिक्षये हेतू सूत्रम्—बन्धहेत्वभाव-निर्जराभ्याम् ॥ १०-२ ॥

टी०—आत्मप्रदेशानां कर्मपुद्गलानां चान्योन्यानुगतलक्षणः क्षीरोदकवद् बन्धः । तस्य हेतुर्मिथ्यादर्शनादिपञ्चविधः । तस्य हेतोरभावादपूर्वकर्मागमो नास्ति । प्रथमबद्धस्य च निर्जरणं निर्जरा—आत्मप्रदेशेभ्यः परिशटनं कर्मणः । बन्धहेत्वभावश्च निर्जरा च बन्धहेत्वभाव-निर्जरे ताभ्यां हेतुभ्यां कर्मपरिक्षयः ॥

---

१ 'तथा विपक्षे' इति ङ-पाठः ।

२-३ छाया—

विश्रामयित्वा निर्ग्रन्थः; चरमे ज्ञानावरणम् ।

४ 'सन्तानं' इति ग-पाठः । ५ 'प्रदेशिनां' इति ग-पाठः ।

नामकर्मप्रकृतयश्च त्रयोदश, दर्शनावरणप्रकृतयश्च तिस्रः। क्रमेणानेनाप्रत्याख्यानाः क्रोधादयश्चत्वारः, प्रत्याख्यानावरणाः क्रोधादयश्चत्वारः, नरकगतिः, नरकगत्यानुपूर्वी, तिर्यग्गतिः, तिर्यग्गत्यानुपूर्वी, एक-द्वि-त्रि-चतुरिन्द्रियजातयः, आतपं, उद्द्योतं, स्थावरं, सूक्ष्मं, साधारणं च। निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिः। ततो नपुंसक-स्त्रीवेदौ हास्य-रत्य-ऽरति-शोक-भय-जुगुप्साः पुरुषवेदश्च संज्वलनक्रोधमानमाया इति सूक्ष्मसम्परायस्थाने चरमसमये संज्वलनलोभः क्षीणः। ततः क्षीणकषायस्थाने निद्रा-प्रचले द्वे द्विचरमसमये क्षीणे। चरमसमये तु प्रकृतयश्चतुर्दश क्षीणाः—ज्ञानदर्शनावरणविघ्नानि पञ्च-चतुः-पञ्चभेदानि। अयोगिकेवलिनो द्विचरमसमये नामप्रकृतयः पञ्चचत्वारिंशत् क्षीणाः। ताश्चेमाः—देवगतिः, औदारिकादिशरीरपञ्चकं, संस्थानषट्कं, अङ्गोपाङ्गत्रयं, संहननषट्कं, वर्ण-गन्ध-रस-स्पर्शचतुष्टयं, मनुष्यदेवगत्यानुपूर्व्यौ, अगुरुलघु, उपघातं, पराघातं, उच्छ्वासः, प्रशस्तविहायोगतिः, अप्रशस्तविहायोगतिः, अपर्याप्तं, प्रत्येकं, स्थिरं, अस्थिरं, शुभं, अशुभं, दुर्भगं, सुस्वरं, दुःस्वरं, अनादेयं, अयशःकीर्तिः, निर्माणम्। वाह्ये च द्वे अन्यतरवेदनीये नीचैर्गोत्राख्ये क्षीणे तीर्थकराऽयोगकेवलिनश्चरमसमये द्वादश क्षीणाः—अन्यतरवेद्यं, उच्चैर्गोत्रं, मनुष्यायुः, नव च नामप्रकृतयः। तद्यथा—मनुष्यगति-पञ्चेन्द्रियजाति-त्रस-बादर-पर्याप्त-सुभगा-ऽऽदेय-यशःकीर्ति-तीर्थकराख्याः। अतीर्थकराऽयोगकेवलिनस्तु चरमसमये एता एवैकादश क्षीणाः तीर्थकरनामवर्जाः। मनुष्यायुश्चैकमेव बद्धं, न शेषाणीत्येकमेव गण्यते। एवं तत्क्षयसमकालमेव—सकलकर्मक्षयतुल्यकालमेव **औदारिकशरीरवियुक्तस्यास्य मनुष्यजन्मनः प्रहाणम्—उच्छेदः। बन्धहेत्वभावाच्चोत्तरजन्मनोऽप्रादुर्भावः।** एषाऽवस्थितिः पूर्वजन्मन उच्छेद उत्तरजन्माप्रादुर्भावः। केवल आत्मा ज्ञानाद्युपयोगलक्षणः शुद्धः, इत्येषाऽवस्था कृत्स्नकर्मक्षयलक्षणो मोक्ष इत्याख्यायते। अवस्थाग्रहणमात्मानुच्छेदप्रतिपादनार्थमिति ॥ ३ ॥

कस्मिन् गुणस्थाने कस्याः प्रकृतेः क्षयः?

किञ्चान्यदित्यनेन तस्यामवस्थायां प्रष्टव्यशेषमाशङ्कते—"औपशमिक-क्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च" (अ० २, सू० १) इत्युक्तं जीवस्वतत्त्वम्। तत् किं तस्यामवस्थायां सकलमेव परिशटति उत नैव क्षीयते किञ्चित् आहोस्वित् किञ्चन परिशटति किञ्चिन्नेति सन्देहापनयनार्थमाह सूत्रकारः—

**सूत्रम्—औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्व-ज्ञान-दर्शन-सिद्धत्वेभ्यः ॥ १०—४ ॥**

---

१ 'रिकशरीर' इति ङ-पाठः। २ 'तरवेद्ये' इति ङ-पाठः। ३ 'सुभगोदय' इति ङ-पाठः। ४ 'गम्यते' इति ङ-पाठः।

निष्ठा। बुध्यतेरकर्मकत्वात् बुधबिन्दुरानोऽपि प्रयोगदर्शनादकर्मकत्वम्। बुध्यत इति बुद्धः, ज्ञानस्वभाव इत्यर्थः। केवलज्ञानेन सर्वं जानाति इति सर्वज्ञः। केवलदर्शनेन सर्वं पश्यतीति सर्वदर्शी। रागद्वेषमोहविनिर्जितः। केवली केवलज्ञानदर्शनयुक्तत्वात्। तत उत्पन्नकेवलज्ञानः प्रतनूनि-स्वल्पानुभागानि शुभविपाकानि च अघातीनि कर्माण्यवशेषाणि यस्य वेद्या-ऽऽयु-र्नाम-गोत्राणि स चायुषः कर्मणः संस्कारवशात्, प्रतिक्षणमनुवृत्तिः संस्कारः, तद्वशात् विहरति भव्यजनकुमुदवनबोधनाय धर्मराजशिखरी कदाचिद् ग्रामादि विहरति तिष्ठति च। विविधं रजो हरतीति विहरति॥ २॥

ततोऽस्य विहरत उक्तेन विधिना आयुष्ककर्मपरिसमाप्तावितराण्यपि त्रीणि कर्माणि क्षीयन्ते। अतः—

## सूत्रम्—कृत्स्नकर्मक्षयो मोक्षः॥ १०-३॥

टी०—कृत्स्नं-सम्पूर्णं निरवशेषं ज्ञानावरणाद्यन्तरायपर्यवसानमष्टविधं मूलप्रकृतिनाम्ना, उत्तरप्रकृतीनां तु द्वाविंशत्युत्तरं शतम्। एतत् कृत्स्नं कर्म तस्य क्षयः-नाशः आत्मप्रदेशेभ्योऽपगमः। कर्मराशेर्मोक्षः, आत्मनः स्वात्मावस्थानमिति॥

भा०—कृत्स्नकर्मक्षयलक्षणो मोक्षो भवति।

टी०—कृत्स्नकर्मक्षयलक्षण इत्यादि भाष्यम्। कृत्स्नकर्मक्षयो लक्षणं यस्य मोक्षस्य। कृत्स्नकर्मविमुक्त्या आत्मा मुक्त इति लक्ष्यते। स एव मोक्षः सकलकर्मविमुक्तस्य ज्ञानदर्शनोपयोगलक्षणस्यात्मनः स्वात्मन्यवस्थानं मोक्षः, न पुनरात्माभाव एव। परिणामिनो निरन्वयनाशे न तदुपपत्तिदृष्टान्तौ परिणामित्वादेव ज्ञानाद्यात्मा न सोऽभावः। स च कर्मणामपगमः क्रमेणामुनेति दर्शयति—

भा०—पूर्वं क्षीणानि चत्वारि कर्माणि पश्चाद् वेदनीय-नाम-गोत्रा-ऽऽयुष्कक्षयो भवति। तत्क्षयसमकालमेवौदारिकशरीरवियुक्तस्यास्य जन्मनः प्रहाणम्। हेत्वभावाच्चोत्तरस्याप्रादुर्भावः। एषाऽवस्था कृत्स्नकर्मक्षयो मोक्ष इत्युच्यते॥ ३॥

किञ्चान्यत्—

टी०—केवलज्ञानोत्पत्तेः प्राक्-पूर्वं मोहनीयज्ञानदर्शनावरणान्तरायाख्यानि चत्वारि घातिकर्माणि क्षीणानि। ततः केवलज्ञानोत्पत्तिः पश्चाद् वेदनीय-नाम-गोत्रा-ऽऽयुष्कक्षयो भवतीति। केवलज्ञानोत्पादात् पश्चाद्वेदनीयादीनि चत्वारि कर्माणि क्षयं प्रतिपद्यन्ते भवधारणीयानि। तत्र का प्रकृतिः क्व गुणस्थाने क्षीणेति प्रपञ्चेन प्रदर्श्यते—अविरतसम्यग्दृष्टि-देशयति-प्रमत्ताप्रमत्तस्थानानामन्यतमस्थाने मोहनीयप्रकृतयः सप्त क्षीणाः, अनन्तानुबन्धिनश्चत्वारः सम्यक्त्व-मिथ्यात्व-तदुभयानि च। अतोऽनिवृत्तिस्थाने मोहनीयप्रकृतयो विंशतिः क्षीणाः,

१ 'तदुत्पत्ति' इति ङ-पाठः।

नामकर्मप्रकृतयश्च त्रयोदश, दर्शनावरणप्रकृतयश्च तिस्रः। क्रमेणानेनाप्रत्याख्यानाः क्रोधादयश्चत्वारः, प्रत्याख्यानावरणाः क्रोधादयश्चत्वारः, नरकगतिः, नरकगत्यानुपूर्वी, तिर्यग्गतिः, तिर्यग्गत्यानुपूर्वी, एक-द्वि-त्रि-चतुरिन्द्रियजातयः, आतपं, उद्द्योतं, स्थावरं, सूक्ष्मं, साधारणं च। निद्रानिद्रा प्रचलाप्रचला स्त्यानर्द्धिः। ततो नपुंसक-स्त्रीवेदौ हास्य-रत्य-ऽरति-शोक-भय-जुगुप्साः पुरुषवेदश्च संज्वलनक्रोधमानमाया इति सूक्ष्मसम्परायस्थाने चरमसमये संज्वलनलोभः क्षीणः। ततः क्षीणकषायस्थाने निद्रा-प्रचले द्वे द्विचरमसमये क्षीणे। चरमसमये तु प्रकृतयश्चतुर्दश क्षीणाः—ज्ञानदर्शनावरणविघ्नानि पञ्च-चतुः-पञ्चभेदानि। अयोगिकेवलिनो द्विचरमसमये नामप्रकृतयः पञ्चचत्वारिंशत् क्षीणाः। ताश्चेमाः—देवगतिः, औदारिकादिशरीरपञ्चकं, संस्थानषट्कं, अङ्गोपाङ्गत्रयं, संहननषट्कं, वर्ण-गन्ध-रस-स्पर्शचतुष्टयं, मनुष्यदेवगत्यानुपूर्व्यौ, अगुरुलघु, उपघातं, पराघातं, उच्छ्वासः, प्रशस्तविहायोगतिः, अप्रशस्तविहायोगतिः, अपर्याप्तं, प्रत्येकं, स्थिरं, अस्थिरं, शुभं, अशुभं, दुर्भगं, सुस्वरं, दुःस्वरं, अनादेयं, अयशःकीर्तिः, निर्माणम्। वाह्ये च द्वे अन्यतरवेदनीये नीचैर्गोत्राख्ये क्षीणे तीर्थकराऽयोगकेवलिनश्चरमसमये द्वादश क्षीणाः—अन्यतरवेद्यं, उच्चैर्गोत्रं, मनुष्यायुः, नव च नामप्रकृतयः। तद्यथा—मनुष्यगति-पञ्चेन्द्रियजाति-त्रस-बादर-पर्याप्त-सुभगा-ऽऽदेय-यशःकीर्ति-तीर्थकराख्याः। अतीर्थकराऽयोगकेवलिनस्तु चरमसमये एता एवैकादश क्षीणाः तीर्थकरनामवर्जाः। मनुष्यायुश्चैकमेव बद्धं, न शेषाणीत्येकमेव गण्यते। एवं **तत्क्षयसमकालमेव**—सकलकर्मक्षयतुल्यकालमेव **औदारिकशरीरवियुक्तस्यास्य मनुष्यजन्मनः प्रहाणम्**—उच्छेदः। **बन्धहेत्वभावाच्चोत्तरजन्मनोऽप्रादुर्भावः।** एषाऽवस्थितिः पूर्वजन्मन उच्छेद उत्तरजन्माप्रादुर्भावः। केवल आत्मा ज्ञानाद्युपयोगलक्षणः शुद्धः, इत्येषाऽवस्था **कृत्स्नकर्मक्षयलक्षणो मोक्ष** इत्याख्यायते। अवस्थाग्रहणमात्मानुच्छेदप्रतिपादनार्थमिति॥ ३॥

कस्मिन् गुणस्थाने कस्याः प्रकृतेः क्षयः?

किञ्चान्यदित्यनेन तस्यामवस्थायां प्रष्टव्यशेषमाशङ्कते—"औपशमिक-क्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च" (अ० २, सू० १) इत्युक्तं जीवस्वतत्त्वम्। तत् किं तस्यामवस्थायां सकलमेव परिशटति उत नैव क्षीयते किञ्चित् आहोस्वित् किञ्चन परिशटति किञ्चिन्नेति सन्देहापनयनार्थमाह सूत्रकारः—

## सूत्रम्—औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्व-ज्ञान-दर्शन-सिद्धत्वेभ्यः॥ १०—४॥

१ 'रिकशरीर' इति ङ-पाठः। २ 'तरवेद्य' इति ङ-पाठः। ३ 'सुभगोदय' इति ङ-पाठः। ४ 'गम्यते' इति ङ-पाठः।

निष्ठा। बुध्यतेरकर्मकत्वात् बुधविबुद्धावित्यकर्मके प्रयोगदर्शनादकर्मकत्वम्। बुध्यत इति बुद्धः, ज्ञानस्वभाव इत्यर्थः। केवलज्ञानेन सर्वं जानाति इति सर्वज्ञः। केवलदर्शनेन सर्वं पश्यतीति सर्वदर्शी। रागद्वेषमोहजिज्जिनः। केवली केवलज्ञानदर्शनसम्भवात्। तत उत्पन्नकेवलज्ञानः प्रतनूनि–स्वल्पानुभावानि शुभविपाकानि न प्रायफलानि कर्माण्यवशेषाणि यस्य वेद्या-ऽऽयु-र्नाम-गोत्राणि स चायुषः कर्मणः संस्कारवशात्, अनभिभवमनुवृत्तिः संस्कारः, तद्वशात् विहरति भव्यजनप्रबुद्धजनबोधनाय क्षितितलेऽपि ग्रामादिषु भ्याति विहरति तिष्ठति वा। विविधं रजो हरतीति विहरति॥ २॥

ततोऽस्य विहरत उक्तेन विधिना आयुष्कर्मपरिसमाप्तावितराण्यपि त्रीणि कर्माणि क्षीयन्ते। अतः—

## सूत्रम्—कृत्स्नकर्मक्षयो मोक्षः॥ १०–३॥

टी०—कृत्स्नं–सम्पूर्णं निरवशेषं ज्ञानावरणाद्यन्तरायपर्यवसानमष्टविधं मूलप्रकृतिनाम्ना, उत्तरप्रकृतीनां तु द्वाविंशत्युत्तरं शतम्। एतत् कृत्स्नं कर्म तस्य क्षयः–नाशः आत्मप्रदेशेभ्योऽपगमः। कर्मराशेर्मोक्षः, आत्मनः स्वात्मावस्थानमिति॥

भा०—कृत्स्नकर्मक्षयलक्षणो मोक्षो भवति।

टी०—कृत्स्नकर्मक्षयलक्षण इत्यादि भाष्यम्। कृत्स्नकर्मक्षयो लक्षणं यस्य मोक्षस्य। कृत्स्नकर्मविमुक्त्या आत्मा मुक्त इति लक्ष्यते। स एव मोक्षः सकलकर्मविमुक्तस्य ज्ञानदर्शनोपयोगलक्षणस्यात्मनः स्वात्मन्यवस्थानं मोक्षः, न पुनरात्माभाव एव। परिणामिनो निरन्वयनाशे न तेदुपपत्तिदृष्टान्तौ[1] परिणामित्वादेव ज्ञानाद्यात्मा न सोऽभावः। स च कर्मणामपगमः क्रमेणाप्नुनेति दर्शयति—

भा०—पूर्वं क्षीणानि चत्वारि कर्माणि पश्चाद् वेदनीय-नाम-गोत्रा-ऽऽयुष्कक्षयो भवति। तत्क्षयसमकालमेवौदारिकशरीरवियुक्तस्यास्य जन्मनः प्रहाणम्। हेत्वभावाच्चोत्तरस्याप्रादुर्भावः। एषाऽवस्था कृत्स्नकर्मक्षयो मोक्ष इत्युच्यते॥ ३॥

किञ्चान्यत्—

टी०—केवलज्ञानोत्पत्तेः प्राक्–पूर्वं मोहनीयज्ञानदर्शनावरणान्तरायाख्यानि चत्वारि घातिकर्माणि क्षीणानि। ततः केवलज्ञानोत्पत्तिः पश्चाद् वेदनीय-नाम-गोत्रा-ऽऽयुष्कक्षयो भवतीति। केवलज्ञानोत्पादात् पश्चाद्वेदनीयादीनि चत्वारि कर्माणि क्षयं प्रतिपद्यन्ते भवधारणीयानि। तत्र का प्रकृतिः क गुणस्थाने क्षीणेति प्रपञ्चेन प्रदर्श्यते—अविरतसम्यग्दृष्टि-देशयति-प्रमत्ताप्रमत्तस्थानानामन्यतमस्थाने मोहनीयप्रकृतयः सप्त क्षीणाः, अनन्तानुबन्धिनश्चत्वारः सम्यक्त्व-मिथ्यात्व-तदुभयानि च। अतोऽनिवृत्तिस्थाने मोहनीयप्रकृतयो विंशतिः क्षीणाः,

१ 'तदुत्पत्ति' इति ङ-पाठः।

भूमिमित्याह—आ लोकान्तात् पञ्चास्तिकायसमुदायो लोकः तस्यान्तो—मस्तकः, तत्रेषत्प्राग्भारा नाम क्षोणी तुहिनसकलधवला उत्तानकच्छत्रकाकृतिः । तस्याश्चोपरि योजनमेकं लोकः, तस्याधस्तनक्रोशत्रयं हित्वा तुरीयक्रोशस्य उपरितनके षड्भागे त्रयस्त्रिंशदुत्तरधनुस्त्रिशतीसम्मिते धनुस्त्रिभागाधिके लोकान्तशब्दो वर्तते । आङो मर्यादायां प्रयोगः आ उदकान्तादिति यथा, एवमा लोकान्ताद् गच्छति, न ततः परमिति । तस्य च मुक्तात्मनो देहवियोगः सर्वात्मना तैजस-कार्मणयोः क्षयः । सिध्यमानगतिरिति ताच्छील्ये वाऽनङ्सेधनशील एवासौ नान्यशीलोऽवश्यमेव सिध्यति तस्य गतिरितो गमनं मुक्तस्य सतः लोकान्तप्राप्तिः—लोकान्तेऽवस्थानं एतत्त्रितयमप्येकेन समयेन परमनिरुद्धेन कालविशेषेण युगपद् भवति । गतिश्च समयान्तरं प्रदेशान्तरं वाऽस्पृशन्ती भवति । तस्य

मतान्तरम्

अचिन्त्यसामर्थ्याच्चैतत् सर्वं युगपद् भवति । देहवियोगादि केचिदाहुः कर्मक्षयकालश्च देहवियोगादिसमकाल एव भवतीति ।

**भा०—तद्यथा—प्रयोगपरिणामादिसमुत्थस्य गतिकर्मण उत्पत्तिकार्यारम्भविनाशा युगपदेकसमयेन भवन्ति तद्वत् ॥ ५ ॥**

टी०—तद्यथेत्यादिना दृष्टान्तयति—प्रसिद्धेन दृष्टान्तवस्तुना सिद्धस्य उत्पादादीनामेककालता साध्यते । प्रयोगो वीर्यान्तरायक्षयोपशमात् क्षयाद् वा चेष्टास्वरूपः परिणामः प्रयोगपरिणामः । आदिग्रहणात् स्वाभाविको वा । परमाण्वादीनां गतिपरिणामस्तत्समुत्थस्य—तस्माज्जातस्य गतिकर्मणो—गतिक्रियाविशेषस्य कार्यद्वारेणोत्पत्तिकालः कार्यारम्भश्च कारणविनाशश्च पर्यायान्तरेण द्व्यणुकादिकार्यारम्भः पूर्वपर्यायेण विनाशस्तद्वत् सिद्धस्यापि कर्मक्षयदेहवियोगादयः समकाला एकसमयेन भवन्तीत्यर्थः । उत्पादविगमस्थानवदिति सुज्ञानम् ॥ ५ ॥

**भा०—अत्राह—प्रहीणकर्मणो निरास्रवस्य कथं भवतीति ? । अत्रोच्यते—**

टी०—अत्राहेत्यादि सूत्रं सम्बध्नाति । प्रहीणकर्मण इति क्षपितनिरवशेषकर्मराशेर्निरास्रवस्य—निरस्तकायवाङ्मनोयोगस्य कथं—केन प्रकारेण गतिः—लोकान्तप्राप्तिर्भवति । एवं मन्यते—योगाभावात् स तदा निष्क्रियोऽगतिश्च (अ)क्रियातो लोकान्तगमनमनुपपन्नमिति प्रश्नयति । अत्रोच्यते—यथा गमनं समस्ति मुक्तात्मनस्तथोच्यते—

---

१ 'तद्देश' इति ङ-पाठः । २ 'कच्छपाकृतिः' इति ङ-पाठः । ३ 'अत्रोदकान्ता०' इति ङ-पाठः, 'अत्रेदं कान्ता' इति तु च-ज-पाठः । ४ 'विनाशस्थान' इति ग-पाठः । ५ 'लोकगमन' इति ङ-पाठः ।

टी०—¹उपशमे भवः उपशमेन वा निर्वृत्तः औपशमिकः, स आदिर्येषां ते इमे औपशमिकादयः। आदिग्रहणेन क्षायिक-क्षायोपशमिकौदयिक-पारिणामिका गृह्यन्ते। तेषां भव्यत्वं औपशमिकादयश्च भव्यत्वं च औपशमिकादिभव्यत्वानि। एषामभावः औपशमिकादिभव्यत्वाभावः। चशब्दः समुच्चये। औपशमिकादिक्षयात् भव्यत्वाभावाच्च मुक्तस्या भवति। किं सर्वेषामौपशमिकादीनामभावः? । तदुच्यते—अन्यत्र केवलसम्यक्त्वज्ञानदर्शन-सिद्धत्वेभ्यः ²शेषा न सन्ति। औपशमिक-क्षायोपशमिकौदयिकाः सर्वथा न सन्त्येव। क्षायिके तु भावे केवलसम्यक्त्वं, क्षायिकसम्यक्त्वमित्यर्थः। केवलज्ञानं केवलदर्शनं सिद्धत्वं च सम्भवति मुक्तात्मनि। पारिणामिके तु भावे भव्यत्वमेव केवलं सिद्धे न सम्भवति। तत्रौपशमि-कादिग्रहणाद् भव्यत्वं सङ्गृहीतमेव, किमर्थं पुनर्भव्यत्वग्रहणम्? उच्यते—पारिणामिकभावे भव्यत्वमेव केवलं सिद्धे न समस्ति, शेषाः पारिणामिकाः प्रायेण सन्तीति ज्ञापनार्थम्। अस्तित्व-गुणवत्त्वा-ऽनादित्वा-ऽसङ्ख्येयप्रदेशत्व-नित्यत्वादयः सन्त्येव। एतदनुसारिभाष्यम्—

भा०—औपशमिक-क्षायोपशमिकौ-दयिक-पारिणामि³कानां भावानां भव्यत्वस्य चाभावान्मोक्षो भवति अन्यत्र केवलसम्यक्त्व-केवलज्ञान-केवल-दर्शन-सिद्धत्वेभ्यः। एते ह्यस्य क्षायिका नित्यास्तु मुक्तस्यापि भवन्ति ॥ ४ ॥

टी०—औपशमिकेत्यादि। औपशमिकादयः कृतद्वन्द्वाः षष्ठीबहुवचनेन निर्दिष्टाः। एषामभावाद् भव्यत्वाभावाच्च मोक्षः। अन्यत्र केवलसम्यक्त्वादिभ्यः इत्युपपदलक्षणा पञ्चमी। दर्शनसप्तकक्षयात् क्षायिकं ⁴केवलसम्यक्त्वं, समस्तज्ञानावरणक्षयात् क्षायिकं केवलज्ञानं अशेषदर्शनावरणक्षयात् क्षायिकं केवलदर्शनं, समस्तकर्मक्षयात् सिद्धत्वमित्येते क्षायिका भावा यस्मान्नित्यास्तस्मान्मुक्तस्यापि भवन्तीति ॥ ४ ॥

स पुनर्मुक्तात्मा यत्र मुक्तः समस्तकर्मभिः किं तत्रैवावतिष्ठते उतान्यत्रेति पृष्टे जगाद—

## सूत्रम्—तदनन्तरमूर्ध्वं गच्छत्या लोकान्तात् ॥ १०—५ ॥

भा०—तदनन्तरमिति कृत्स्नकर्मक्षयानन्तरं औपशमिकाद्यभावानन्तरं चेत्यर्थः। मुक्त ऊर्ध्वं गच्छत्या लोकान्तात्। कर्मक्षये देहवियोग-सिध्यमानगति-लोकान्तप्राप्तयो ⁵ऽस्य युगपदेकसमयेन भवन्ति।

टी०—तच्छब्देन कृत्स्नकर्मक्षयः परामृश्यते औपशमिकादिभव्यत्वाभावो वा। तद-नन्तरमिति कृत्स्नकर्मक्षयानन्तरं अनु सन्ततमेव मुक्तः सन्नूर्ध्वमेव गच्छति। कियतीं

१ 'उपशमनेन' इति ग-पाठः। २ 'सिद्धा न सन्ति' इति ङ-पाठः। ३ 'कादीनां' इति ग-पाठः।
४ 'केवलदर्शनं' इति ङ-पाठः। ५ '5स्य' इति घ-पाठः।

भूमिमित्याह—आ लोकान्तात् पञ्चास्तिकायसमुदायो लोकः तस्यान्तो—मस्तकः, तत्रैषत्प्राग्भारा नाम क्षोणी तुहिनसकलधवला उत्तानकच्छत्रकाकृतिः । तस्याश्चोपरि योजनमेकं लोकः, तस्याधस्तनक्रोशत्रयं हित्वा तुरीयक्रोशस्य उपरितनके षड्भागे त्रयस्त्रिंशदुत्तरधनुस्त्रिशतीसम्मिते धनुस्त्रिभागाधिके लोकान्तशब्दो वर्तते। आङो मर्यादायां प्रयोगः आ उदकान्तादिति यथा, एवमा लोकान्ताद् गच्छति, न ततः परमिति। तस्य च मुक्तात्मनो देहवियोगः सर्वात्मना तैजस-कार्मणयोः क्षयः। सिध्यमानगतिरिति ताच्छील्ये वाऽनङ्सेधनशील एवासौ नान्यशीलोऽवश्यमेव सिध्यति तस्य गतिरितो गमनं मुक्तस्य सतः लोकान्तप्राप्तिः—लोकान्तेऽवस्थानं एतत्त्रितयमप्येकेन समयेन परमनिरुद्धेन कालविशेषेण युगपद् भवति। गतिश्च समयान्तरं प्रदेशान्तरं वाऽस्पृशन्ती भवति। तस्य अचिन्त्यसामर्थ्याचैतत् सर्वं युगपद् भवति।[३] देहवियोगादि केचिदाहुः कर्मक्षयकालश्च देहवियोगादिसमकाल एव भवतीति।

मतान्तरम्

**भा०—तद्यथा—प्रयोगपरिणामादिसमुत्थस्य गतिकर्मण उत्पत्तिकार्यारम्भविनाशा युगपदेकसमयेन भवन्ति तद्वत्॥ ५॥**

टी०—तद्यथेत्यादिना दृष्टान्तयति—प्रसिद्धेन दृष्टान्तवस्तुना सिद्धस्य उत्पादादीनामेककालता साध्यते। प्रयोगो वीर्यान्तरायक्षयोपशमात् क्षयाद् वा चेष्टास्वरूपः परिणामः **प्रयोगपरिणामः**। आदिग्रहणात् स्वाभाविको वा। परमाण्वादीनां गतिपरिणामस्तत्समुत्थस्य—तस्माज्जातस्य **गतिकर्मणो**—गतिक्रियाविशेषस्य कार्यद्वारेणोत्पत्तिकालः **कार्यारम्भश्च** कारणविनाशश्च पर्यायान्तरेण द्व्यणुकादिकार्यारम्भः पूर्वपर्यायेण विनाशस्तद्वत् सिद्धस्यापि कर्मक्षयदेहवियोगादयः समकाला **एकसमयेन भवन्तीत्यर्थः**। उत्पाद[४]विगमस्थानवदिति सुज्ञानम्॥ ५॥

**भा०—अत्राह—प्रहीणकर्मणो निरास्रवस्य कथं भवतीति?। अत्रोच्यते—**

टी०—अत्राहेत्यादि सूत्रं सम्बध्नाति। प्रहीणकर्मण इति क्षपितनिरवशेषकर्मराशेर्निरास्रवस्य—निरस्तकायवाङ्मनोयोगस्य कथं—केन प्रकारेण गतिः—लोकान्तप्राप्तिर्भवति। एवं मन्यते—योगाभावात् स तदा निष्क्रियोऽगतिश्च (अ)क्रियातो लो[५]कान्तगमनमनुपपन्नमिति प्रश्नयति। अत्रोच्यते—यथा गमनं समस्ति मुक्तात्मनस्तथोच्यते—

---

१ 'तद्देश' इति ङ-पाठः। २ 'कच्छपाकृतिः' इति ङ-पाठः। ३ 'अत्रोदकान्ता०' इति ङ-पाठः, 'अत्रेदं कान्ता' इति तु च-ज-पाठः। ४ 'विनाशस्थान' इति ग-पाठः। ५ 'लोकगमन' इति ङ-पाठः।

टी०—¹उपशमे भवः उपशमेन वा निर्वृत्तः औपशमिकः, स आदिर्येषां ते एवं औपश-मिकादयः। आदिग्रहणेन क्षायिक-क्षायोपशमिकौदयिक-पारिणामिका गृह्यन्ते। भव्यत्व-भव्यत्वं औपशमिकादयश्च भव्यत्वं च औपशमिकादिभव्यत्वानि। एषामभावः औपशमिका-दिभव्यत्वाभावः। पञ्चम्यः सम्भवे। औपशमिकाद्यभावात् भव्यत्वाभावाच्च मुक्तो भवति। किं सर्वेषामौपशमिकादीनामभावः? उच्यते-अन्यत्र केवलसम्यक्त्वज्ञानदर्शन-सिद्धत्वेभ्यः ²शेषा न सन्ति। औपशमिक-क्षायोपशमिकौदयिकाः सर्वथा न सन्त्येव। क्षायिके तु भावे केवलसम्यक्त्वं, क्षायिकसम्यक्त्वमित्यर्थः। केवलज्ञानं केवलदर्शनं सिद्धत्वं च सम्भवति मुक्तात्मनि। पारिणामिके तु भावे भव्यत्वमेव केवलं सिद्धे न सम्भवति। ननु औपशमि-कादिग्रहणाद् भव्यत्वं गृहीतमेव, किमर्थं पुनर्भव्यत्वग्रहणम्? उच्यते—पारिणामिकभावे भव्यत्वमेव केवलं सिद्धे न समस्ति, शेषाः पारिणामिकाः सर्वेऽपि सन्तीति ज्ञापनार्थम्। अस्तित्व-गुणवत्त्वा-नादित्वा-संख्येयप्रदेशत्व-नित्यत्वादयः सन्ति। एतदनुसारिभाष्यम्-

भा०—औपशमिक-क्षायोपशमिकौदयिक-पारिणामिकानां भावानां भव्यत्वस्य चाभावान्मोक्षो भवति अन्यत्र केवलसम्यक्त्व-केवलज्ञान-केवल-दर्शन-सिद्धत्वेभ्यः। एते ह्यस्य क्षायिका नित्यास्तु मुक्तस्यापि भवन्ति ॥ ४ ॥

टी०—औपशमिकेत्यादि। औपशमिकादयः कृतद्वन्द्वाः षष्ठीबहुवचनेन निर्दिष्टाः एषामभावाद् भव्यत्वाभावाच्च मोक्षः। अन्यत्र केवलसम्यक्त्वादिभ्यः इत्युपपदलक्षणा पञ्चमी। दर्शनसप्तकक्षयात् क्षायिकं केवलसम्यक्त्वं, समस्तज्ञानावरणक्षयात् क्षायिकं केवलज्ञानं अशेषदर्शनावरणक्षयात् क्षायिकं केवलदर्शनं, समस्तकर्मक्षयात् सिद्धत्वमित्येते क्षायिका भावा यस्मान्नित्यास्तस्मान्मुक्तस्यापि भवन्तीति ॥ ४ ॥

स पुनर्मुक्तात्मा यत्र मुक्तः समस्तकर्मभिः किं तत्रैवावतिष्ठते उतान्यत्रेति पृष्टे जगाद—

## सूत्रम्—तदनन्तरमूर्ध्वं गच्छत्या लोकान्तात् ॥ १०–५ ॥

भा०—तदनन्तरमिति कृत्स्नकर्मक्षयानन्तरं औपशमिकाद्यभावानन्तरं चेत्यर्थः। मुक्त ऊर्ध्वं गच्छत्या लोकान्तात्। कर्मक्षये देहवियोग-सिध्यमानगति-लोकान्तप्राप्तयो ⁵ऽस्य युगपदेकसमयेन भवन्ति।

टी०—तच्छब्देन कृत्स्नकर्मक्षयः परामृश्यते औपशमिकादिभव्यत्वाभावो वा। तद-नन्तरमिति कृत्स्नकर्मक्षयानन्तरं अनु सन्ततमेव मुक्तः सन्नूर्ध्वमेव गच्छति। कियतीं

१ 'उपशमनेन' इति ग-पाठः। २ 'सिद्धा न सन्ति' इति ङ-पाठः। ३ 'कादीनां' इति ग-पाठः। ४ 'केवलदर्शनं' इति ङ-पाठः। ५ 'ऽस्य' इति घ-पाठः।

भा०—अतोऽन्यासङ्गादिजनिता गतिर्भवति। यथा सत्स्वपि प्रयोगादिषु गतिकारणेषु जातिनियमेनाधस्तिर्यगूर्ध्वं च स्वाभाविक्यो लोष्टवाय्वग्नीनां गतयो दृष्टास्तथा सङ्गविनिर्मुक्तस्योर्ध्वगौरवादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु कर्मसङ्गादधस्तिर्यगूर्ध्वं च। किश्चान्यत्—

टी०—अतोऽन्येति स्वाभाविकीं गतिमपहाय सङ्गादिजनिता गतिर्भवति। सङ्गः–कर्मकृतं स्खलनम्। आदिग्रहणात् अभिघातप्रेरणादिषु गमनकारणेषु। 'जातिनियमेन' जातिः पृथिव्य-ऽनिला-ऽनलव्यक्तिभेदेन भिन्ना। पृथिवीत्व-वायुत्वा-ऽग्नित्वाख्या तया नियमः क्रियते। तत्र पृथिवीत्वनियमेनाधोगतिर्लोष्टः। यो हि बादरः पृथिवीपरिणामः स सर्वोऽधोगतिः। एवं तिर्यग्गतिर्वायुः। ऊर्ध्वगतिर्दहनः। स्वजातिनियमेनैवमेषामेताः स्वाभाविक्यो गतयो यथा तथा सङ्गविनिर्मुक्तस्य-कर्मकृतस्खलनरहितस्य ऊर्ध्वगौरवात् परिणामविशेषादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु–नरकादिगतिचतुष्टयवर्तिनः संसारे परिभ्रमतः कर्मसङ्गात्–कर्मजनितस्खलनादधस्तिर्यगूर्ध्वं चानियमेन गतिर्भवति॥

किश्चान्यदिति युक्त्यन्तरोपन्याससूचनम्।

भा०—बन्धच्छेदात्। यथा रज्जुबन्धच्छेदात् पेडाया बीजकोशबन्धनच्छेदाच्चैरण्डबीजादीनां गतिर्दृष्टा तथा कर्मबन्धनच्छेदात् सिध्यमानगतिः॥ किश्चान्यत—

टी०—बन्धच्छेदादिति। बध्यते [1]येन रज्ज्वादिना स बन्धः। तस्य छेदः शस्त्रेण त्रोटनं वा। तद् व्याचष्टे—यथा रज्ज्वा गाढमापीड्यापीड्य बद्धायाः कीचकविदलघटितायाः रज्जुबन्धच्छेदादुपरितनपुटस्य गमनमूर्ध्वं दृष्टं बीजकोशबन्धच्छेदाच्च बीजकोशः फलीफलं वा तस्यास्तु बन्धनं गाढसम्पुटता सवितृकरजालशोषितायाः परिणतिकाले सम्पुटोद्भेदः छेदः। ततश्च एरण्डादिफलभेदे बीजानां गतिर्दृष्टा। तानि तूड्डीयोड्डीय दूरे पतन्ति तथा कर्मबन्धः फलकडाहस्थानीयस्तच्छेदात्–तद्विघटनादनन्तरमेवोर्ध्वं सिध्यमानगतिरिति॥ किश्चान्यदिति विवक्षितार्थप्रसाधनाय हेत्वन्तरमुपादत्ते—

भा०—तथागतिपरिणामाच्च। ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च हेतुभ्यस्तथाऽस्य गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवति, ऊर्ध्वं नाधस्तिर्यग् वा॥

टी०—तथागतिपरिणामाच्चेति। तथा–तेन प्रकारेण सर्वकर्मविनिर्मुक्तस्यास्य गतिपरिणामो भवति विगतयोगस्यापि। चशब्दः समुच्चये। एभ्यश्च पूर्वोक्तहेतुभ्यः–ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवतीति।

---

१ 'वाय्वादीनां' इति ग-पाठः। २ 'संयोगा०' इति ग-पाठः। ३ 'हेम' इति ज-पाठः। ४ 'ऊर्ध्वमेव भवति' इति घ-पाठः।

मुक्तिगमने हेतवः

सूत्रम्—पूर्वप्रयोगाद्, असङ्गत्वाद्, बन्धच्छेदात्, तथा-गतिपरिणामाच्च तद्गतिः ॥ १०–६ ॥

भा०—पूर्वप्रयोगात्। यथा हस्तदण्डचक्रसंयुक्तसंयोगात् पुरुषप्रयत्नताऽऽविद्धं कुलालचक्रमुपरतेष्वपि पुरुषप्रयत्नहस्तदण्डचक्रसंयोगेषु पूर्वप्रयोगाद् भ्रमत्येवा संस्कारपरिक्षयात्।

टी०—उपरतकर्तृव्यापाराद् यथा कुलालचक्रं 'हस्तदण्डचक्रसंयुक्तसंयोगात्' हस्तेन दण्डः संयुक्तः, दण्डेन चक्रं संयुक्तं संयुक्तसंयोगः तस्मात् पुरुषप्रयत्नतश्च-भुजपरिस्पन्दाच्च आविद्धं-वेगितं प्रेरितं उपरतेष्वपि पुरुषव्यापारादिषु पूर्वप्रयोगात् हस्तादिव्यापारप्रेरणाद् भ्रमत्येव आ संस्कारपरिक्षयात्। संस्कारः-अनवरतक्रियाप्रबन्धः। दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकुर्वन्नाह—

भा०—एवं यः पूर्वमस्य यत्कर्मणा प्रयोगो जनितः स क्षीणेऽपि कर्मणि गतिहेतुर्भवति। तत्कृता गतिः। किञ्चान्यत्—

टी०—एवं यः पूर्वमस्येत्यादि। योगनिरोधाभिमुखस्य यत् कर्म-क्रिया तेन कर्मणा यः प्रयोगो जनितः स क्षीणेऽपि कर्मणि अविच्छिन्नसंस्कारत्वात् योगाभावेऽपि गतिहेतुर्भवति। तेन हेतुना क्रियते गतिरित्यर्थः। किञ्चान्यदिति द्वितीयं हेत्वन्तरमुपन्यस्यति—

भा०—असङ्गत्वात्। पुद्गलानां जीवानां च गतिमत्त्वमुक्तं, नान्येषां द्रव्याणाम्। तत्राधोगौरवधर्माणः पुद्गलाः, ऊर्ध्वगौरवधर्माणो जीवाः। एष स्वभावः।

टी०—असङ्गत्वादिति। सङ्गः-स्खलनं तद्भावः सङ्गत्वं, स्खलितत्वमित्यर्थः। न सङ्गत्वमसङ्गत्वम्-अस्खलितत्वं तस्मादसङ्गत्वात् सिद्धस्योर्ध्वं गतिः सिद्धा। न हि स्वाभाविक्या गत्या गच्छन्नूर्ध्वं क्वचित् स्खलनमासादयति। एतव्याख्यानायाह—पुद्गलानामित्यादि। पूरणाद् गलनाच्च पुद्गलाः-परमाणुप्रभृतयः। जीवास्तु ज्ञानदर्शनोपयोगलक्षणाः। एषां पुद्गलजीवानां गतिमत्त्वमुक्तं, नान्येषां-धर्माधर्माकाशद्रव्याणाम्। तत्र स्वभावत एव अधः-अधस्तात् गौरवं भारिकत्वं, परिणामविशेषः। गौरवं धर्मो येषां ते गौरवधर्माणः पुद्गलाः ऊर्ध्वगौरवधर्माणो जीवा इति। जीवानामपि तादृशं गौरवं परिणामविशेषो लाघवं येषामिति। एवंविधं तेषां गौरवं विशिष्टं येनोर्ध्वं गच्छन्ति एषां(प ?) पुद्गलानां च स्वभावः।

१ 'चक्रसंयोगात्' इति ग-पाठः। २ 'मस्य कर्मणा' इति घ-पाठः। ३ 'सिद्धस्य' इति च-पाठः।
४ 'गतित्व' इति ग-पाठः।

भा०—अतोऽन्यासङ्गादिजनिता गतिर्भवति। यथा सत्स्वपि प्रयोगादिषु गतिकारणेषु जातिनियमेनाधस्तिर्यगूर्ध्वं च स्वाभाविक्यो लोष्टवाय्वग्नीनां गतयो दृष्टास्तथा सङ्गविनिर्मुक्तस्योर्ध्वगौरवादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु कर्मसंङ्गादधस्तिर्यगूर्ध्वं च। किञ्चान्यत्—

टी०—अतोऽन्येति स्वाभाविकीं गतिमपहाय सङ्गादिजनिता गतिर्भवति। सङ्गः–कर्मकृतं स्खलनम्। आदिग्रहणात् अभिघातप्रेरणादिषु गमनकारणेषु। 'जातिनियमेन' जातिः पृथिव्य-ऽनिला-ऽनलव्यक्तिभेदेन भिन्ना। पृथिवीत्व-वायुत्वा-ऽग्नित्वाख्या तथा नियमः क्रियते। तत्र पृथिवीत्वनियमेनाधोगतिर्लोष्टः। यो हि बादरः पृथिवीपरिणामः स सर्वोऽधोगतिः। एवं तिर्यग्गतिर्वायुः। ऊर्ध्वगतिर्दहनः। स्वजातिनियमेनैवमेषामेताः स्वाभाविक्यो गतयो यथा तथा सङ्गविनिर्मुक्तस्य-कर्मकृतस्खलनरहितस्य ऊर्ध्वगौरवात् परिणामविशेषादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु–नरकादिगतिचतुष्टयवर्तिनः संसारे परिभ्रमतः कर्मसङ्गात्–कर्मजनितस्खलनादधस्तिर्यगूर्ध्वं चानियमेन गतिर्भवति॥

किञ्चान्यदिति युक्त्यन्तरोपन्याससूचनम्।

भा०—बन्धच्छेदात्। यथा रज्जुबन्धच्छेदात् पेडाया बीजकोशबन्धनच्छेदाच्चैरण्डबीजादीनां गतिर्दृष्टा तथा कर्मबन्धनच्छेदात् सिध्यमानगतिः॥ किञ्चान्यत—

टी०—बन्धच्छेदादिति। बध्यते [1]येन रज्ज्वादिना स बन्धः। तस्य छेदः शस्त्रेण त्रोटनं वा। तद् व्याचष्टे—यथा रज्ज्वा गाढमापीड्यापीड्य बद्धायाः कीचकविदलघटितायाः रज्जुबन्धच्छेदादुपरितनपुटस्य गमनमूर्ध्वं दृष्टं बीजकोशबन्धच्छेदाच्च बीजकोशः फलीफलं वा तस्यास्तु बन्धनं गाढसम्पुटता सवितृकरजालशोषितायाः परिणतिकाले सम्पुटोद्भेदः छेदः। ततश्च एरण्डादिफलभेदे बीजानां गतिर्दृष्टा। तानि तूड्डीयोड्डीय दूरे पतन्ति तथा कर्मबन्धः फलकडाहस्थानीयस्तच्छेदात्–तद्विघटनादनन्तरमेवोर्ध्वं सिध्यमानगतिरिति॥ किञ्चान्यदिति विवक्षितार्थप्रसाधनाय हेत्वन्तरमुपादत्ते—

भा०—तथागतिपरिणामाच्च। ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च हेतुभ्यस्तथाऽस्य गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवति, ऊर्ध्वं नाधस्तिर्यग् वा॥

टी०—तथागतिपरिणामाच्चेति। तथा–तेन प्रकारेण सर्वकर्मविनिर्मुक्तस्यास्य गतिपरिणामो भवति विगतयोगस्यापि। चशब्दः समुच्चये। एभ्यश्च पूर्वोक्तहेतुभ्यः–ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवतीति।

१ 'वायादीनां' इति ग-पाठः। २ 'संयोगा०' इति ग-पाठः। ३ 'हेम' इति ज-पाठः। ४ 'ऊर्ध्वमेव भवति' इति घ-पाठः।

मुक्तगमने हेतवः

**सूत्रम्—पूर्वप्रयोगाद्, असङ्गत्वाद्, बन्धच्छेदात्, तथागतिपरिणामाच्च तद्गतिः ॥ १०-६ ॥**

भा०—पूर्वप्रयोगात्। यथा हस्तदण्डचक्रसंयुक्तसंयोगात् पुरुषप्रयत्नतश्चाविद्धं कुलालचक्रमुपरतेष्वपि पुरुषप्रयत्नहस्तदण्डचक्रसंयोगेषु पूर्वप्रयोगाद् भ्रमत्येवा संस्कारपरिक्षयात्।

टी०—उपरतकर्तृव्यापाराद् यथा कुलालचक्रं 'हस्तदण्डचक्रसंयुक्तसंयोगात्' हस्तेन दण्डः संयुक्तः, दण्डेन चक्रं संयुक्तं संयुक्तसंयोगः तस्मात् पुरुषप्रयत्नतश्च-पुरुषपरिस्पन्दाच्च आविद्धं-वेगितं प्रेरितं उपरतेष्वपि पुरुषव्यापारादिषु पूर्वप्रयोगात् हस्तादिव्यापारप्रेरणाद् भ्रमत्येव आ संस्कारपरिक्षयात्। संस्कारः-अनस्तमितक्रियाप्रबन्धः। दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकुर्वन्नाह—

भा०—एवं यः पूर्वमस्य यत्कर्मणा प्रयोगो जनितः स क्षीणेऽपि कर्मणि गतिहेतुर्भवति। तत्कृता गतिः। किञ्चान्यत्—

टी०—एवं यः पूर्वमस्येत्यादि। योगनिरोधाभिमुखस्य यत् कर्म-क्रिया तेन कर्मणा यः प्रयोगो जनितः स क्षीणेऽपि कर्मणि अविच्छिन्नसंस्कारत्वात् योगाभावेऽपि गतिहेतुर्भवति। तेन हेतुना क्रियते गतिरित्यर्थः। किञ्चान्यदिति द्वितीयं हेत्वन्तरमुपन्यस्यति—

भा०—असङ्गत्वात्। पुद्गलानां जीवानां च गतिमत्त्वमुक्तं, नान्येषां द्रव्याणाम्। तत्राधोगौरवधर्माणः पुद्गलाः, ऊर्ध्वगौरवधर्माणो जीवाः। एष स्वभावः।

टी०—असङ्गत्वादिति। सङ्गः-स्खलनं तद्भावः सङ्गत्वं, स्खलितत्वमित्यर्थः। न सङ्गत्वमसङ्गत्वम्-अस्खलितत्वं तस्मादसङ्गत्वात् सिद्धस्योर्ध्वं गतिः सिद्धा। न हि स्वाभाविक्या गत्या गच्छन्नूर्ध्वं क्वचित् स्खलनमासादयति। एतद्व्याख्यानायाह—पुद्गलानामित्यादि। पूरणाद् गलनाच्च पुद्गलाः-परमाणुप्रभृतयः। जीवास्तु ज्ञानदर्शनोपयोगलक्षणाः। एषां पुद्गलजीवानां गतिमत्त्वमुक्तं, नान्येषां-धर्माधर्माकाशद्रव्याणाम्। तत्र स्वभावत एव अधः-अधस्तात् गौरवं भारिकत्वं, परिणामविशेषः। गौरवं धर्मो येषां ते गौरवधर्माणः पुद्गलाः ऊर्ध्वगौरवधर्माणो जीवा इति। जीवानामपि तादृशं गौरवं परिणामविशेषो लाघवं येषामिति। एवंविधं तेषां गौरवं विशिष्टं येनोर्ध्वं गच्छन्ति एषां(ष ?) पुद्गलानां च स्वभावः।

१ 'चक्रसंयोगात्' इति ग-पाठः। २ 'मस्य कर्मणा' इति घ-पाठः। ३ 'सिध्यस्य' इति च-पाठः। ४ 'गतित्व' इति ग-पाठः।

भा०—अतोऽन्यासङ्गादिजनिता गतिर्भवति। यथा सत्स्वपि प्रयोगादिषु गतिकारणेषु जातिनियमेनाधस्तिर्यगूर्ध्वं च स्वाभाविक्यो लोष्टवाय्वग्नीनां गतयो दृष्टास्तथा सङ्गविनिर्मुक्तस्योर्ध्वगौरवादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु कर्मसङ्गादधस्तिर्यगूर्ध्वं च। किञ्चान्यत्—

टी०—अतोऽन्येति स्वाभाविकीं गतिमपहाय सङ्गादिजनिता गतिर्भवति। सङ्गः-कर्मकृतं स्खलनम्। आदिग्रहणात् अभिघातप्रेरणादिषु गमनकारणेषु। 'जातिनियमेन' जातिः पृथिव्य-ऽनिला-ऽनलव्यक्तिभेदेन भिन्ना। पृथिवीत्व-वायुत्वा-ऽग्नित्वाख्या तया नियमः क्रियते। तत्र पृथिवीत्वनियमेनाधोगतिर्लोष्टः। यो हि बादरः पृथिवीपरिणामः स सर्वोऽधोगतिः। एवं तिर्यग्गतिर्वायुः। ऊर्ध्वगतिर्दहनः। स्वजातिनियमेनैवमेषामेताः स्वाभाविक्यो गतयो यथा तथा सङ्गविनिर्मुक्तस्य-कर्मकृतस्खलनरहितस्य ऊर्ध्वगौरवात् परिणामविशेषादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु-नरकादिगतिचतुष्टयवर्तिनः संसारे परिभ्रमतः कर्मसङ्गात्-कर्मजनितस्खलनादधस्तिर्यगूर्ध्वं चानियमेन गतिर्भवति॥

किञ्चान्यदिति युक्त्यन्तरोपन्याससूचनम्।

भा०—बन्धच्छेदात्। यथा रज्जुबन्धच्छेदात् पेडाया बीजकोशबन्धनच्छेदाच्चैरण्डबीजादीनां गतिर्दृष्टा तथा कर्मबन्धनच्छेदात् सिध्यमानगतिः॥ किञ्चान्यत—

टी०—बन्धच्छेदादिति। बध्यते [1]येन रज्ज्वादिना स बन्धः। तस्य छेदः शस्त्रेण त्रोटनं वा। तद् व्याचष्टे—यथा रज्ज्वा गाढमापीड्यापीड्य बद्धायाः कीचकविदलघटितायाः रज्जुबन्धच्छेदादुपरितनपुटस्य गमनमूर्ध्वं दृष्टं बीजकोशबन्धच्छेदाच्च बीजकोशः फलीफलं वा तस्यास्तु बन्धनं गाढसम्पुटता सवितृकरजालशोषितायाः परिणतिकाले सम्पुटोद्भेदः छेदः। ततश्च एरण्डादिफलभेदे बीजानां गतिर्दृष्टा। तानि तूड्डीयोड्डीय दूरे पतन्ति तथा कर्मबन्धः फलकडाहस्थानीयस्तच्छेदात्-तद्विघटनादनन्तरमेवोर्ध्वं सिध्यमानगतिरिति॥ किञ्चान्यदिति विवक्षितार्थप्रसाधनाय हेत्वन्तरमुपादत्ते—

भा०—तथागतिपरिणामाच्च। ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च हेतुभ्यस्तथाऽस्य गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवति, ऊर्ध्वं नाधस्तिर्यग् वा॥

टी०—तथागतिपरिणामाच्चेति। तथा-तेन प्रकारेण सर्वकर्मविनिर्मुक्तस्यास्य गतिपरिणामो भवति विगतयोगस्यापि। चशब्दः समुच्चये। एभ्यश्च पूर्वोक्तहेतुभ्यः-ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवतीति।

---

१ 'वाय्वादीनां' इति ग-पाठः। २ 'संयोगा०' इति ग-पाठः। ३ 'हेम' इति ज-पाठः। ४ 'ऊर्ध्वमेव भवति' इति घ-पाठः।

मुक्तिगमने हेतवः

सूत्रम्—पूर्वप्रयोगाद्, असङ्गत्वाद्, बन्धच्छेदात्, तथा-गतिपरिणामाच्च तद्गतिः ॥ १०–६ ॥

भा०—पूर्वप्रयोगात्। यथा हस्तदण्डचक्रसंयुक्तसंयोगात् पुरुषप्रयत्नतश्चाविद्धं कुलालचक्रमुपरतेऽपि पुरुषप्रयत्नहस्तदण्डचक्रसंयोगेषु पूर्वप्रयोगात् भ्रमत्येवा संस्कारपरिक्षयात्।

टी०—उपलक्षणमाचष्टे यथा कुलालचक्रं 'हस्तदण्डचक्रसंयुक्तसंयोगात्' हस्तेन दण्डः संयुक्तः, दण्डेन चक्रं संयुक्तं संयुक्तसंयोगः तस्मात् पुरुषप्रयत्नतश्च-पुरुषपरिस्पन्दाच्च आविद्धं-वेगितं प्रेरितं उपरतेऽपि पुरुषव्यापारादिषु पूर्वप्रयोगात् हस्तादिव्यापार-प्रेरणाद् भ्रमत्येव आ संस्कारपरिक्षयात्। संस्कारः-अनन्तक्रियाप्रबन्धः। दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकुर्वन्नाह—

भा०—एवं यः पूर्वमस्य यत्कर्मणा प्रयोगो जनितः स क्षीणेऽपि कर्मणि गतिहेतुर्भवति। तत्कृता गतिः। किञ्चान्यत्—

टी०—एवं यः पूर्वमस्येत्यादि। योगनिरोधाभिमुखस्य यत् कर्म-क्रिया तेन कर्मणा यः प्रयोगो जनितः स क्षीणेऽपि कर्मणि अविच्छिन्नसंस्कारत्वात् योगाभावेऽपि गतिहेतु-र्भवति। तेन हेतुना क्रियते गतिरित्यर्थः। किञ्चान्यदिति द्वितीयं हेत्वन्तरमुपन्यस्यति—

भा०—असङ्गत्वात्। पुद्गलानां जीवानां च गतिमत्त्वमुक्तं, नान्येषां द्रव्या-णाम्। तत्राधोगौरवधर्माणः पुद्गलाः, ऊर्ध्वगौरवधर्माणो जीवाः। एष स्वभावः।

टी०—असङ्गत्वादिति। सङ्गः-स्खलनं तद्भावः सङ्गत्वं, स्खलितत्वमित्यर्थः। न सङ्गत्वमसङ्गत्वम्-अस्खलितत्वं तस्मादसङ्गत्वात् सिद्धस्योर्ध्वं गतिः सिद्धा। न हि स्वाभाविक्या गत्या गच्छन्नूर्ध्वं कचित् स्खलनमासादयति। एतच्चाख्यानायाह—पुद्गलानामित्यादि। पूर-णाद् गलनाच्च पुद्गलाः-परमाणुप्रभृतयः। जीवास्तु ज्ञानदर्शनोपयोगलक्षणाः। एषां पुद्गल-जीवानां गतिमत्त्वमुक्तं, नान्येषां-धर्माधर्माकाशद्रव्याणाम्। तत्र स्वभावत एव अधः-अधस्तात् गौरवं भारिकत्वं, परिणामविशेषः। गौरवं धर्मो येषां ते गौरवधर्माणः पुद्गलाः ऊर्ध्वगौरवधर्माणो जीवा इति। जीवानामपि तादृशं गौरवं परिणामविशेषो लाघवं येषामिति। एवंविधं तेषां गौरवं विशिष्टं येनोर्ध्वं गच्छन्ति एषां(ष ?) पुद्गलानां च स्वभावः।

१ 'चक्रसंयोगात्' इति ग-पाठः। २ 'मस्य कर्मणा' इति घ-पाठः। ३ 'सिद्धस्य' इति च-पाठः।
४ 'गतित्व' इति ग-पाठः।

भा०—अतोऽन्यासङ्गादिजनिता गतिर्भवति। यथा सत्स्वपि प्रयोगादिषु गतिकारणेषु जातिनियमेनाधस्तिर्यगूर्ध्वं च स्वाभाविक्यो लोष्टवाय्वग्नीनां गतयो दृष्टास्तथा सङ्गविनिर्मुक्तस्योर्ध्वगौरवादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु कर्मसंङ्गादधस्तिर्यगूर्ध्वं च। किञ्चान्यत्—

टी०—अतोऽन्येति स्वाभाविकीं गतिमपहाय सङ्गादिजनिता गतिर्भवति। सङ्गः—कर्मकृतं स्खलनम्। आदिग्रहणात् अभिघातप्रेरणादिषु गमनकारणेषु। 'जातिनियमेन' जातिः पृथिव्य-ऽनिला-ऽनलव्यक्तिभेदेन भिन्ना। पृथिवीत्व-वायुत्वा-ऽग्नित्वाख्या तया नियमः क्रियते। तत्र पृथिवीत्वनियमेनाधोगतिर्लोष्ठः। यो हि बादरः पृथिवीपरिणामः स सर्वोऽधोगतिः। एवं तिर्यग्गतिर्वायुः। ऊर्ध्वगतिर्दहनः। स्वजातिनियमेनैवमेषामेताः स्वाभाविक्यो गतयो यथा तथा सङ्गविनिर्मुक्तस्य-कर्मकृतस्खलनरहितस्य ऊर्ध्वगौरवात् परिणामविशेषादूर्ध्वमेव सिध्यमानगतिर्भवति। संसारिणस्तु—नरकादिगतिचतुष्टयवर्तिनः संसारे परिभ्रमतः कर्मसङ्गात्—कर्मजनितस्खलनादधस्तिर्यगूर्ध्वं चानियमेन गतिर्भवति॥

किञ्चान्यदिति युक्त्यन्तरोपन्याससूचनम्।

भा०—बन्धच्छेदात्। यथा रज्जुबन्धच्छेदात् पेडाया बीजकोशबन्धनच्छेदाच्चैरण्डबीजादीनां गतिर्दृष्टा तथा कर्मबन्धनच्छेदात् सिध्यमानगतिः॥ किञ्चान्यत—

टी०—बन्धच्छेदादिति। बध्यते [1]येन रज्ज्वादिना स बन्धः। तस्य छेदः शस्त्रेण त्रोटनं वा। तद् व्याचष्टे—यथा रज्ज्वा गाढमापीड्यापीड्य बद्धायाः कीचकविदलघटितायाः रज्जुबन्धच्छेदादुपरितनपुटस्य गमनमूर्ध्वं दृष्टं बीजकोशबन्धच्छेदाच्च बीजकोशः फलीफलं वा तस्यास्तु बन्धनं गाढसम्पुटता सवितृकरजालशोषितायाः परिणतिकाले सम्पुटोद्भेदः छेदः। ततश्च एरण्डादिफलभेदे बीजानां गतिर्दृष्टा। तानि तूड्डीयोड्डीय दूरे पतन्ति तथा कर्मबन्धः फलकडाहस्थानीयस्तच्छेदात्—तद्विघटनादनन्तरमेवोर्ध्वं सिध्यमानगतिरिति॥ किञ्चान्यदिति विवक्षितार्थप्रसाधनाय हेत्वन्तरमुपादत्ते—

भा०—तथागतिपरिणामाच्च। ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च हेतुभ्यस्तथाऽस्य गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवति, ऊर्ध्वं नाधस्तिर्यग् वा॥

टी०—तथागतिपरिणामाच्चेति। तथा—तेन प्रकारेण सर्वकर्मविनिर्मुक्तस्यास्य गतिपरिणामो भवति विगतयोगस्यापि। चशब्दः समुच्चये। एभ्यश्च पूर्वोक्तहेतुभ्यः—ऊर्ध्वगौरवात् पूर्वप्रयोगादिभ्यश्च गतिपरिणाम उत्पद्यते येन सिध्यमानगतिर्भवतीति।

---

१ 'वायादीनां' इति ग-पाठः। २ 'संयोगा०' इति ग-पाठः। ३ 'हेम' इति ज-पाठः। ४ 'ऊर्ध्वमेव भवति' इति घ-पाठः।

मुक्तिगमने हेतवः

सूत्रम्—पूर्वप्रयोगाद्, असङ्गत्वाद्, बन्धच्छेदात्, तथागतिपरिणामाच्च तद्गतिः ॥ १०-६ ॥

भा०—पूर्वप्रयोगात्। यथा हस्तदण्डचक्रसंयुक्तसंयोगात् पुरुषप्रयत्नतश्चाविद्धं कुलालचक्रमुपरतेऽपि पुरुषप्रयत्नहस्तदण्डचक्रसंयोगे पूर्वप्रयोगाद् भ्रमत्येवा संस्कारपरिक्षयात्।

टी०—उपरतकर्तृव्यापारात् यथा कुलालचक्रं 'हस्तदण्डचक्रसंयुक्तसंयोगात्' हस्तेन दण्डः संयुक्तः, दण्डेन चक्रं संयुक्तं संयुक्तसंयोगः तस्मात् पुरुषप्रयत्नतश्च-पुरुषपरिस्पन्दाच्च आविद्धं-वेगितं प्रेरितं उपरतेष्वपि पुरुषव्यापारादिषु पूर्वप्रयोगात् हस्तादिव्यापारप्रेरणाद् भ्रमत्येव आ संस्कारपरिक्षयात्। संस्कारः-अनन्तरक्रियाप्रबन्धः। दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकुर्वन्नाह—

भा०—एवं यः पूर्वमस्य[1] यत्कर्मणा[2] प्रयोगो जनितः स क्षीणेऽपि कर्मणि गतिहेतुर्भवति। तत्कृता गतिः। किञ्चान्यत्—

टी०—एवं यः पूर्वमस्येत्यादि। योगनिरोधाभिमुखस्य यत् कर्म-क्रिया तेन कर्मणा यः प्रयोगो जनितः स क्षीणेऽपि कर्मणि अविच्छिन्नसंस्कारत्वात् योगाभावेऽपि गतिहेतुर्भवति। तेन हेतुना क्रियते गतिरित्यर्थः। किञ्चान्यदिति द्वितीयं हेत्वन्तरमुपन्यस्यति—

भा०—असङ्गत्वात्। पुद्गलानां जीवानां च गतिमत्त्वमुक्तं, नान्येषां द्रव्याणाम्। तत्राधोगौरवधर्माणः पुद्गलाः, ऊर्ध्वगौरवधर्माणो जीवाः। एष स्वभावः।

टी०—असङ्गत्वादिति। सङ्गः-स्खलनं तद्भावः सङ्गत्वं, स्खलितत्वमित्यर्थः। न सङ्गत्वमसङ्गत्वम्-अस्खलितत्वं तस्मादसङ्गत्वात् सिद्धस्योर्ध्वं गतिः सिद्धा। न हि स्वाभाविक्या गत्या गच्छन्नूर्ध्वं कचित् स्खलनमासादयति। एतद्व्याख्यानायाह—पुद्गलानामित्यादि। पूरणाद् गलनाच्च पुद्गलाः-परमाणुप्रभृतयः। जीवास्तु ज्ञानदर्शनोपयोगलक्षणाः। एषां पुद्गलजीवानां गतिमत्त्वमुक्तं, नान्येषां-धर्माधर्माकाशद्रव्याणाम्। तत्र स्वभावत एव अधः-अधस्तात् गौरवं भारिकत्वं, परिणामविशेषः। गौरवं धर्मो येषां ते गौरवधर्माणः पुद्गलाः ऊर्ध्वगौरवधर्माणो जीवा इति। जीवानामपि तादृशं गौरवं परिणामविशेषो लाघवं येषामिति। एवंविधं तेषां गौरवं विशिष्टं येनोर्ध्वं गच्छन्ति एषां(ष ?) पुद्गलानां च स्वभावः।

१ 'चक्रसंयोगात्' इति ग-पाठः। २ 'मस्य कर्मणा' इति घ-पाठः। ३ 'सिद्धस्य' इति च-पाठः। ४ 'गतित्व' इति ग-पाठः।

सम्यग्दर्शनादिसलिलक्लेदात् प्रहीणाष्टविधकर्ममृत्तिकालेपः ऊर्ध्वगौरवादूर्ध्वमेव गच्छत्या लोकान्तात् ॥ स्यादेतत्। लोकान्तादूर्ध्वं मुक्तस्य गतिः किमर्थं न भवतीति ?। अत्रोच्यते—

टी०—एवमूर्ध्वगौरवेत्यादि । संसारोदधौ भवसलिले भवः-औदारिकादिकायनिर्वृत्तिः । भव एव सलिलं तत्र मग्नो भयासक्तः शरीरी अनियमेन अधस्तिर्यगूर्ध्वं च गच्छति । ततः सम्यग्दर्शनज्ञानावरणसलिलार्द्रीकृतप्रहीणाष्टविधकर्ममृत्तिकालेपः ऊर्ध्वमेव गच्छति आ लोकान्तादिति । स्यादेतदित्यादिना इदमाशङ्कते-ऊर्ध्वं गच्छत्या लोकान्तादिति को नियमः ? स्वाभाविक्या गत्या लोकान्तादपि परेण गच्छतु गतेर्निवारकस्याभावादिति । अत्रोच्यते—

भा०—धर्मास्तिकायाभावात्। धर्मास्तिकायो हि जीवपुद्गलानां गत्युपग्रहेणोपकुरुते । स तत्र नास्ति । तस्माद् गत्युपग्रहकारणाभावात् परतो गतिर्न भवत्यप्सु अलाबुवत् । नाधो न तिर्यगित्युक्तम् । तत्रैवानुश्रेणिगतिर्लोकान्तेऽवतिष्ठते मुक्तो निष्क्रिय इति ॥ ६ ॥

टी०—धर्मास्तिकायाभावादिति । अस्त्येव निवारकं धर्मद्रव्यं तद्व्यपेक्षाकारणं स्वयमेव गतिपरिणतस्य जीवपुद्गलद्रव्यस्य धर्मद्रव्यमुपग्राहकं भवति मीनस्येव वारिद्रव्यम्, न त्वगच्छन्तं झषं बलाद् वारि नयति । एवं गतिपरिणतस्यात्मनः पुद्गलस्य वा स्वत एव गत्युपग्रहकारी धर्मास्तिकायः कारणीभवति । स च लोकात् परतो नास्ति । तस्माद् गत्युपग्रहकारिणोऽभावात् परतो गतिर्नास्ति अप्सु यथाऽलाबुनः । अलाबु हि मृल्लेपापगमात् स्वयमेव गच्छज्जलमस्तकप्रविष्टं भवति, न परतो याति, उपग्राहकजलद्रव्याभावात्। ऊर्ध्वमेव च प्रयाति, नाधो न तिर्यगित्युक्तमेव। तत्रैवानुश्रेणिगतिर्लोकान्तेऽवतिष्ठत इति। यत्र देशे स्थितो मुच्यते समस्तैः कर्मभिस्तत्र या शरीरस्योपरि रुद्धा श्रेणिर्नभसस्तयैव गत्वा लोकान्तेऽवतिष्ठते मुक्तात्मा निष्क्रिय इति॥ यथोक्तम्—

> "धर्माभावाच्चालोके स प्रतिहन्यते न लोकाग्रे ॥
> [ न तु स्पर्शित्वात् ] गमनोपकृद्धिधर्मो जीवानां पुद्गलानां च ॥ १ ॥
> मुक्तोऽनन्तं कालं गच्छत्युपरीति याऽप्यनुपपन्नम् ।
> मुक्तस्य संसृतिर्हि न युक्ता भ्रमणं हि संसारः ॥ २ ॥
> संसारिणस्तु विश्रमणमस्ति तस्य न महाननर्थः स्यात् ।
> अपि चालोकोऽभीष्टः स च कृतकृत्यस्तथाऽऽत्मवशः ॥ ३ ॥

स च गतिपरिणाम ऊर्ध्वमेव भवति नाधस्तिर्यग् वा । पूर्वनिर्दिष्टहेतुनिबन्धं ऊर्ध्वगौरव-योगपरिणामाद् विना अगुरुलघोर्न चान्यदित्यादि । तदाह—

भा०—गौरवप्रयोगपरिणामासङ्गयोगाभावात् । तद्यथा—गुणवद्भूमि-भागारोपितमृतुकालजातं बीजोद्भेदाङ्कुरप्रवालपर्णपुष्पफलकालेषु अविमानितसेक-दोहदादिपोषणकर्मपरिनिर्वृत्तं कालच्छिन्नं शुष्कमलाबु अप्सु न निमज्जति ।

टी०—गौरवप्रयोगपरिणामासङ्गयोगाभावादित्यादि । तद्यथेत्यादिना दृष्टान्त-माह–अलाबुनोऽवस्थाः पूर्विका निरूप्यन्ते । गुणवद्भूमिभागारोपितमिति बीजावस्था । गुणवान् भूमिभागोऽनुपहतः क्षार-मूत्र-पुरीषादिभिः तत्रारोपितं निखातं सत् काले-वर्षासु जातं ततोऽङ्कुरावस्थात् बीजोद्भेदादङ्कुरः प्रवालं किसलयं पर्णं जरठं ततः पुष्पं ततः फलं एषां बीजारोपणोद्भेदाङ्कुरप्रवालपर्णपुष्पफलानां कालेषु स्वेषु स्वेषु विमानितः प्राप्तकालो न कृतः कृतस्त्वविमानितः सेको दोहदश्च । आदिग्रहणादस्थि-धूम-भस्मावगुण्ठनादिपरिग्रहः । एवमादिना पोषणकर्मणा परिणतं-जरठीभूतं पक्वं काले परिपाकोत्तरकालच्छिन्नं शुष्कमलाबु अप्सु न निमज्जति—न जलेऽन्तः प्रविशति । सर्वेषां विशेषणानामिदं फलं निरुपहतं वातेनानाश्लिष्टं अशुषिरमिति ।

अलाबुनोऽवस्थाः

भा०—तदेव गुरुकृष्णमृत्तिकालेपैर्घनैर्बहुभिरालिप्तं घनमृत्तिकालेपवेष्टन-जनितागन्तुकगौरवमप्सु प्रक्षिप्तं तज्जलप्रतिष्ठं भवति । यदा त्वस्याद्भिः क्लिन्नो मृत्तिकालेपो व्यपगतो भवति तदा मृत्तिकालेपसङ्गनिर्मुक्तं मोक्षानन्तरमेवोर्ध्वं गच्छति आ सलिलोर्ध्वतलात् ।

टी०—तदेव च पुनर्गुर्व्याः कृष्णमृत्तिकाया लेपैर्घनैः–निरन्तरैर्बहुभिः–अष्टाभि-र्दर्भवेष्टनैः कालमालिप्तः तेन च घनमृत्तिकालेपेन वेष्टनेन च दर्भादिजनितमागन्तुकं गौरवं यस्य तदेवंविधमप्सु प्रक्षिप्तं तज्जलप्रतिष्ठं भवति उत्तरकालम् । यदा त्वस्याद्भिः सम्बन्धतः क्लिन्नो मृत्तिकालेपो व्यपगतो भवति तदा तत्सङ्गविनिर्मुक्तं दर्भादिबन्ध-नमृत्तिकामोक्षणसमनन्तरमेवोर्ध्वं गच्छत्या सलिलोर्ध्वतलादित्येष दृष्टान्तः ।

सम्प्रति दार्ष्टान्तिकं दर्शयति—

भा०—एवमूर्ध्वगौरवगतिधर्मा जीवोऽप्यष्टविधकर्मलेपमृत्तिकावेष्टितस्तत्-सङ्गात् संसारमहार्णवे भवसलिले निमग्नो भवासक्तोऽधस्तिर्यगूर्ध्वं च गच्छति

१ 'तूना' इति ज-पाठः । २ 'मृत्तिकावेष्टन' इति ग-पाठः । ३ 'तलप्रविष्टं' इति ग-पाठः । ४ 'वेष्टनकाल' इति च–ज–पाठः । ५ 'तलप्रतिष्ठं' इति च–ज–पाठः । ६ 'सम्बन्धेन' इति ग–पाठः । ७ 'मृत्तिकावेष्टितः सन् संसार०' इति ग–पाठः ।

सम्यग्दर्शनादिसलिलक्लेदात् प्रहीणाष्टविधकर्ममृत्तिकालेपः ऊर्ध्वं
गच्छत्या लोकान्तात् ॥ स्यादेतत् । लोकान्तादूर्ध्वं मुक्तस्य गतिः
तीति ? । अत्रोच्यते—

टी०—एवमूर्ध्वगौरवेत्यादि । संसारोदधौ भवसलिले भवः—उ
निर्वृत्तिः । भव एव सलिलं तत्र मग्नो भवासक्तः शरीरी अनियमेन अ
गच्छति । ततः सम्यग्दर्शनज्ञानावरणसलिलार्द्रीकृतप्रहीणाष्टविधक
ऊर्ध्वमेव गच्छति आ लोकान्तादिति । स्यादेतदित्यादिना इदमाशङ्कते
लोकान्तादिति को नियमः ? स्वाभाविक्या गत्या लोकान्तादपि परेण गच्छतु
भावादिति । अत्रोच्यते—

भा०—धर्मास्तिकायाभावात् । धर्मास्तिकायो हि जीवपुद्ग
ग्रहेणोपकुरुते । स तत्र नास्ति । तस्माद् गत्युपग्रहकारणाभावात्
भवत्यप्सु अलाबुवत् । नाधो न तिर्यगित्युक्तम् । तत्रैवानुश्रेणिगी
तिष्ठते मुक्तो निष्क्रिय इति ॥ ६ ॥

टी०—धर्मास्तिकायाभावादिति । अस्त्येव निवारकं धर्मद्रव्यं तद्यपे
मेव गतिपरिणतस्य जीवपुद्गलद्रव्यस्य धर्मद्रव्यमुपग्राहकं भवति मीनस्येव वारिद्र
च्छन्तं झषं बलाद् वारि नयति । एवं गतिपरिणतस्यात्मनः पुद्गलस्य वा स्वत
कारी धर्मास्तिकायः कारणीभवति । स च लोकात् परतो नास्ति । तस्माद्
रिणोऽभावात् परतो गतिर्नास्ति अप्सु यथाऽलाबुनः । अलाबु हि मृल्लेपाप
गच्छज्जलमस्तकप्रविष्टं भवति, न परतो याति, उपग्राहकजलद्रव्याभावात् । ऊर्ध्व
नाधो न तिर्यगित्युक्तमेव । तत्रैवानुश्रेणिगतिर्लोकान्तेऽवतिष्ठत इति ।
मुच्यते समस्तैः कर्मभिस्तत्र या शरीरस्योपरि रुद्धा श्रेणिर्नभसस्तयैव गत्वा त
मुक्तात्मा निष्क्रिय इति ॥ यथोक्तम्—

"धर्माभावाच्चालोके स प्रतिहन्यते न लोकाग्रे ॥
[ न तु स्पर्शित्वात् ] गमनोपकृद्धि धर्मो जीवानां पुद्गलानां च ॥ १
मुक्तोऽनन्तं कालं गच्छत्युपरीति वाऽप्यनुपपन्नम् ।
मुक्तस्य संसृतिर्हि न युक्ता भ्रमणं हि संसारः ॥ २ ॥
संसारिणस्तु विभ्रमणमस्ति तस्य न महाननर्थः स्यात् ।

स च गतिपरिणाम ऊर्ध्वमेव भवति नाधस्तिर्यग् वा । पूर्वनिर्दिष्टहेतुभिरेव ऊर्ध्वगौरवप्रयोगपरिणामाद् विना असङ्गयोगं नान्यच्चेत्यादि । तत्राह—

भा०—गौरवप्रयोगपरिणामासङ्गयोगाभावात् । तद्यथा—गुणवद्भूमिभागारोपितमृतुकालजातं बीजोद्भेदाङ्कुरप्रवालपर्णपुष्पफलकालेषु अविमानितसेकदोहदादिपोषणकर्मपरिणतं कालच्छिन्नं शुष्कमलाबु अप्सु न निमज्जति ।

टी०—गौरवप्रयोगपरिणामासङ्गयोगाभावादित्यादि । तद्यथेत्यादिना दृष्टान्तमाह–अलाबुनोऽवस्थाः पूर्विका विशेषणैः । गुणवद्भूमिभागारोपितमिति बीजावस्था । गुणवान् भूमिभागोऽनुपहतः क्षार-मूत्र-पुरीषादिभिः तत्रारोपितं निखातं सत् काले-वर्षासु जातं ततश्चाङ्कुरावस्थात् बीजोद्भेदादङ्कुरः प्रवालं किसलयं पर्णं जरठं ततः पुष्पं ततः फलं एषां बीजारोपणोद्भेदाङ्कुरप्रवालपर्णपुष्पफलानां कालेषु तेषु तेषु विमानितः प्राप्तकालो न कृतः कृतस्त्वविमानितः सेको दोहदश्च । आदिग्रहणादस्थि-धूम-भस्मावगुण्ठनादिपरिग्रहः । एवमादिना पोषणकर्मणा परिणतं-जरठीभूतं पक्वं काले परिपाकोत्तरकालच्छिन्नं शुष्कमलाबु अप्सु न निमज्जति—न जलेऽन्तः प्रविशति । सर्वेषां विशेषणानामिदं फलं निरुपहतं वातेनानाश्लिष्टं अशुषिरमिति ।

अलाबुनोऽवस्थाः

भा०—तदेव गुरुकृष्णमृत्तिकालेपैर्घनैर्बहुभिरालिप्तं घनमृत्तिकालेपवेष्टनजनितागन्तुकगौरवमप्सु प्रक्षिप्तं तज्जलप्रतिष्ठं भवति । यदा त्वस्याद्भिः क्लिन्नो मृत्तिकालेपो व्यपगतो भवति तदा मृत्तिकालेपसङ्गनिर्मुक्तं मोक्षानन्तरमेवोर्ध्वं गच्छति आ सलिलोर्ध्वतलात् ।

टी०—तदेव च पुनर्गुर्व्याः कृष्णमृत्तिकाया लेपैर्घनैः–निरन्तरैर्बहुभिः–अष्टाभिर्दर्भवेष्टनैः कालमालिप्तः तेन च घनमृत्तिकालेपेन वेष्टनेन च दर्भादिजनितमागन्तुकं गौरवं यस्य तदेवंविधमप्सु प्रक्षिप्तं तज्जलप्रतिष्ठं भवति उत्तरकालम् । यदा त्वस्याद्भिः सम्बन्धतः क्लिन्नो मृत्तिकालेपो व्यपगतो भवति तदा तत्सङ्गविनिर्मुक्तं दर्भादिबन्धनमृत्तिकामोक्षणसमनन्तरमेवोर्ध्वं गच्छत्या सलिलोर्ध्वतलादित्येष दृष्टान्तः ।

सम्प्रति दार्ष्टान्तिकं दर्शयति—

भा०—एवमूर्ध्वगौरवगतिधर्मा जीवोऽप्यष्टविधकर्मलेपमृत्तिकावेष्टितस्तत्सङ्गात् संसारमहार्णवे भवसलिले निमग्नो भवासक्तोऽधस्तिर्यगूर्ध्वं च गच्छति

१ 'तुना' इति ज-पाठः । २ 'मृत्तिकावेष्टन' इति ग-पाठः । ३ 'तलप्रविष्टं' इति ग-पाठः । ४ 'वेष्टनकाल' इति च-ज-पाठः । ५ 'तलप्रतिष्ठं' इति च-ज-पाठः । ६ 'सम्बन्धेन' इति ग-पाठः । ७ 'मृत्तिकावेष्टितः सन् संसार०' इति ग-पाठः ।

टी०—तत्र क्षेत्रमाकाशं जीवपुद्गलानां निवासगतिविशेषणाल्लोकाकाशपरिग्रहः। तस्यापि लोकाकाशस्यैकदेशग्रहणम्, अर्धतृतीयद्वीपसमुद्रद्वयमीपत्प्राग्भारोपलक्षितश्च गगनप्रदेश इति। कालोऽनादिरनन्तस्तस्योत्सर्पिण्यवसर्पिणी च ग्राह्या। गतिर्नरकादिभेदेन चतुर्विधा। लिङ्गं स्त्री-पुं-नपुंसकाख्यम्, अथवा द्रव्यलिङ्गं भावलिङ्गमलिङ्गमिति। तीर्थमिति तीर्थकरत्वं प्राप्य सिद्धा इत्यादिविकल्पम्। चारित्रं सामायिकादि मूलगुणोत्तरगुणभेदम्। प्रत्येकबुद्धबोधितः स्वयम्बुद्धसिद्धादिभेदः। ज्ञानं मति-श्रुतादिभेदम्। अवगाहनामिति शरीरावगाहग्रहणम्। अन्तरमेकसमयादिकं षण्मासान्तिकम्। सङ्ख्येत्येकस्मिन् समये कियन्तः सिध्यन्तीत्यादि। अल्पबहुत्वमिति क्षेत्रसिद्धाद्यन्तःपातिभेदानां परस्परं चिन्त्यते। एतानि द्वादशानुयोगद्वाराणि सिद्धस्य सिद्धत्वलाभे कारणानि भवन्ति। एतदेव स्पष्टयति—

भा०—एभिः सिद्धः साध्यः अनुगम्यश्चिन्त्यो व्याख्येय इत्येकार्थत्वम्। तत्र पूर्वभावप्रज्ञापनीयः प्रत्युत्पन्नभावप्रज्ञापनीयश्च द्वौ नयौ भवतः। तत्कृतोऽनुयोगविशेषः।

टी०—साध्यपर्यायानाचष्टे–अनुगमनीयोऽनुगम्योऽनुसर्तव्योऽनुसृत्यः। चित्ते व्यवस्थाप्यश्चिन्त्यः व्यवस्थाप्य च व्याख्येयः–कथनीयः। एकस्य–अभिन्नस्यार्थस्य वाचकाः सर्वे एते साध्यादयः। अत एव पर्यायत्वं युगपदप्रयोगात्। तत्र–अस्मिन् सिद्धव्याख्याने कर्तव्ये द्वौ नयौ पूर्वभावप्रज्ञापनीयः प्रत्युत्पन्नभावप्रज्ञापनीयश्च। पूर्वम्–अतीतं भावं प्रज्ञापयतीति पूर्वभावप्रज्ञापनीयः। प्रत्युत्पन्नं–वर्तमानं भावं प्रज्ञापयतीति प्रत्युत्पन्नभावप्रज्ञापनीयः। नैगमादिप्रसिद्धनयेभ्यश्च नेमौ व्यतिरिक्तौ। एतेषामेव वाचोयुक्तिभेदेन ग्रहणम्। तत्र नैगमसङ्ग्रह-व्यवहाराः सर्वकालार्थग्राहित्वात् पूर्वभावप्रज्ञापनीयशब्दवाच्याः। ऋजुसूत्र-शब्द-समभिरूढैवम्भूतास्तु वर्तमानकालार्थप्रतिग्राहित्वात् प्रत्युत्पन्नभावप्रज्ञापनीयशब्दवाच्या विज्ञेयाः। आभ्यां नयाभ्यां क्षेत्रादयो व्याख्येयाः। तत्कृतः–ताभ्यां कृतोऽनुयोगविशेषो–व्याख्याप्रकारः॥

भा०—तद्यथा—कस्मिन् क्षेत्रे सिध्यतीति। प्रत्युत्पन्नभावप्रज्ञापनीयं प्रति सिद्धिक्षेत्रे [1]सिध्यतीति। पूर्वभावप्रज्ञापनीयस्य जन्म प्रति पञ्चदशसु कर्मभूमिषु जातः [2]सिध्यतीति। संहरणं प्रति मानुषे क्षेत्रे [3]सिध्यतीति। तत्र प्रमत्तसंयताः संयतासंयताश्च संह्रियन्ते॥

टी०—तद्यथेत्यादिना क्षेत्रं निरूपयति—कस्मिन् क्षेत्रे सिध्यति। तत्र प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिक्षेत्रे सिद्ध्यतीति। तत्र सिद्धः [4]प्रतिष्ठितः। तथा चागमः—"[5]इहं बोंदिं चइत्ता णं तत्थ गंतूण सिज्झई"। अप्राप्तस्थानस्तु नैव सिद्धः, [6]कृत्यशेषत्वात्।

१–३ 'सिध्यति' इति घ–पाठः। ४ 'प्रतिष्ठितो यः' इति च–ज–पाठः। ५ आवश्यक-निर्युक्तेः ९५९–तमीगाथाया अयमुत्तरार्धः, एतत्पूर्वार्धंश्छायापूर्वको यथा—

" अलोए पडिहया सिद्धा, लोअग्गे अ पइट्ठिआ।"

अलोके प्रतिहताः सिद्धा लोकाग्रे च प्रतिष्ठिताः। इह तनुं त्यक्त्वा तत्र गत्वा सिध्यन्ति॥

६ 'कृत्यं' इति च–ज–पाठः।

तिष्ठन्ति गतिमान् योऽस्मान् पर्यन्तस्था निराबाध ।
नास्ति स्वभावविगमो न तु सर्वस्यापि भावस्य ॥ ४ ॥
घातीनि तु कर्माणि स्वभावघातात् गुणान् निघ्नन्ति ।
तदभावात् स्वाभाविकगुणभावो भाति न तु सिद्धः ॥ ५ ॥
यदि न स्वभावविगमो नेष्टः कस्मात् स निष्क्रियो भाति ।
इति या चोद्यं प्रोक्तं यत्स्पन्दनलक्षणाभावात् ॥ ६ ॥
कार्याभावात् पुनर्न स्पन्दनस्य निर्गतिस्पन्दनात् ।
प्रायोगिकोऽप्ययुक्तः स्पन्दः कर्मप्रयुक्तस्य ॥ ७ ॥
विरहेश्च तस्य नार्थः क्षुत्-तृट्-स्वेदादि-मोहरागाणाम् ।
रागादीनां च तथाऽभावादुपयोगहेतुत्वात् ॥ ८ ॥
एतेन व्याख्यातो गमन-चङ्क्रमण-निन्नानादीनाम् ।
चेष्टानां सिद्धस्याभावो विग्रहविरहाद्भगवतः ॥ ९ ॥"

एवं तेषां मुक्तात्मनां "पूर्वप्रयोगादिभिरुक्तिलङ्गतिः" इति वचनात् तेषां गतिः सिद्धेति ॥ ६ ॥

त एवं सिद्धान्तेन सिद्धाः क्षेत्रादिभिर्द्वादशभिरनुयोगद्वारैरनुगन्तव्याः "प्रमाणनयैरधिगमः" (अ०१, सू० ६) इति वचनादित्याह—

सिद्धस्य १२ अनुयोगद्वाराणि

**सूत्रम्—क्षेत्र-काल-गति-लिङ्ग-तीर्थ-चारित्र-प्रत्येक-बुद्धबोधित-ज्ञाना-ऽवगाहना-ऽन्तर-सङ्ख्या-ऽल्पबहुत्वतः साध्याः ॥ १०–७ ॥**

टी०—अथवा अमी सिद्धाः परिनिवृत्तदोषाः कार्मणशरीरौपशमिकादिभावनिरुपाख्याः किं पर्यायान्तरेण व्यपदेष्टुमशक्या एव आहोस्विदतीतव्यवहारा एव हि निर्धार्या इति ?॥ उच्यते —शक्यन्त एव व्यपदेष्टुं, यस्मात् ते खलु व्यवजिहीर्षद्भिः प्रत्युत्पन्नभूतार्थानुग्रहतन्त्रनयद्वितयसामर्थ्यविशेषवद्भिः श्रुतज्ञानाहितदार्ढ्यैर्ज्ञानदर्शनचरणाप्रच्युतमार्गैस्तत्स्वप्रतिपत्त्यर्थमात्महितमादधानैः क्षेत्रादिद्वारैरनुगमनीया इत्याह—क्षेत्रकाल इत्यादि। क्षेत्रादीनां अल्पबहुत्वान्तानां द्वन्द्वः। द्वन्द्वसमासाभिनिर्वृत्ताच्च प्रातिपदिकात् तृतीयार्थे तसिः। सिद्धिविशेषस्यानेकाश्रयत्वात् साध्यवचनम्। क्षेत्रादीनि च द्वादशापि द्वाराणि प्रतिपदं दर्शयति भाष्येण—

**भा०—क्षेत्रं, कालः, गतिः, लिङ्गं, तीर्थं, चारित्रं, प्रत्येकबुद्धबोधितः, ज्ञानं, अवगाहना, अन्तरं, सङ्ख्या, अल्पबहुत्वमित्येतानि द्वादशानुयोगद्वाराणि सिद्धस्य भवन्ति।**

मिकक्षायोपशमिक-क्षायिकानां भावानां स्वतत्त्वं विदित्वा आदिमत्पारिणामिकौदयिकानां च भावानामुत्पत्तिस्थित्यन्यतानुग्रहप्रलयतत्त्वज्ञो विरक्तो [1]निस्तृष्णः त्रिगुप्तः पञ्चसमितो दशलक्षणधर्मानुष्ठानात् फलदर्शनाच्च निर्वाणप्राप्तियतनयाऽभिवर्धितश्रद्धासंवेगो भावनाभिर्भावितात्माऽनुप्रेक्षाभिः स्थिरीकृतात्मानभिष्वङ्गः संवृतत्वान्निरास्रवत्वाद् विरक्तत्वान्निस्तृष्णत्वाच्च व्यपगताभिनवकर्मोपचयः परीषहजयाद् बाह्याभ्यन्तरतपोऽनुष्ठानात् अनुभावतश्च सम्यग्दृष्टयविरतादीनां च जिनपर्यन्तानां परिणामाध्यवसायविशुद्धिस्थानान्तराणामसङ्ख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचितकर्म निर्जरयन् सामायिकादीनां च सूक्ष्मसम्परायान्तानां संयमविशुद्धिस्थानानामुत्तरोत्तरोपलम्भात् पुलाकादीनां च निर्ग्रन्थानां संयमानुपालनविशुद्धिस्थानविशेषाणामुत्तरोत्तरप्रतिपत्त्या घटमानोऽत्यन्तप्रहीणार्तरौद्रध्यानो धर्मध्यानविजयादवाप्तसमाधिबलः शुक्लध्यानयोश्च पृथक्त्वैकत्ववितर्कयोरन्यतरस्मिन् वर्तमानो नानाविधानृद्धिविशेषान् प्राप्नोति । तद्यथा–आमर्शौषधित्वं विप्रुडौषधित्वं सर्वौषधित्वं शापानुग्रहसामर्थ्यजननीमभिव्याहारसिद्धिमीशित्वं [2]वशित्वं अवधिज्ञानं शारीरविकरणाङ्गप्राप्तितामणिमानं लघिमानं महिमानं अणुत्वम् । अणिमा बिसच्छिद्रमपि प्रविश्यासीत । लघुत्वं नाम लघिमा वायोरपि लघुतरः स्यात् । महत्त्वं महिमा मेरोरपि महत्तरं शरीरं विकुर्वीत । प्राप्तिर्भूमिष्ठोऽङ्गुल्यग्रेण मेरुशिखरभास्करादीनपि स्पृशेत् । प्राकाम्यमप्सु भूमाविव गच्छेत्, भूमावप्स्विव निमज्जेदुन्मज्जेच्च ॥

उपसंहारः

टी०—एवमित्यादिना मन्दबुद्ध्यनुग्रहार्थं सकलमेव तत्त्वार्थशास्त्रार्थं समासतः कथयति—विशुद्धं सम्यग्दर्शनमवाप्यैतस्य विशेषणानि निसर्गाधिगमादीनि । ज्ञानं च विशुद्धमधिगम्य सम्यग्दर्शनोपलम्भात् मिथ्यादर्शनभावितमज्ञानमेव नियमतो मिथ्यादृष्टेः सम्यक्त्वलाभे तु विशुद्धं ज्ञानम् । निक्षेपो नामादिः । प्रमाणे प्रत्यक्ष-परोक्षे । नया नैगमादयः । तथा निर्देश-स्वामित्वादिभिः सत्-सङ्ख्या-क्षेत्रादिभिश्च जीवादीनां च पारिणामिकादयो ये भावास्तेषां स्वरूपं विदित्वा धर्माधर्मादीनां अनादीनामादिमतां च पारिणामिकादीनां घनशरीरादीनामुत्पत्तिस्थितिविनाशवतामनुग्रहः–उपकारस्तत्कृतः प्रलयः–उपघात इत्येवमवगम्य तत्त्वज्ञो विरक्तः सांसारिकेभ्यो भावेभ्यो विगततृष्णो गुप्त्याद्यनुष्ठानात् फलदर्शनाच्चेति निर्वाणमेव फलं तत्प्राप्तौ यत्नार्थमभिवर्धितश्रद्धासंवेगः पञ्चानां व्रतानां भावना ईर्यासमित्यादयस्ताभिर्भावितात्मा अनित्याद्यनुप्रेक्षाभिः स्थिरीकृतात्मा अनभिष्वङ्गो–न क्वचिदाबद्धस्नेहः [3]संवृतत्वादिभिर्व्यपगताभिनव-

१ 'निस्तृषः' इति ग–पाठः। २ 'भाविनः' इति ङ–पाठः। ३ 'प्रादुर्भावादाबद्ध' इति ङ–ज–पाठः।

टी०—ज्ञानमित्यत्रापि सर्वत्र सङ्ख्येयगुणत्वम् ॥

भा०—अवगाहना। सर्वस्तोका जघन्यावगाहनासिद्धाः। उत्कृष्टावगाहनासिद्धास्ततोऽसङ्ख्येयगुणाः। यवमध्यसिद्धा असङ्ख्येयगुणाः, यवमध्योपरिसिद्धा असङ्ख्येयगुणाः, यवमध्याधस्तात् सिद्धा विशेषाधिकाः, सर्वे विशेषाधिकाः ॥

टी०—अवगाहनेत्यत्र उत्कृष्टावगाहनासिद्धा असङ्ख्येयगुणाः। द्वावसङ्ख्येयगुणौ द्वौ विशेषाधिकाविति ॥

भा०—अन्तरम्। सर्वस्तोका अष्टसमयानन्तरसिद्धाः, सप्तसमयानन्तरसिद्धाः षट्समयानन्तरसिद्धा इत्येवं यावत् द्विसमयानन्तरसिद्धा इति सङ्ख्येयगुणाः। एवं तावदनन्तरेषु सान्तरेष्वपि सर्वस्तोकाः षण्मासान्तरसिद्धाः, एकसमयान्तरसिद्धाः सङ्ख्येयगुणाः, यवमध्यान्तरसिद्धाः सङ्ख्येयगुणाः, अधस्ताद्यवमध्यान्तरसिद्धाः संङ्ख्येयगुणाः, उपरियवमध्यान्तरसिद्धा विशेषाधिकाः, सर्वे विशेषाधिकाः ॥

टी०—अन्तरमित्यत्राष्टसु समयेषु नैरन्तर्येण सिद्धाः सर्वेऽपि सङ्ख्येयगुणाः। सान्तरेष्वपीत्यादि। एकसमयान्तरसिद्धाः सङ्ख्येयगुणा यवमध्यान्तरे च सङ्ख्येयगुणाः, अधस्ताद्यवमध्यान्तरे च सङ्ख्येयगुणाः ॥

भा०—सङ्ख्या। सर्वस्तोका अष्टोत्तरशतसिद्धाः, विपरीतक्रमात् सप्तोत्तरशतसिद्धादयो यावत् पञ्चाशदित्यनन्तगुणाः। एकोनपञ्चाशदादयो यावत् पञ्चविंशतिरित्यसङ्ख्येयगुणाः। चतुर्विंशत्यादयो यावदेक इति सङ्ख्येयगुणाः विपरीतहानिर्यथा-सर्वस्तोका अनन्तगुणहानिसिद्धाः, असङ्ख्येयगुणहानिसिद्धा अनन्तगुणाः, सङ्ख्येयगुणहानिसिद्धाः सङ्ख्येयगुणा इति ॥

टी०—सङ्ख्येत्यत्र अष्टोत्तरशतसिद्धाः सर्वस्तोकाः। विपरीतक्रमादिति सप्तोत्तरशतसिद्धा अनन्तगुणाः। एवं विपरीतहान्या यावत् पञ्चाशदित्यनन्तगुणाः। विपरीतहानिर्यथेत्यादिना दर्शयति। सर्वस्तोका अनन्तगुणहानिसिद्धाः, असङ्ख्येयगुणहानिसिद्धा अनन्तगुणाः, सङ्ख्येयगुणहानिसिद्धाः सङ्ख्येयगुणा इति ॥

भा०—एवं निसर्गा-ऽधिगमयोरन्यतरजं तत्त्वार्थश्रद्धानात्मकं शङ्काद्यतिचाररवियुक्तं प्रशम-संवेग-निर्वेदा-ऽनुकम्पा-ऽऽस्तिक्याभिव्यक्तिलक्षणं विशुद्धं सम्यग्दर्शनमवाप्य सम्यग्दर्शनोपलम्भाद् विशुद्धं च ज्ञानमधिगम्य निक्षेप-प्रमाण-नय-निर्देश-सत्-सङ्ख्यादिभिरभ्युपायैर्जीवादीनां तत्त्वानां पारिणामिकौ-दयिकौ-पश-

१ 'असङ्ख्येय' इति घ-पाठः।

यत्किञ्चित् पदवाक्यार्थादि गृहीतं तन्न कदाचिन्नश्यतीति, कोष्ठप्रक्षिप्तधान्यवत् । बीजबुद्धित्वं स्वल्पमपि दर्शितं वस्तु अनेकप्रकारेण गमयति । तद्यथा पदेन प्रदर्शितेन प्रकरणेनोद्देशकादिना सर्वमर्थं ग्रन्थं चानुधावति । परचित्तं जानाति । अभिलषितमर्थं प्राप्नोत्येवं अनिष्टं च नैवाप्नोति । एवमादयोऽतिशयाः शुभानुभावादपरिमितास्तस्य तस्यामवस्थायां प्रादुःष्यन्तीति ॥

भा०—वाचिकं क्षीरास्रवित्वं मध्वास्रवित्वं वादित्वं सर्वरुतज्ञत्वं सर्वसत्त्वावबोधनमित्येतदादि । तथा विद्याधरत्वमाशीविषत्वं भिन्नाभिन्नाक्षरचतुर्दशपूर्वधरत्वमिति ॥

टी०—वाचिकमप्यतिशयवत्त्वम् । तस्य क्षीरास्रवित्वं शृण्वतस्तदीयवचनं क्षीरमिव स्वदते । एवं मध्वास्रवित्वम् । विद्वत्संसन्मध्येष्वपराजितत्वं वादित्वम् । सर्वेषां म्लेच्छ-मृग-पशु-पक्षिप्रभृतीनां रुतार्थज्ञत्वम् । सर्वान् सत्त्वानबुद्धिकानपि बोधयतीति सर्वसत्त्वावबोधनम् । आदिग्रहणादिक्षुरसास्रवित्वादिग्रहणम् । तथा विद्याधरत्वं महाविद्याः सर्वा एव तस्य तदा स्वयमेवोपतिष्ठन्ते । आशीविषत्वं कर्मजातिभेदादनेकप्रकारम् । भिन्नाक्षराणि किञ्चिन्न्यूनाक्षराणि चतुर्दश पूर्वाणि सम्पूर्णानि वा तद्धारणत्वम् ॥

भा०—ततोऽस्य निस्तृष्णत्वात् तेष्वनभिष्वक्तस्य मोहक्षपकपरिणामावस्थस्याष्टाविंशतिविधं मोहनीयं निरवशेषतः प्रहीयते । ततश्छद्मस्थवीतरागत्वं प्राप्तस्यान्तर्मुहूर्तेन ज्ञानावरण-दर्शनावरणा-ऽन्तरायाणि युगपदशेषतः प्रहीयन्ते । ततः संसारबन्धबीजबन्धननिर्मुक्तः फलबन्धनमोक्षापेक्षो यथाख्यातसंयतो जिनः केवली सर्वज्ञः सर्वदर्शी शुद्धो बुद्धः कृतकृत्यः स्नातको भवति । ततो वेदनीय-नाम-गोत्राऽऽयुष्यक्षयात् फलबन्धननिर्मुक्तो निर्दग्धपूर्वोपात्तेन्धनो निरुपादान इवाग्निः पूर्वोपात्तभववियोगात् हेत्वभावाच्चोत्तरस्याप्रादुर्भावाच्छान्तः ॥

टी०—ततोऽस्येत्यादि । तेषु—अतिशयेष्वनभिष्वक्तस्य—अनुपजातगार्ध्यस्य मोहक्षपकपरिणामावस्थस्येति । अविरतसम्यग्दृष्ट्यादिस्थानवर्तिनो मोहक्षपणाभिमुखस्य श्रेण्या निरवशेषमोहक्षये सति ज्ञानावरणादिप्रहाणे च संसारबीजबन्धनं मोहज्ञानावरणादि तेन निर्मुक्तः केवली भवति । ततश्च फलबन्धनं वेदनीयादिचतुष्कं तन्मोक्षणापेक्षस्तेनापि वेदनीयादिना अशेषफलबन्धनेन विमुक्तो ध्यानाग्निनिर्दग्धपूर्वोपात्तकर्मेन्धनो निरिन्धन इवाग्निः पूर्वोपात्तो भवः—औदारिकादिकायस्तद्वियोगादुत्तरस्य च कायस्य हेत्वभावात् संसारे पुनरप्रादुर्भावाच्छान्तः परमाह्लादमुपगतः कारणापेक्षम्—

१ 'शयत्वम्' इति ज-पाठः । २ 'क्षय' इति ङ-पाठः । ३ 'बन्धनिर्मुक्तः' इति घ-पाठः । ४ 'हेतुभावात्' इति ङ-च-पाठः ।

कर्मोपचयः। कर्मणां चानुभावतः सम्यग्दृष्ट्यादिगुणस्थानानां केवलिपर्यन्तानामसङ्ख्येयगुणोत्कर्षप्राप्त्या पूर्वोपचितकर्मनिर्जरणात् सामायिकाद्युत्कर्षात् पुलाकादिस्थानावाप्तेर्व्यपेतार्तध्यानरौद्रध्यानो धर्मध्यानशुक्लध्यानाभ्यासादनुक्रमात् ध्यानवृद्धस्य नानाविधा लब्धय उत्पद्यन्ते। हस्तपादादिपरामर्शमात्रेणैव सर्वरोगापनयनसामर्थ्यमामर्षौषधित्वम्। तदीयमूत्रपुरीषावयवसम्पर्कात् रोगनिवृत्तिर्विप्रुडौषधित्वम्। तथा सर्व एव तदीयावयवा दुःखार्तानामौषधीभवन्तीति सर्वौषधित्वम्। अभिव्याहारसिद्धिर्वाङ्मात्रेणैव। शापदानसामर्थ्यमनुग्रहणसामर्थ्यं च। ईशित्वं सर्वभूतेश्वरताम्। वशित्वं सर्वभूतानि स्ववशवर्तीनि। तथाऽवधिज्ञानमेकरूपं वैक्रियशरीरकरणं तदेव च दृष्टपथमणिमादिविशिष्टम् ॥

भा० –जङ्घाचारणत्वं येनाग्निशिखाधूमनीहारावश्यायमेघवारिधारामर्कटतन्तुज्योतिष्करश्मिवायूनामन्यतममप्युपादाय वियति गच्छेत्। वियद्गतिचारित्वं[1] येन वियति भूमाविव गच्छेत् शकुनिवच्च प्रडीनावडीनगमनानि कुर्यात् ॥

टी० –जङ्घाचारणत्वमग्निशिखाधूमायपि निश्रित्य[2] व्योम्नि गच्छेत्। मर्कटतन्तुः कोलिककोशकृततन्तुः[3]। अपरं वियद्गतिचारणत्वं निर्निश्र एव विस्रब्धो भूमाविव व्योम्नि गच्छेत्। यथा च शकुनिर्वियति प्रडीनम्-उपरिष्टाद् गमनं अवडीनम्-अधस्ताद् गमनं करोत्येवमसावपि कुर्यात् ॥

भा०—अप्रतिघातित्वं पर्वतमध्येन वियतीव गच्छेत्। अन्तर्धानमदृश्यो भवेत्। कामरूपित्वं नानाश्रयानेकरूपधारणं युगपदपि कुर्यात्। तेजोनिसर्गसामर्थ्यमेतदादि। इति इन्द्रियेषु मतिज्ञानविशुद्धिविशेषाद् दूरात्[4] स्पर्शनाऽऽस्वादन-घ्राण-दर्शन-श्रवणानि विषयाणां कुर्यात्। सम्भिन्नज्ञानत्वं[5] युगपदनेकविषयपरिज्ञानमित्येतदादि। मानसं कोष्ठबुद्धित्वं बीजबुद्धित्वं पदप्रकरणोद्देशाध्यायप्राभृतवस्तुपूर्वाङ्गानुसारित्वं ऋजुमतित्वं विपुलमतित्वं परचित्तज्ञानमभिलषितार्थप्राप्तिमनिष्टानवाप्तिमित्येतदादि ॥

टी०—गच्छन् पर्वतमित्यादिभिरपि न प्रतिहन्यत इत्यप्रतिघातित्वम्। अन्तर्धानम्–अदृश्यत्वम्। युगपदनेकरूपधारणं कामरूपित्वम्। तेजोलेश्यामोक्षणम् आदिग्रहणात् शीतलेश्यानिसर्गशक्तिः। मतिज्ञानविशुद्धिप्रकर्षाद् विषयाणां–रूपादीनां देशप्रमाणनियमोल्लङ्घनेनापि ग्रहणं कुर्यात्। युगपदनेकविषयग्रहणं सम्भिन्नज्ञानत्वम्। आदिग्रहणादिन्द्रियव्यत्यासेनापि विषयग्रहणसामर्थ्यम्। मानसं–मनोव्यापारजातम्। कोष्ठबुद्धित्वं

1 'कर्मोचयः' इति ग–पाठः। 2 'जयादभ्या' इति ग–पाठः। 3 'निश्रित्य' इति ग–पाठः। 4 'कोशिकतन्तुः' इति ग–पाठः। 5 'दूरात्' इति ग–पाठः। 6 'सम्भिन्नत्वम्' इति ग–पाठः।

यत्किञ्चित् पदवाक्यार्थादि गृहीतं तन्न कदाचिन्नश्यतीति, कोष्ठप्रक्षिप्तधान्यवत्। बीजबुद्धित्वं स्वल्पमपि दर्शितं वस्तु अनेकप्रकारेण गमयति। तद्यथा पदेन प्रदर्शितेन प्रकरणेनोद्देशकादिना सर्वमर्थं ग्रन्थं चानुधावति। परचित्तं जानाति। अभिलषितमर्थं प्राप्नोत्येवं अनिष्टं च नैवाप्नोति। एवमादयोऽतिशयाः शुभानुभावादपरिमितास्तस्य तस्यामवस्थायां प्रादुःष्यन्तीति॥

भा०—वाचिकं क्षीरास्रवित्वं मध्वास्रवित्वं वादित्वं सर्वरुतज्ञत्वं सर्वसत्त्वावबोधनमित्येतदादि। तथा विद्याधरत्वमाशीविषत्वं भिन्नाभिन्नाक्षरचतुर्दशपूर्वधरत्वमिति॥

टी०—वाचिकमप्यतिशयवत्त्वम्। तस्य क्षीरास्रवित्वं शृण्वतस्तदीयवचनं क्षीरमिव स्वदते। एवं मध्वास्रवित्वम्। विद्वत्संसन्मध्येष्वपराजितत्वं वादित्वम्। सर्वेषां म्लेच्छ-मृग-पशु-पक्षिप्रभृतीनां रुतार्थज्ञत्वम्। सर्वान् सत्त्वानबुद्धिकानपि बोधयतीति सर्वसत्त्वावबोधनम्। आदिग्रहणादिक्षुरसास्रवित्वादिग्रहणम्। तथा विद्याधरत्वं महाविद्याः सर्वा एव तस्य तदा स्वयमेवोपतिष्ठन्ते। आशीविषत्वं कर्मजातिभेदादनेकप्रकारम्। भिन्नाक्षराणि किञ्चिन्न्यूनाक्षराणि चतुर्दश पूर्वाणि सम्पूर्णानि वा तद्धारणत्वम्॥

भा०—ततोऽस्य निस्तृष्णत्वात् तेष्वनभिष्वक्तस्य मोहक्षपकपरिणामावस्थस्याष्टाविंशतिविधं मोहनीयं निरवशेषतः प्रहीयते। ततश्छद्मस्थवीतरागत्वं प्राप्तस्यान्तर्मुहूर्तेन ज्ञानावरण-दर्शनावरणा-ऽन्तरायाणि युगपदशेषतः प्रहीयन्ते। ततः संसारबन्धबीजबन्धननिर्मुक्तः फलबन्धनमोक्षापेक्षो यथाख्यातसंयतो जिनः केवली सर्वज्ञः सर्वदर्शी शुद्धो बुद्धः कृतकृत्यः स्नातको भवति। ततो वेदनीय-नाम-गोत्राऽऽयुष्यक्षयात् फलबन्धननिर्मुक्तो निर्दग्धपूर्वोपात्तेन्धनो निरुपादान इवाग्निः पूर्वोपात्तभववियोगात् हेत्वभावाचोत्तरस्याप्रादुर्भावाच्छान्तः॥

टी०—ततोऽस्येत्यादि। तेषु–अतिशयेष्वनभिष्वक्तस्य–अनुपजातगार्द्ध्यस्य मोहक्षपकपरिणामावस्थस्येति। अविरतसम्यग्दृष्ट्यादिस्थानवर्तिनो मोहक्षपणाभिमुखस्य श्रेण्या निरवशेषमोहक्षये सति ज्ञानावरणादिप्रहाणे च संसारबीजबन्धनं मोहज्ञानावरणादि तेन निर्मुक्तः केवली भवति। ततश्च फलबन्धनं वेदनीयादिचतुष्कं तन्मोक्षापेक्षस्तेनापि वेदनीयादिना अशेषफलबन्धनेन विमुक्तो ध्यानाग्निनिर्दग्धपूर्वोपात्तकर्मेन्धनो निरिन्धन इवाग्निः पूर्वोपात्तो भवः–औदारिकादिकायस्तद्वियोगादुत्तरस्य च कायस्य हेत्वभावात् संसारे पुनरप्रादुर्भावाच्छान्तः परमाह्लादमुपगतः कारणापेक्षम्—

१ 'शयत्वम्' इति ज–पाठः। २ 'क्षय' इति ङ–पाठः। ३ 'बन्धनिर्मुक्तः' इति घ–पाठः। ४ 'हेतुभावात्' इति ङ–च–पाठः।

भा०—संसारसुखमतीत्यात्यन्तिकमैकान्तिकं निरुपमं नित्यं निरतिशयं निर्वाणसुखमवाप्नोतीति ॥ ७ ॥

टी०—संसारसुखमतीत्यात्यन्तिकं सायपर्यवसानमैकान्तिकं एकान्तेनैव भवति, न कदाचिन्न भवतीत्यर्थः। निरुपममिति नास्ति इह किञ्चित् तस्योपमानं तत्सदृशमिति। निरतिशयमिति[1] नास्यातिशयः प्रकर्षापकर्षलक्षणो विद्यते, सर्वमुक्तानां तुल्यत्वात्। नित्यमिति ध्रुवं कूटस्थमविचालि निर्वाणसुखमवाप्नोतीति।

सत्कारार्हः सततं, निरुत्सुको निर्भयो विरुग् विगदः।
निःप्रणयो निर्द्वेषो, निर्द्वन्द्वो नीरजा वितनुः ॥ १ ॥—आर्या
संसाराग्निं निर्वा–प्य दहन्तं परमसौख्यसलिलेन।
निर्वाति स्वात्मस्थो, गतजाति-जरा-मरण-रोगः ॥ २ ॥—,,
व्याबाधाभावाच्च स, सर्वज्ञत्वाच्च भवति परमसुखी।
व्याबाधाभावो नु, स्वस्थस्य ज्ञस्य ननु सुसुखम् ॥ ३ ॥—,,
अनुपममप्रमेयमव्यय–मनघं शिवमजरमरुजमभयगुपम्।
एकान्तिकमात्यन्तिक–मव्याबाधं सुखं ह्येतत् ॥ ४ ॥—,,
त्रिष्वपि कालेषु सुखा–नि यानि तिर्यङ्-मनुष्य-देवानाम्।
सर्वाणि तानि न समा–नि तस्य मात्रा सुखेनापि ॥ ५ ॥—,,
तानि हि रागोत्क्षोभा–व्याबाधापूर्वकाणि च सुखानि।
नह्यस्ति रागमपवि–ध्य तत्र किञ्चित् सुखमपृक्तम् ॥ ६ ॥—,,
एवं क्षायिकसम्यक्–त्वं वीर्य-सिद्धत्व-दर्शन-ज्ञानैः।
आत्यन्तिकैः स युक्तो, निर्द्वन्द्वेनापि च सुखेन ॥ ७ ॥—,,

सम्प्रत्येनमेव शास्त्रार्थं श्लोकैरुपसंहरति, द्विर्बद्धं सुबद्धं भवतीति ॥

भा०—एवं तत्त्वपरिज्ञानाद्, विरक्तस्यात्मनो भृशम्।
निरास्रवत्वाच्छिन्नायां, नवायां कर्मसन्ततौ ॥ १ ॥—अनु०

टी०—एवमित्यादि। उक्तनीत्या यानि जीवादीनि तत्त्वानि तत्परिज्ञानाद् विरक्तस्य–विषयसुखवितृष्णस्य भृशमात्मनः स्थगितास्रवद्वारत्वाद् विच्छिन्नायामभिनवकर्मसन्ततौ–कर्मसन्ताने ॥ १ ॥

---

१ 'वाप्नोति' इति ग–पाठः। २ 'पुलाकादिस्यातिशयः' इत्यधिको ज–पाठः। ३ 'स्वस्थ ज्ञस्यापि' इति ङ–पाठः। ४ 'कं निरुपमं' इति घ–पाठः। ५ 'मामि' इति ज–पाठः, च–पाठस्तु 'नाभि'।

भा०—पूर्वार्जितं क्षपयतो, यथोक्तैः क्षयहेतुभिः ।
संसारबीजं कार्त्स्न्येन, मोहनीयं प्रहीयते ॥ २ ॥—अनु०

टी०—पूर्वेत्यादि । प्राक्तनं कर्म क्षपयतस्तपोऽनुष्ठानादिभिः क्षयितृभिः संसारतरोर्बीजं समस्तमेव मोहनीयं प्रहीयते क्षपकश्रेण्याम् ॥ २ ॥

भा०—ततोऽन्तरायज्ञानघ्न—दर्शनघ्नान्यनन्तरम् ।
प्रहीयन्तेऽस्य युगपत्, त्रीणि कर्माण्यशेषतः ॥ ३ ॥—अनु०

टी०—तत इत्यादि । अन्तराये ज्ञानदर्शनावरणयोश्च क्षीणयोर्युगपत् अशेषतः॥३॥

भा०—गर्भसूच्यां विनष्टायां, यथा तालो विनश्यति ।
तथा कर्म क्षयं याति, मोहनीये क्षयं गते ॥ ४ ॥—अनु०

टी०—गर्भसूच्यामित्यादि । मस्तकसूच्यां ध्वस्तायां सर्वात्मना विनाशमुपैति सकलस्तालतरुः, एवं मोहनीये क्षीणे शेषं कर्म क्षयमेति सर्वम् ॥ ४ ॥

भा०—ततः क्षीणचतुःकर्मा, प्राप्तोऽथाख्यातसंयमम् ।
बीजबन्धननिर्मुक्तः, स्नातकः परमेश्वरः ॥ ५ ॥—अनु०

टी०—तत इत्यादि । क्षिप्तसकलघातिकर्मा यथाख्यातसंयममनुप्राप्तो बीजबन्धनेन-मोहनीयादिना विमुक्तः स्नातकोऽन्तर्मलापगमात् परमेश्वरः-केवलर्द्धिप्राप्तः ॥५॥

भा०—शेषकर्मफलापेक्षः, शुद्धो बुद्धो निरामयः ।
सर्वज्ञः सर्वदर्शी च, जिनो भवति केवली ॥ ६ ॥—अनु०

टी०—शेष इत्यादि । वेदनीयादिकर्मफलापेक्षः शुद्धो मोहादिमलापगमात् बुद्धः केवलज्ञानावाप्तेर्निरामयो-निर्गताशेषरोगनिदानः केवली भवति ॥ ६ ॥

भा०—कृत्स्नकर्मक्षयादूर्ध्वं, निर्वाणमधिगच्छति ।
यथा दग्धेन्धनो वह्नि-र्निरुपादानसन्ततिः ॥ ७ ॥—अनु०

टी०—कृत्स्नेत्यादि । सकलकर्मकलङ्कनिर्मुक्त ऊर्ध्वमेव निर्वाणमधिगच्छति । निर्वृतस्य स्थानमप्युपचारान्निर्वाणम् । अथवा निर्वाणं-निर्वृतत्वं सिद्धत्वं प्रक्षिप्तप्रदग्धेन्धनो वह्निरिव निरुद्धकाष्ठाद्युपादानसन्ततिः ॥ ७ ॥

भा०—दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे, नारोहति भवाङ्कुरः ॥ ८ ॥—अनु०

टी०—दग्धे इत्यादि । बीजेऽत्यन्तं-भस्मसात्कृते नाङ्कुरस्य प्रादुर्भावः, एवं कर्मबीजे ध्वस्ते संसाराङ्कुरस्याप्रादुर्भावः ॥ ८ ॥

भा०—संसारसुखमतीत्यात्यन्तिकमैकान्तिकं निरुपमं नित्यं निरतिशयं निर्वाणसुखमवाप्नोतीति ॥ ७ ॥

टी०—संसारसुखमतीत्यात्यन्तिकं नापवर्गगमनमैकान्तिकं एकान्तेनैव भवति, न कदाचिन्न भवतीत्यर्थः। निरुपममिति नास्ति इह किञ्चित् तस्योपमानं तत्सदृशमिति। निरतिशयमिति[1] नास्यातिशयः प्रकर्षापकर्षलक्षणो विद्यते, सर्वमुक्तानां तुल्यत्वात्। नित्यमिति ध्रुवं कूटस्थमविचालि निर्वाणसुखमवाप्नोतीति।

सत्कारार्हः सततं, निरुत्सुको निर्भयो विरुग् विगदः।
निःप्रणयो निर्द्वेषो, निर्द्वन्द्वो नीरजा वितनुः ॥ १ ॥—आर्या
संसाराग्निं निर्वा–प्य दहन्तं परमसौख्यसलिलेन।
निर्वाति स्वात्मस्थो, गतजाति-जरा-मरण-रोगः ॥ २ ॥—,,
व्याबाधाभावाच्च स, सर्वज्ञत्वाच्च भवति परमसुखी।
व्याबाधाभावो नु, स्वस्थस्य ज्ञस्य ननु सुसुखम् ॥ ३ ॥—,,
अनुपममप्रमेयमव्यय–मनवं शिवमजरमरुजमभयत्वम्।
एकान्तिकमात्यन्तिक–मव्याबाधं सुखं स्वेतत् ॥ ४ ॥—,,
त्रिष्वपि कालेषु सुखा–नि यानि तिर्यङ्-मनुष्य-देवानाम्।
सर्वाणि तानि न समा–नि तस्य मात्रा सुखेनापि ॥ ५ ॥—,,
तानि हि रागोत्सेपा–व्याबाधापूर्वकाणि च सुखानि।
नह्यस्ति रागमपवि–ध्य तत्र किञ्चित् सुखमपृक्तम् ॥ ६ ॥—,,
एवं क्षायिकसम्यक्–त्वं वीर्य-सिद्धत्व-दर्शन-ज्ञानैः।
आत्यन्तिकैः स युक्तो, निर्द्वन्द्वेनापि च सुखेन ॥ ७ ॥—,,

सम्प्रत्येनमेव शास्त्रार्थं श्लोकैरुपसंहरति, द्विबद्धं सुबद्धं भवतीति ॥

भा०—एवं तत्त्वपरिज्ञानाद्, विरक्तस्यात्मनो भृशम्।
निरास्रवत्वाच्छिन्नायां, नवायां कर्मसन्ततौ ॥ १ ॥—अनु०

टी०—एवमित्यादि। उक्तनीत्या यानि जीवादीनि तत्त्वानि तत्परिज्ञानाद् विरक्तस्य–विषयसुखवितृष्णस्य भृशमात्मनः स्थगितास्रवद्वारत्वाद् विच्छिन्नायामभिनवकर्मसन्ततौ–कर्मसन्ताने ॥ १ ॥

---

१ 'वाप्नोति' इति ग–पाठः। २ 'पुलाकादिस्वातिशयः' इत्यधिको ज–पाठः। ३ 'स्वस्य ज्ञस्यापि' इति ङ–पाठः। ४ 'कं निरुपम' इति घ–पाठः। ५ 'मामि' इति ज–पाठः, च–पाठस्तु 'नामि'।

भा०—पूर्वार्जितं क्षपयतो, यथोक्तैः क्षयहेतुभिः ।
संसारबीजं कात्स्न्र्येन, मोहनीयं प्रहीयते ॥ २ ॥—अनु०

टी०—पूर्वेत्यादि । प्राक्तनं कर्म क्षपयतस्तपोऽनुष्ठानादिभिः क्षयितृभिः संसारतरोर्बीजं समस्तमेव मोहनीयं प्रहीयते क्षपकश्रेण्याम् ॥ २ ॥

भा०—ततोऽन्तरायज्ञानघ्न—दर्शनघ्नान्यनन्तरम् ।
प्रहीयन्तेऽस्य युगपत्, त्रीणि कर्माण्यशेषतः ॥ ३ ॥—अनु०

टी०—तत इत्यादि। अन्तराये ज्ञानदर्शनावरणयोश्च क्षीणयोर्युगपत् अशेषतः॥३॥

भा०—गर्भसूच्यां विनष्टायां, यथा तालो विनश्यति ।
तथा कर्म क्षयं याति, मोहनीये क्षयं गते ॥ ४ ॥—अनु०

टी०—गर्भसूच्यामित्यादि । मस्तकसूच्यां ध्वस्तायां सर्वात्मना विनाशमुपैति सकलस्तालतरुः, एवं मोहनीये क्षीणे शेषं कर्म क्षयमेति सर्वम् ॥ ४ ॥

भा०—ततः क्षीणचतुःकर्मा, प्राप्तोऽथाख्यातसंयमम् ।
बीजबन्धननिर्मुक्तः, स्नातकः परमेश्वरः ॥ ५ ॥—अनु०

टी०—तत इत्यादि । क्षिप्तसकलघातिकर्मा यथाख्यातसंयममनुप्राप्तो बीजबन्धनेन-मोहनीयादिना विमुक्तः स्नातकोऽन्तर्मलापगमात् परमेश्वरः–केवलर्द्धिप्राप्तः ॥५ ॥

भा०—शेषकर्मफलापेक्षः, शुद्धो बुद्धो निरामयः ।
सर्वज्ञः सर्वदर्शी च, जिनो भवति केवली ॥ ६ ॥—अनु०

टी०—शेष इत्यादि । वेदनीयादिकर्मफलापेक्षः शुद्धो मोहादिमलापगमात् बुद्धः केवलज्ञानावाप्तेर्निरामयो–निर्गताशेषरोगनिदानः केवली भवति ॥ ६ ॥

भा०—कृत्स्नकर्मक्षयादूर्ध्वं, निर्वाणमधिगच्छति ।
यथा दग्धेन्धनो वह्नि-निरुपादानसन्ततिः ॥ ७ ॥—अनु०

टी०—कृत्स्नेत्यादि । सकलकर्मकलङ्कनिर्मुक्त ऊर्ध्वमेव निर्वाणमधिगच्छति। निर्वृतस्य स्थानमप्युपचारान्निर्वाणम्। अथवा निर्वाणं–निर्वृतत्वं सिद्धत्वं प्रक्षिप्तप्रदग्धेन्धनो वह्निरिव निरुद्धकाष्ठाद्युपादानसन्ततिः ॥ ७ ॥

भा०—दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे, नारोहति भवाङ्कुरः ॥ ८ ॥—अनु०

टी०—दग्धे इत्यादि । बीजेऽत्यन्तं–भस्मसात्कृते नाङ्कुरस्य प्रादुर्भावः, एवं कर्मबीजे ध्वस्ते संसाराङ्कुरस्याप्रादुर्भावः ॥ ८ ॥

भा०—संसारसुखमतीत्यात्यन्तिकमैकान्तिकं निरुपमं नित्यं निरतिशयं निर्वाणसुखमवाप्नोतीति ॥ ७ ॥

टी०—संसारसुखमतीत्यात्यन्तिकं नापवर्गंस्थानमैकान्तिकं एकान्तेनैव भवति, न कदाचिन्न भवतीत्यर्थः। निरुपममिति नास्ति इह किञ्चित् तस्योपमानं तत्सदृशमिति। निरतिशयमिति[1] नास्यातिशयः प्रकर्षापकर्षलक्षणो विद्यते, सर्वमुक्तानां तुल्यत्वात्। नित्यमिति ध्रुवं कूटस्थमविचालि निर्वाणसुखमवाप्नोतीति।

सत्काराहः सततं, निरुत्सुको निर्भयो विरुग् विमदः।
निःप्रणयो निर्द्वेषो, निर्द्वन्द्वो नीरजा वितनुः ॥ १ ॥—आर्या
संसाराग्निं निर्वा–प्य दहन्तं परमसौख्यसलिलेन।
निर्वाति स्वात्मस्थो, गतजाति-जरा-मरण-रोगः ॥ २ ॥—,,
व्याबाधाभावाच्च स, सर्वज्ञत्वाच्च भवति परमसुखी।
व्याबाधाभावो नु, स्वस्थस्य ज्ञस्य ननु सुसुखम् ॥ ३ ॥—,,
अनुपममभेयमव्यय–मनघं शिवमजरमरुजमभयमूपम्।
एकान्तिकमात्यन्तिक–मव्याबाधं सुखं संतत् ॥ ४ ॥—,,
त्रिष्वपि कालेषु सुखा–नि यानि तिर्यङ्-मनुष्य-देवानाम्।
सर्वाणि तानि न समा–नि तस्य मात्रा सुखेनापि ॥ ५ ॥—,,
तानि हि रागोद्रोषा–व्याबाधापूर्वकाणि च सुखानि।
नह्यस्ति रागमपवि–ध्य तत्र किञ्चित् सुखमपृक्तम् ॥ ६ ॥—,,
एवं क्षायिकसम्यक्–त्वं वीर्य-सिद्धत्व-दर्शन-ज्ञानैः।
आत्यन्तिकैः स युक्तो, निर्द्वन्द्वेनापि च सुखेन ॥ ७ ॥—,,

सम्प्रत्येनमेव शास्त्रार्थं श्लोकैरुपसंहरति, द्विर्बद्धं सुबद्धं भवतीति ॥

भा०—एवं तत्त्वपरिज्ञानाद्, विरक्तस्यात्मनो भृशम्।
निरास्रवत्वाच्छिन्नायां, नवायां कर्मसन्ततौ ॥ १ ॥—अनु०

टी०—एवमित्यादि। उक्तनीत्या यानि जीवादीनि तत्त्वानि तत्परिज्ञानाद् विरक्तस्य–विषयसुखवितृष्णस्य भृशमात्मनः स्थगितास्रवद्वारत्वाद् विच्छिन्नायामभिनवकर्मसन्ततौ–कर्मसन्ताने ॥ १ ॥

---

१ 'वाप्नोति' इति ग–पाठः। २ 'पुलाकादिस्वातिशयः' इत्यधिको ज–पाठः। ३ 'स्वस्य ज्ञस्यापि' इति ङ–पाठः। ४ 'कं निरुपमं' इति घ–पाठः। ५ 'मामि' इति ज–पाठः, च–पाठस्तु 'नाभि'।

भा०—पूर्वार्जितं क्षपयतो, यथोक्तैः क्षयहेतुभिः ।
संसारबीजं कार्त्स्न्येन, मोहनीयं प्रहीयते ॥ २ ॥—अनु०

टी०—पूर्वेत्यादि । प्राक्तनं कर्म क्षपयतस्तपोऽनुष्ठानादिभिः क्षयितृभिः संसार-तरोर्बीजं समस्तमेव मोहनीयं प्रहीयते क्षपकश्रेण्याम् ॥ २ ॥

भा०—ततोऽन्तरायज्ञानघ्न—दर्शनघ्नान्यनन्तरम् ।
प्रहीयन्तेऽस्य युगपत्, त्रीणि कर्माण्यशेषतः ॥ ३ ॥—अनु०

टी०—तत इत्यादि। अन्तराये ज्ञानदर्शनावरणयोश्च क्षीणयोर्युगपत् अशेषतः॥३॥

भा०—गर्भसूच्यां विनष्टायां, यथा तालो विनश्यति ।
तथा कर्म क्षयं याति, मोहनीये क्षयं गते ॥ ४ ॥—अनु०

टी०—गर्भसूच्यामित्यादि । मस्तकसूच्यां ध्वस्तायां सर्वात्मना विनाशमुपैति सकलस्तालतरुः, एवं मोहनीये क्षीणे शेषं कर्म क्षयमेति सर्वम् ॥ ४ ॥

भा०—ततः क्षीणचतुःकर्मा, प्राप्तोऽथाख्यातसंयमम् ।
बीजबन्धननिर्मुक्तः, स्नातकः परमेश्वरः ॥ ५ ॥—अनु०

टी०—तत इत्यादि । क्षिप्तसकलघातिकर्मा यथाख्यातसंयममनुप्राप्तो बीजबन्धने-न-मोहनीयादिना विमुक्तः स्नातकोऽन्तर्मलापगमात् परमेश्वरः–केवलर्द्धिप्राप्तः ॥ ५ ॥

भा०—शेषकर्मफलापेक्षः, शुद्धो बुद्धो निरामयः ।
सर्वज्ञः सर्वदर्शी च, जिनो भवति केवली ॥ ६ ॥—अनु०

टी०—शेष इत्यादि । वेदनीयादिकर्मफलापेक्षः शुद्धो मोहादिमलापगमात् बुद्धः केवलज्ञानावाप्तेर्निरामयो–निर्गताशेषरोगनिदानः केवली भवति ॥ ६ ॥

भा०—कृत्स्नकर्मक्षयादूर्ध्वं, निर्वाणमधिगच्छति ।
यथा दग्धेन्धनो वह्नि-र्निरुपादानसन्ततिः ॥ ७ ॥—अनु०

टी०—कृत्स्नेत्यादि । सकलकर्मकलङ्कनिर्मुक्त ऊर्ध्वमेव निर्वाणमधिगच्छति । निर्वृतस्य स्थानमप्युपचारान्निर्वाणम् । अथवा निर्वाणं–निर्वृतत्वं सिद्धत्वं प्रक्षिप्तप्रदग्धेन्धनो वह्निरिव निरुद्धकाष्ठाद्युपादानसन्ततिः ॥ ७ ॥

भा०—दग्धे बीजे यथाऽत्यन्तं, प्रादुर्भवति नाङ्कुरः ।
कर्मबीजे तथा दग्धे, नारोहति भवाङ्कुरः ॥ ८ ॥—अनु०

टी०—दग्धे इत्यादि । बीजेऽत्यन्तं–भस्मसात्कृते नाङ्कुरस्य प्रादुर्भावः, एवं कर्मबीजे ध्वस्ते संसाराङ्कुरस्याप्रादुर्भावः ॥ ८ ॥

भा०—संसारसुखमतीत्यात्यन्तिकमैकान्तिकं निरुपमं नित्यं निरतिशयं निर्वाणसुखमवाप्नोतीति ॥ ७ ॥

टी०—संसारसुखमतीत्यात्यन्तिकं मापर्यवसानमैकान्तिकं एकान्तेनैव भवति, न कदाचिन्न भवतीत्यर्थः। निरुपममिति नास्ति इह किञ्चिन् तस्योपमानं तत्सदृशमिति। निरतिशयमिति[1] नास्यातिशयः प्रकर्षापकर्षलक्षणो विद्यते, सर्वमुक्तानां तुल्यत्वात्। नित्यमिति ध्रुवं कूटस्थमविचालि निर्वाणसुखमवाप्नोतीति।

सत्काराहः सत्त्वं, निरुत्सुको निर्भयो विरुग् विमदः।
निःप्रणयो निर्द्वेषो, निर्द्वन्द्वो नीरजा वितनुः ॥ १ ॥—आर्या
संसाराग्निं निर्वा–प्य दहन्तं परमसौख्यसलिलेन।
निर्वाति स्वात्मस्थो, गतजाति-जरा-मरण-रोगः ॥ २ ॥—,,
व्याबाधाभावाच्च स, सर्वज्ञत्वाच्च भवति परमसुखी।
व्याबाधाभावो नु, स्वस्थस्य ज्ञस्य ननु सुसुखम् ॥ ३ ॥—,,
अनुपमममेयमव्यय–मनर्घं शिवमजरमरुजमभयपदम्।
एकान्तिकमात्यन्तिक–मव्याबाधं सुखं हेतत् ॥ ४ ॥—,,
त्रिष्वपि कालेषु सुखा–नि यानि तिर्यङ्-मनुष्य-देवानाम्।
सर्वाणि तानि न समा–नि तस्य मात्रा सुखेनापि ॥ ५ ॥—,,
तानि हि रागोत्क्षोपा–व्याबाधापूर्वकाणि च सुखानि।
नह्यस्ति रागमपवि–ध्य तत्र किञ्चित् सुखमपृक्तम् ॥ ६ ॥—,,
एवं क्षायिकसम्यक्–त्वं वीर्य-सिद्धत्व-दर्शन-ज्ञानैः।
आत्यन्तिकैः स युक्तो, निर्द्वन्द्वेनापि च सुखेन ॥ ७ ॥—,,

सम्प्रत्येनमेव शास्त्रार्थं श्लोकैरुपसंहरति, द्विर्बद्धं सुबद्धं भवतीति ॥

भा०—एवं तत्त्वपरिज्ञानाद्, विरक्तस्यात्मनो भृशम्।
निरास्रवत्वाच्छिन्नायां, नवायां कर्मसन्ततौ ॥ १ ॥—अनु०

टी०—एवमित्यादि। उक्तनीत्या यानि जीवादीनि तत्त्वानि तत्परिज्ञानाद् विरक्तस्य–विषयसुखवितृष्णस्य भृशमात्मनः स्थगितास्रवद्वारत्वाद् विच्छिन्नायामभिनवकर्मसन्ततौ–कर्मसन्ताने ॥ १ ॥

---

१ 'वाप्नोति' इति ग–पाठः। २ 'पुलाकादिस्वातिशयः' इत्यधिको ज–पाठः। ३ 'स्वस्य ज्ञस्यापि' इति ङ–पाठः। ४ 'कं निरुपमं' इति घ–पाठः। ५ 'मामि' इति ज–पाठः, च–पाठस्तु 'नाभि'।

भा०—अतस्तु गतिवैकृत्य-मेषां यदुपलभ्यते ।
कर्मणः प्रतिघाताच्च, प्रयोगाच्च तदिष्यते ॥ १५ ॥

टी०—अतस्त्वित्यादि । अस्मादुक्तप्रकारादन्यथा गतिवैकृत्यं यद् भवति गतिविकारूपं तत् कर्मणः-क्रियायाः प्रतिघाताद् गिरिभित्त्यादेः प्रयोगाच्च पुरुषेच्छानुविधानादिष्यते सर्वम् ॥ १५ ॥

भा०—अधस्तिर्यगथोर्ध्वं च, जीवानां कर्मजा गतिः ।
ऊर्ध्वमेव तु तद्धर्मा, भवति क्षीणकर्मणाम् ॥ १६ ॥—अनु०

टी०—अध इत्यादि । सर्वतो गतिर्जीवानामधस्तिर्यगूर्ध्वं च कर्मजा गतिः । क्षीणकर्मणां तूर्ध्वमेव गतिस्तद्धर्मा सा स्वाभाविकी गतिर्धर्मो येषामिति ॥ १६ ॥

भा०—द्रव्यस्य कर्मणो यद्व-दुत्पत्त्याऽऽरम्भ-[1]वीतयः ।
समं तथैव सिद्धस्य, गति-मोक्ष-भवक्षयाः ॥ १७ ॥—अनु०

टी०—द्रव्यस्येत्यादि । द्रव्यस्य-परमाण्वादेः कर्मणः-क्रियाया यथोत्पत्तिरारम्भो गतिश्च समं-युगपत् तथा सिद्धस्य गतिमोक्षभवक्षयाः गतिः मुक्तिर्मोक्षः-स्वात्मन्यवस्थानं भवक्षयो-जन्मक्षयः संसारक्षयो वेति ॥ १७ ॥

भा०—उत्पत्तिश्च विनाशश्च, प्रकाश-तमसोरिह ।
युगपद् भवतो यद्वत्, तथा निर्वाण-कर्मणोः ॥ १८ ॥—अनु०

टी०—[2]उत्पत्तिश्चेत्यादि । प्रकाश-तमसोर्यथा युगपदुत्पत्ति-विनाशौ । यस्मिन् काले प्रकाश उत्पद्यते तस्मिन्नेव काले तमसो विनाश इति युगपद् एवं निर्वाणं कर्मक्षयश्चेत्येक एव कालः । तथाऽन्यत्राप्युक्तम्—

[3]स ततो बन्धनमोक्षादूर्ध्वं जीवः प्रवेगतो याति ।
न त्वैरण्डकबीजं, बन्धनमुक्तं व्रजत्यूर्ध्वम् ॥ १ ॥—आर्या
सङ्गत्यागाद् वा लघु-रात्मा भूत्वा स उत्पतत्यूर्ध्वम् ।
न तु गतलेपालाबू-रुद्याति जले निमग्नाऽपि ॥ २ ॥—,,
ध्यानेन तथा चात्मा, प्रयोजितो येन स व्रजत्यूर्ध्वम् ।
तिष्ठासुरपि न शक्तः, प्रवेगितो ननु नरः स्थातुम् ॥ ३ ॥—"
अपि चाग्नेरिव गमनं, स्वाभाविकमूर्ध्वमात्मनस्तस्य ।
आत्माग्निशिखाया गति-रन्या कर्मानिलवशाद्धि ॥ ४ ॥—"

१ 'वैचयः' इति ग-पाठः । २ 'उत्पत्तिरित्यादि' इति च-ज-पाठः । ३ 'स सततो' इति च-ज-पाठः ।

भा०—तदनन्तरमेवोर्ध्व--मालोकान्तात् स गच्छति ।
पूर्वप्रयोगासङ्गत्व-बन्धच्छेदोर्ध्वगौरवैः ॥ ९ ॥—अनु०

टी०—तदनन्तरेत्यादि । सकलकर्मक्षयानन्तरमालोकान्तादूर्ध्वं स गच्छति । कथं मुक्तस्य गतिरित्याशङ्कायामिदमाह-पूर्वप्रयोगादसङ्गत्वात् बन्धच्छेदादूर्ध्वगौरवाच्च गतिरस्य भवति सिद्धा ॥ ९ ॥

पूर्वप्रयोगस्योदाहरणानि दर्शयति—

भा०— कुलालचक्रे दोलाया-मिषौ चापि यथेष्यते ।
पूर्वप्रयोगात् कर्मेह, तथा सिद्धिगतिः स्मृता ॥ १० ॥—अनु०

टी०— कुलालेत्यादि । पूर्वप्रयोगात् कर्म-क्रिया यथा कुलालचक्रादिषु तथा सिद्धगतिः स्मृता ॥ १० ॥

भा०—मृल्लेपसङ्गनिर्मोक्षाद्, यथा दृष्टाऽप्स्वलाबुनः ।
कर्मसङ्गविनिर्मोक्षात्, तथा सिद्धिगतिः स्मृता ॥ ११ ॥—अनु०

टी०—मृल्लेपेत्यादि । अलाबुनोऽप्सून्मज्जनं दृष्टं मृल्लेपसङ्गनिर्मोक्षात् एवं कर्माष्टकसङ्गत्यागात् सिद्धगतिः सिद्धा ॥ ११ ॥

भा०— एरण्डयन्त्रपेडासु, बन्धच्छेदाद् यथा गतिः ।
कर्मबन्धनविच्छेदात्, सिद्धस्यापि तथेष्यते ॥ १२ ॥—अनु०

टी०—एरण्डेत्यादि । व्याघ्रपादबीजबन्धनच्छेदाद् यन्त्रबन्धनच्छेदाद् पेडाबन्धनच्छेदाच्च गतिर्दृष्टा मिञ्जाकाष्ठपेडापुटानामेवं कर्मबन्धनविच्छेदात् सिद्धस्य गतिः ॥ १२ ॥

भा०—ऊर्ध्वगौरवधर्माणो, जीवा इति जिनोत्तमैः ।
अधोगौरवधर्माणः, पुद्गला इति चोदितम् ॥ १३ ॥—अनु०

टी०—ऊर्ध्वेत्यादि । ऊर्ध्वगमन एव गौरवं धर्मः—स्वभावो जीवानाम् पुद्गलास्त्वधोगमनधर्माण इति सर्वज्ञवचनम् ॥ १३ ॥

भा०—यथाऽधस्तिर्यगूर्ध्वं च, लोष्टवाय्वग्निवीतयः ।
स्वभावतः प्रवर्तन्ते, तथोर्ध्वं गतिरात्मनाम् ॥ १४ ॥—अनु०

टी०—यथेत्यादि । यथाक्रममधोगमनादि । लोष्टानां वीतयो-गतयः स्वभावादेव-जायन्ते तथोर्ध्वगतिरात्मनाम् ॥ १४ ॥

१ 'चापि' इति घ-पाठः । २ 'स्मृताः' इति ज-पाठः । ३ 'ऊर्ध्वमित्यादि' इति ऊ-पाठः । ४ 'वीचयः' इति ग-पाठः । ५ 'स्वभावगतिरात्मनः' इति ग-पाठः । ६ 'लोष्टत्वबीचयो' इति ग-पाठः ।

भा०—अतस्तु गतिवैकृत्य-मेषां यदुपलभ्यते ।
कर्मणः प्रतिघाताच्च, प्रयोगाच्च तदिष्यते ॥ १५ ॥

टी०—अतस्त्वित्यादि । अस्मादुक्तप्रकारादन्यथा गतिवैकृत्यं यद् भवति गतिविका-रूपं तत् कर्मणः-क्रियायाः प्रतिघाताद् गिरिभित्त्यादेः प्रयोगाच्च पुरुषेच्छानुविधाना-दिष्यते सर्वम् ॥ १५ ॥

भा०—अधस्तिर्यगथोर्ध्वं च, जीवानां कर्मजा गतिः ।
ऊर्ध्वमेव तु तद्धर्मा, भवति क्षीणकर्मणाम् ॥ १६ ॥—अनु०

टी०—अध इत्यादि । सर्वतो गतिर्जीवानामधस्तिर्यगूर्ध्वं च कर्मजा गतिः । क्षीणकर्मणां तूर्ध्वमेव गतिस्तद्धर्मा सा स्वाभाविकी गतिर्धर्मो येषामिति ॥ १६ ॥

भा०—द्रव्यस्य कर्मणो यद्व-दुत्पत्त्याऽऽरम्भ-[1]वीतयः ।
समं तथैव सिद्धस्य, गति-मोक्ष-भवक्षयाः ॥ १७ ॥—अनु०

टी०—द्रव्यस्येत्यादि । द्रव्यस्य-परमाण्वादेः कर्मणः-क्रियाया यथोत्पत्तिरारम्भो गतिश्च समं-युगपत् तथा सिद्धस्य गतिमोक्षभवक्षयाः गतिः मुक्तिर्मोक्षः-स्वात्मन्यव-स्थानं भवक्षयो-जन्मक्षयः संसारक्षयो वेति ॥ १७ ॥

भा०—उत्पत्तिश्च विनाशश्च, प्रकाश-तमसोरिह ।
युगपद् भवतो यद्वत्, तथा निर्वाण-कर्मणोः ॥ १८ ॥—अनु०

टी०—[2]उत्पत्तिश्चेत्यादि । प्रकाश-तमसोर्यथा युगपदुत्पत्ति-विनाशौ । यस्मिन् काले प्रकाश उत्पद्यते तस्मिन्नेव काले तमसो विनाश इति युगपद् एवं निर्वाणं कर्मक्षयश्चेत्येक एव कालः । तथाऽन्यत्राप्युक्तम्—

[3]स ततो बन्धनमोक्षादूर्ध्वं जीवः प्रवेगतो याति ।
न त्वैरण्डकबीजं, बन्धनमुक्तं व्रजत्यूर्ध्वम् ॥ १ ॥—आर्या
सङ्गत्यागाद् वा लघु-रात्मा भूत्वा स उत्पतत्यूर्ध्वम् ।
न तु गतलेपालाबू-रुद्याति जले निमग्नाऽपि ॥ २ ॥—,,
ध्यानेन तथा चात्मा, प्रयोजितो येन स व्रजत्यूर्ध्वम् ।
तिष्ठासुरपि न शक्तः, प्रवेगितो ननु नरः स्थातुम् ॥ ३ ॥—"
अपि चाग्नेरिव गमनं, स्वाभाविकमूर्ध्वमात्मनस्तस्य ।
आत्माग्निशिखाया गति-रन्या कर्मानिलवशाद्धि ॥ ४ ॥—"

---

१ 'वीचयः' इति ग-पाठः । २ 'उत्पत्तिरित्यादि' इति च-ज-पाठः । ३ 'स सततो' इति च-ज-पाठः ।

भा०—तदनन्तरमेवोर्ध्व--मालोकान्तात् स गच्छति ।
पूर्वप्रयोगासङ्गत्व-बन्धच्छेदोर्ध्वगौरवैः ॥ ९ ॥— अनु०

टी०—तदनन्तरेत्यादि । सकलकर्मक्षयगमनन्तरमालोकान्तादूर्ध्वं स गच्छति । कथं मुक्तस्य गतिरित्याशङ्कायामिदमाह-पूर्वप्रयोगादसङ्गत्वात् बन्धच्छेदादूर्ध्वगौरवाच गतिरस्य भवति सिद्धा ॥ ९ ॥

पूर्वप्रयोगस्योदाहरणानि दर्शयति—

भा०— कुलालचक्रे दोलाया-मिषौ चाऽपि यथेष्यते ।
पूर्वप्रयोगात् कर्मेह, तथा सिद्धिगतिः स्मृता ॥ १० ॥—अनु०

टी०— कुलालेत्यादि । पूर्वप्रयोगात् कर्म-क्रिया यथा कुलालचक्रादिषु तथा सिद्धगतिः स्मृता ॥ १० ॥

भा०—मृल्लेपसङ्गनिर्मोक्षाद्, यथा दृष्टाऽप्स्वलाबुनः ।
कर्मसङ्गविनिर्मोक्षात्, तथा सिद्धिगतिः स्मृता ॥ ११ ॥—अनु०

टी०—मृल्लेपेत्यादि । अलाबुनोऽप्सून्मज्जनं दृष्टं मृल्लेपसङ्गनिर्मोक्षात् एवं कर्माष्टकसङ्गत्यागात् सिद्धगतिः सिद्धा ॥ ११ ॥

भा०— एरण्डयन्त्रपेडासु, बन्धच्छेदाद् यथा गतिः ।
कर्मबन्धनविच्छेदात्, सिद्धस्यापि तथेष्यते ॥ १२ ॥—अनु०

टी०—एरण्डेत्यादि । व्याघ्रपादबीजबन्धनच्छेदाद् यन्त्रबन्धनच्छेदाद् पेडाबन्धनच्छेदाच गतिर्दृष्टा मिञ्जाकाष्टपेडापुटानामेवं कर्मबन्धनविच्छेदात् सिद्धस्य गतिः ॥ १२ ॥

भा०— ऊर्ध्वगौरवधर्माणो, जीवा इति जिनोत्तमैः ।
अधोगौरवधर्माणः, पुद्गला इति चोदितम् ॥ १३ ॥— अनु०

टी०—ऊर्ध्वेत्यादि । ऊर्ध्वगमन एव गौरवं धर्मः-स्वभावो जीवानाम् पुद्गलास्त्वधो गमनधर्माण इति सर्वज्ञवचनम् ॥ १३ ॥

भा०— यथाऽधस्तिर्यगूर्ध्वं च, लोष्टवाय्वग्निवीतयः ।
स्वभावतः प्रवर्तन्ते, तथोर्ध्वं गतिरात्मनाम् ॥ १४ ॥—अनु०

टी०—यथेत्यादि । यथाक्रममधोगमनादि । लोष्टानां वीतयो-गतयः स्वभावादेव जायन्ते तथोर्ध्वगतिरात्मनाम् ॥ १४ ॥

---

१ 'चापि' इति घ-पाठः । २ 'स्मृताः' इति ज-पाठः । ३ 'ऊर्ध्वमित्यादि' इति ज-पाठः । ४ 'वीचयः' इति ग-पाठः । ५ 'स्वभावगतिरात्मनः' इति ग-पाठः । ६ 'लोष्टत्ववीचयो' इति ग-पाठः ।

भा०—अतस्तु गतिवैकृत्य-मेषां यदुपलभ्यते ।
कर्मणः प्रतिघाताच्च, प्रयोगाच्च तदिष्यते ॥ १५ ॥

टी०—अतस्त्वित्यादि । अस्मादुक्तप्रकारादन्यथा गतिवैकृत्यं यद् भवति गतिविकारूपं तत् कर्मणः-क्रियायाः प्रतिघाताद् गिरिभित्त्यादेः प्रयोगाच्च पुरुषेच्छानुविधानादिष्यते सर्वम् ॥ १५ ॥

भा०—अधस्तिर्यगथोर्ध्वं च, जीवानां कर्मजा गतिः ।
ऊर्ध्वमेव तु तद्धर्मा, भवति क्षीणकर्मणाम् ॥ १६ ॥—अनु०

टी०—अध इत्यादि । सर्वतो गतिर्जीवानामधस्तिर्यगूर्ध्वं च कर्मजा गतिः । क्षीणकर्मणां तूर्ध्वमेव गतिस्तद्धर्मा सा स्वाभाविकी गतिर्धर्मो येषामिति ॥ १६ ॥

भा०—द्रव्यस्य कर्मणो यद्व-दुत्पत्त्याऽऽरम्भ-[1]वीतयः ।
समं तथैव सिद्धस्य, गति-मोक्ष-भवक्षयाः ॥ १७ ॥—अनु०

टी०—द्रव्यस्येत्यादि । द्रव्यस्य-परमाण्वादेः कर्मणः-क्रियाया यथोत्पत्तिरारम्भो गतिश्च समं-युगपत् तथा सिद्धस्य गतिमोक्षभवक्षयाः गतिः मुक्तिर्मोक्षः-स्वात्मन्यवस्थानं भवक्षयो-जन्मक्षयः संसारक्षयो वेति ॥ १७ ॥

भा०—उत्पत्तिश्च विनाशश्च, प्रकाश-तमसोरिह ।
युगपद् भवतो यद्वत्, तथा निर्वाण-कर्मणोः ॥ १८ ॥—अनु०

टी०—[2]उत्पत्तिश्चेत्यादि । प्रकाश-तमसोर्यथा युगपदुत्पत्ति-विनाशौ । यस्मिन् काले प्रकाश उत्पद्यते तस्मिन्नेव काले तमसो विनाश इति युगपद् एवं निर्वाणं कर्मक्षयश्चेत्येक एव कालः । तथाऽन्यत्राप्युक्तम्—

[3]स ततो बन्धनमोक्षादूर्ध्वं जीवः प्रवेगतो याति ।
न त्वैरण्डकबीजं, बन्धनमुक्तं व्रजत्यूर्ध्वम् ॥ १ ॥—आर्या
सङ्गत्यागाद् वा लघु-रात्मा भूत्वा स उत्पतत्यूर्ध्वम् ।
न तु गतलेपालाबू-रुद्याति जले निमग्नाऽपि ॥ २ ॥—,,
ध्यानेन तथा चात्मा, प्रयोजितो येन स व्रजत्यूर्ध्वम् ।
तिष्ठासुरपि न शक्तः, प्रवेगितो ननु नरः स्थातुम् ॥ ३ ॥—,,
अपि चाग्नेरिव गमनं, स्वाभाविकमूर्ध्वमात्मनस्तस्य ।
आत्माग्निशिखाया गति-रन्या कर्मानिलवशाद्धि ॥ ४ ॥—,,

१ 'वेचयः' इति ग-पाठः । २ 'उत्पत्तिरित्यादि' इति च-ज-पाठः । ३ 'स सततो' इति च-ज-पाठः ।

स्ववशस्यानभिसन्धे-श्च तस्य न च विग्रहा गतिर्भवति ।
भवति हि विग्रहगमनं, कर्मवशस्याधिनभेद ॥ ५ ॥—आर्या
अपि चानुश्रेणिगति-र्जीवानां चैव पुद्गलानां च ।
स्वाभाविकीष्यते ये-न तेन सा विग्रहा सिद्धा ॥ ६ ॥—"
सिद्धस्य गतिरयुक्ता, स्ववशत्वान्निःप्रयोजनत्वाच ।
नो सिद्धावयुक्ता, कर्मविमुक्तस्य निःस्वतः ॥ ७ ॥—"
बन्धविमोक्षाद् सङ्ग-त्यागात् पूर्वप्रयोगतो नाऽपि ।
ननु गच्छतोऽन्यवशता न च मुक्तोऽभीप्यते विवशः ॥ ८ ॥—"
इत्येवं विप्रलापो-ऽस्पृशगतौ नान्तरालि यत्कालः ।
सत्यां हि सोत्तराव-स्थायां स्याद् सिद्ध इतरो वा ॥ ९ ॥—"
सोऽस्पृशया हि गत्वा-ऽनन्तरमेव समये जगच्छिखरम् ।
अवगाहतेतरां ते-न नास्ति ननु मो व्रजत्कालः ॥ १० ॥—"
सिध्यति गत्वा ह्यात्मा, सिद्धिक्षेत्रेऽपहाय देहमिह ।
नह्यन्तराऽस्ति सिद्धि-र्नासिद्धिश्चास्ति मुक्तस्य ॥ ११ ॥—"
स्ववशस्यानभिसन्धेः, कृतकृत्यस्य च यथा स्वभावेन ।
तस्योपयोग इष्ट-स्तथा गतिः सा स्वभावेन ॥ १२ ॥—"

अथ यस्याः पृथिव्या उपरि मुक्तानामवस्थानं सा किंस्वरूपेत्याह—

**भा०—तन्वी मनोज्ञा सुरभिः, पुण्या परमभास्वरा ।**
**प्राग्भारा नाम वसुधा, लोकमूर्ध्नि व्यवस्थिता ॥ १९ ॥—अनु०**

**टी०**—तन्वीत्यादि । मध्ये योजनाष्टकबहला प्रदेशपरिहाण्या चोपर्युपरि मक्षिकापत्राद् तनुतरा पर्यन्तेऽतितन्वी मनोज्ञेत्यन्तरुचिरा सुरभिः-इष्टगन्धा पुण्यवद्भिः पृथिवीकायिकैः निर्वर्तिता पुण्या भृशं भासनशीला प्राग्भारेति नाम तस्याः । सा च लोकमूर्धनि व्यवस्थिता ॥ १९ ॥

**भा०—नृलोकतुल्यविष्कम्भा, सितच्छत्रनिभा शुभा ।**
**ऊर्ध्वं तस्याः क्षितेः सिद्धा, लोकान्ते समवस्थिताः ॥ २० ॥—अनु०**

**टी०**—नृलोकेत्यादि । नृलोकेऽर्धतृतीयद्वीपा मानुषोत्तरमहीधरपरिक्षिप्ता तत्तुल्यविष्कम्भा, पञ्चचत्वारिंशद्योजनलक्षविस्तरेत्यर्थः । उत्तानीकृतसितच्छत्रकाकृतिः शुभरूपात्मिका शुभा तस्याः क्षितेरुपरि लोकान्तस्पर्शा सिद्धानामवस्थानम् ॥ २० ॥

---

१ 'स्याधिन' इति ज-पाठः । २ '(?) सा विग्रहा०' इति ज-पाठः । ३ 'नो सिद्धता च युक्ता' इति ग-पाठः । ४ 'भीप्यते' इति ज-पाठः ।

भा०—तादात्म्यादुपयुक्तास्ते, केवलज्ञानदर्शनैः ।
सम्यक्त्वसिद्धतावस्था, हेत्वभावाच्च निष्क्रियाः ॥ २१ ॥—अनु०

टी०—तादात्म्येत्यादि । स आत्मा स्वभावो येषां ते तदात्मानः तद्भावस्तादात्म्यं तस्मात् केवलज्ञानदर्शनस्वभावात् सदैव उपयुक्ताः क्षायिकसम्यक्त्वसिद्धतावस्थाः । हेत्वभावाच्च निष्क्रियाः क्रियापरिणामं प्रति न किञ्चित् तेषामस्ति निमित्तमिति ॥ २१ ॥

भा०—ततोऽप्यूर्ध्वगतिस्तेषां, कस्मान्नास्तीति चेन्मतिः ।
धर्मास्तिकायस्याभावात् स हि हेतुर्गतेः परः ॥ २२ ॥

टी०—ततोऽप्यूर्ध्वमित्यादि । लोकान्तात् परतोऽपि गतिस्तेषां कस्मान्न भवतीति चेत् गतेर्हेतुर्धर्मास्तिकायः परः-प्रधानमपेक्षाकारणं तदभावान्न परतो गतिः ॥ २२ ॥

भा०—संसारविषयातीतं, मुक्तानामव्ययं सुखम् ।
अव्याबाधमिति प्रोक्तं, परमं परमर्षिभिः ॥ २३ ॥

टी०—संसारेत्यादि । संसारविषयमतीतं मुक्तानां सुखमव्ययत्वाद् विगतव्याबाधं परमं-प्रकृष्टं परमर्षिभिः-तीर्थकरादिभिरभिहितम् ॥ २३ ॥

भा०—स्यादेतदशरीरस्य, जन्तोर्नष्टाष्टकर्मणः ।
कथं भवति मुक्तस्य, सुखमित्यत्र [1]मे शृणु ॥ २४ ॥

टी०—स्यादेतदित्यादि । नष्टाष्टकर्मणो विगतयोगत्रयस्य कथमकरणस्य सुखसम्भव इत्यत्र मे शृणु ॥ २४ ॥

भा०—लोके चतुर्ष्विहार्थेषु, सुखशब्दः प्रयुज्यते ।
विषये वेदनाभावे, विपाके मोक्ष एव च ॥ २५ ॥

टी०—लोके इत्यादि । प्रतीतिं दर्शयति । सुखे विषयः शब्दादिः तथा दुःखवेदनायाश्चाभावे, कर्मविपाके च सद्वेदनीयादिके । तथा सकलकर्मक्षयलक्षणे च मोक्षे ॥ २५ ॥

उदाहरणानि यथाक्रमं दर्शयति—

भा०—सुखो वह्निः सुखो वायु-र्विषयेष्विह कथ्यते ।
दुःखाभावे च पुरुषः, सुखितोऽस्मीति मन्यते ॥ २६ ॥

टी०—सुखो वह्निरित्यादि । उदाहरणानि यथाक्रमं दर्शयति ॥ २६ ॥

भा०—पुण्यकर्मविपाकाच्च, सुखमिष्टेन्द्रियार्थजम् ।
कर्मक्लेशविमोक्षाच्च, मोक्षे सुखमनुत्तमम् ॥ २७ ॥

टी०—पुण्यकर्मेत्यादि । [2]गतार्थावेतौ श्लोकौ ॥ २७ ॥

---

१ 'संशृणु' इति ग-पाठः । २ 'गतार्थावेव' इति ज-पाठः ।

स्ववशस्यानभिसन्धे-श्च तस्य न च विग्रहा गतिर्भवति ।
भवति हि विग्रहगमनं, कर्मवशस्याभिसन्धेश्च ॥ ५ ॥—आर्या
अपि चानुश्रेणिगति-र्जीवानां चैव पुद्गलानां च ।
स्वाभाविक्यप्युक्ते-न तेन सा विग्रहा सिद्धा ॥ ६ ॥—"
सिद्धस्य गतिरयुक्ता, स्वभावान्निःप्रयोजनत्वाच्च ।
नो सिद्धावयुक्ता, कर्मविमुक्तस्य निःफलतः ॥ ७ ॥—"
बन्धविमोक्षात् सङ्ग-त्यागात् पूर्वप्रयोगतो नाऽपि ।
ननु गच्छतोऽन्यवशता न च मुक्तोऽपीप्सते विषयः ॥ ८ ॥—"
इत्येवं विप्रलापो-ऽस्पृष्टगतौ नान्तराऽस्ति यत्कालः ।
सत्यां हि सोऽन्तराव-स्थायां स्यात् सिद्ध इतरो वा ॥ ९ ॥—"
सोऽस्पृष्टया हि गत्या-ऽनन्तरमेव समये जगच्छिखरम् ।
अवगाहतेतरां ते-न नास्ति ननु भो व्रजनकालः ॥ १० ॥—"
सिध्यति गत्वा ह्यात्मा, सिद्धिक्षेत्रेऽपहाय देहमिह ।
नह्यन्तराऽस्ति सिद्धि-र्नासिद्धिश्चास्ति मुक्तस्य ॥ ११ ॥—"
स्ववशस्यानभिसन्धेः, कृतकृत्यस्य च यथा स्वभावेन ।
तस्योपयोग इष्ट-स्तथा गतिः सा स्वभावेन ॥ १२ ॥—"

अथ यस्याः पृथिव्या उपरि मुक्तानामवस्थानं सा किंस्वरूपेत्याह—

**भा०—तन्वी मनोज्ञा सुरभिः, पुण्या परमभास्वरा ।**
**प्राग्भारा नाम वसुधा, लोकमूर्ध्नि व्यवस्थिता ॥ १९ ॥—अनु०**

टी०—तन्वीत्यादि । मध्ये योजनाष्टकबहला प्रदेशपरिहाण्या चोपर्युपरि मक्षिकापत्राद् तनुतरा पर्यन्तेऽतितन्वी मनोज्ञेत्यन्तरुचिरा सुरभिः—इष्टगन्धा पुण्यवद्भिः पृथिवीकायिकै-र्निर्वर्तिता पुण्या भृशं भासनशीला प्राग्भारेति नाम तस्याः । सा च लोकमूर्धनि व्यव-स्थिता ॥ १९ ॥

**भा०—नृलोकतुल्यविष्कम्भा, सितच्छत्रनिभा शुभा ।**
**ऊर्ध्वं तस्याः क्षितेः सिद्धा, लोकान्ते समवस्थिताः ॥ २० ॥—अनु०**

टी०—नृलोकेत्यादि । नृलोकेऽर्धतृतीयद्वीपा मानुषोत्तरमहीधरपरिक्षिप्ता तत्तुल्यवि-ष्कम्भा, पञ्चचत्वारिंशद्योजनलक्षविस्तरेत्यर्थः । उत्तानीकृतसितच्छत्राकाकृतिः शुभरूपाधा-त्मिका शुभा तस्याः क्षितेरुपरि लोकान्तस्पृशां सिद्धानामवस्थानम् ॥ २० ॥

---

१ 'स्याधिन' इति ज–पाठः । २ 'येन सेम (?) सा विग्रहा०' इति ज–पाठः । ३ 'नो सिद्धता च युक्ता' इति ग–पाठः । ४ 'भीप्सति' इति ज–पाठः । ५ 'सुरभिगन्धा' इति ज–पाठः ।

भा०—तादात्म्यादुपयुक्तास्ते, केवलज्ञानदर्शनैः ।
सम्यक्त्वसिद्धतावस्था, हेत्वभावाच्च निष्क्रियाः ॥ २१ ॥—अनु०

टी०—तादात्म्येत्यादि । स आत्मा स्वभावो येषां ते तदात्मानः तद्भावस्तादात्म्यं तस्मात् केवलज्ञानदर्शनस्वभावात् सदैव उपयुक्ताः क्षायिकसम्यक्त्वसिद्धतावस्थाः । हेत्वभावाच्च निष्क्रियाः क्रियापरिणामं प्रति न किञ्चित् तेषामस्ति निमित्तमिति ॥ २१ ॥

भा०—ततोऽप्यूर्ध्वगतिस्तेषां, कस्मान्नास्तीति चेन्मतिः ।
धर्मास्तिकायस्याभावात् स हि हेतुर्गतेः परः ॥ २२ ॥

टी०—ततोऽप्यूर्ध्वमित्यादि । लोकान्तात् परतोऽपि गतिस्तेषां कस्मान्न भवतीति चेत् गतेर्हेतुर्धर्मास्तिकायः परः–प्रधानमपेक्षाकारणं तदभावान्न परतो गतिः ॥ २२ ॥

भा०—संसारविषयातीतं, मुक्तानामव्ययं सुखम् ।
अव्याबाधमिति प्रोक्तं, परमं परमर्षिभिः ॥ २३ ॥

टी०—संसारेत्यादि । संसारविषयमतीतं मुक्तानां सुखमव्ययत्वाद् विगतव्याबाधं परमं–प्रकृष्टं परमर्षिभिः–तीर्थकरादिभिरभिहितम् ॥ २३ ॥

भा०—स्यादेतदशरीरस्य, जन्तोर्नष्टाष्टकर्मणः ।
कथं भवति मुक्तस्य, सुखमित्यत्र मे शृणु ॥ २४ ॥

टी०—स्यादेतदित्यादि । नष्टाष्टकर्मणो विगतयोगत्रयस्य कथमकरणस्य सुखसम्भव इत्यत्र मे शृणु ॥ २४ ॥

भा०—लोके चतुर्ष्विहार्थेषु, सुखशब्दः प्रयुज्यते ।
विषये वेदनाभावे, विपाके मोक्ष एव च ॥ २५ ॥

टी०—लोके इत्यादि । प्रतीतिं दर्शयति । सुखे विषयः शब्दादिः तथा दुःखवेदनाया अभावे, कर्मविपाके च सद्वेदनीयादिके । तथा सकलकर्मक्षयलक्षणे च मोक्षे ॥ २५ ॥

उदाहरणानि यथाक्रमं दर्शयति—

भा०—सुखो वह्निः सुखो [1] —विषयेष्विह कथ्यते ।
दुःखाभावे च पुरुषः, सुखितोऽस्मीति मन्यते ॥ २६ ॥

टी०—सुखो वह्निरित्यादि । उदाहरणानि यथाक्रमं दर्शयति ॥ २६ ॥

भा०—पुण्यकर्मविपाकाच्च, सुखमिष्टेन्द्रियार्थजम् ।
कर्मक्लेशविमोक्षाच्च, मोक्षे सुखमनुत्तमम् ॥ २७ ॥

टी०—पुण्यकर्मेत्यादि । गतार्थावेतौ [2] श्लोकौ ॥ २७ ॥

१ 'संशृणु' इति ग–पाठः । २ 'गतार्थावेव' इति ज–पाठः ।

स्ववशस्यानभिसन्धे-र्न तस्य न च विग्रहा गतिर्भवति ।
भवति हि विग्रहगमने, कर्मारम्भोऽभिनिर्भेद ॥ ५ ॥—आर्या
अपि चानुश्रेणिगति- र्जीवानां पुद्गलानां च ।
स्वाभाविकीष्यते ये- न तेन सा विग्रहा सिद्धा ॥ ६ ॥—"
सिद्धस्य गतिरस्पृष्टा, स्पर्शनाद्विःप्रयोजनत्वाच्च ।
सा सिद्धावमुक्ता, कर्मविमुक्तस्य निःफलाः ॥ ७ ॥—"
बन्धविमोक्षात् सङ्ग- त्यागात् पूर्वप्रयोगतो गतिरि ।
ननु गच्छतोऽन्यथा न च मुक्तोऽभीप्सते विरतः ॥ ८ ॥—"
इत्येवं विप्रलापो-ऽस्पृष्टगतौ नान्तरालि यत्कालः ।
गत्यां हि सांतरस्- स्यातां स्यात् सिद्ध इतरो वा ॥ ९ ॥—"
सोऽस्पृष्टया हि गत्या- ऽनन्तरमेव समये जगच्छिखरम् ।
अवगाहनेनतां ने-न नास्ति ननु सो गतकालः ॥ १० ॥—"
सिध्यति गत्या ह्यात्मा, सिद्धिक्षेत्रेऽपहाय देहमिह ।
नान्तरतोऽस्ति सिद्धि-र्नासिद्धिश्चास्ति मुक्तस्य ॥ ११ ॥—"
स्ववशस्यानभिसन्धेः, कृतकृत्यस्य न यथा स्वभावेन।
तस्योपयोग इष्ट- स्तथा गतिः सा स्वभावेन ॥ १२ ॥—"

अथ यस्याः पृथिव्या उपरि मुक्तानामवस्थानं सा किंस्वरूपेत्याह—

भा०—तन्वी मनोज्ञा सुरभिः, पुण्या परमभास्वरा ।
प्राग्भारा नाम वसुधा, लोकमूर्ध्नि व्यवस्थिता ॥ १९ ॥—अनु०

टी०—तन्वीत्यादि । मध्ये योजनाष्टकबहला प्रदेशपरिहाण्या चोपर्युपरि मक्षिकापत्राद् तनुतरा पर्यन्तेऽतितन्वी मनोज्ञेत्यन्तरुचिरा सुरभिः-इष्टगन्धा पुण्यवद्भिः पृथिवीकायिकैः निर्वर्तिता पुण्या भृशं भासनशीला प्राग्भारेति नाम तस्याः । सा च लोकमूर्धनि व्यवस्थिता ॥ १९ ॥

भा०—नृलोकतुल्यविष्कम्भा, सितच्छत्रनिभा शुभा ।
ऊर्ध्वं तस्याः क्षितेः सिद्धा, लोकान्ते समवस्थिताः ॥ २० ॥—अनु०

टी०—नृलोकेत्यादि । नृलोकेऽर्धतृतीयद्वीपा मानुषोत्तरमहीधरपरिक्षिप्ता तत्तुल्यविष्कम्भा, पञ्चचत्वारिंशद्योजनलक्षविस्तरेत्यर्थः । उत्तानीकृतसितच्छत्त्रकाकृतिः शुभरूपाद्यात्मिका शुभा तस्याः क्षितेरुपरि लोकान्तस्पृशां सिद्धानामवस्थानम् ॥ २० ॥

---

१ 'स्याधिन' इति ज-पाठः । २ 'येन सेम (?) सा विग्रहा०' इति ज-पाठः । ३ 'सो सिद्धता च मुक्ता' इति ग-पाठः । ४ 'भीप्यति' इति ज-पाठः । ५ 'सुरभिगन्धा' इति ज-पाठः ।

भा०—यस्त्विदानीं सम्यग्दर्शनज्ञानचरणसम्पन्नो भिक्षुर्मोक्षाय घटमा कालसंहननायुर्दोषादल्पशक्तिः कर्मणां चातिगुरुत्वादकृतार्थ एवोपरमति सौधर्मादीनां सर्वार्थसिद्धान्तानां कल्पविमानविशेषाणामन्यतमस्मिन् देवतयो पद्यते ।

टी०—यः पुनरधुना दुःखबहुलं संसारमवेक्ष्य तन्निःसरणकृतप्रयत्नः सम्यग्दर्श ज्ञानचरणसम्पन्नो भिक्षुर्मोक्षाय घटमानो–मोक्षार्थकृतोत्साहो दुःषमाकालदोष परिपेलवकीलिकासेवार्तसंहननदोषादनेकापायाल्पायुर्दोषाच्चाल्पशक्तिः–अतीव स्तोकवी कर्मणां च–मोहनीयादीनामतिगुरुत्वादिति तीव्रानुभावादकृतार्थ एव–अक्षपितकर्मा एव उपरमति–कालं करोति स खलूपचितशुभराशिः सौधर्मादीनां द्वादशानां कल्पा विमानानां च सर्वार्थसिद्धान्तानामन्यतमस्मिन् कल्पे विमाने वा देवत्वायोपपद्यते– देवत्वेनोपपद्यत इत्यर्थः ।

भा०—तत्र सुकृतकर्मफलमनुभूय स्थितिक्षयात् प्रच्युतो देशजातिकुलशील विद्याविनयविभवविषयविस्तरविभूतियुक्तेषु मनुष्येषु प्रत्यायातिमवाप्य पुन सम्यग्दर्शनादिविशुद्धबोधिमवाप्नोति । अनेन सुखपरम्परायुक्तेन कुशलाभ्या सानुबन्धक्रमेण परं त्रिर्जनित्वा सिध्यतीति ॥

टी०—तत्र–सौधर्मादिषु कल्पेषु विमानेषु वा सुकृतकर्म–पुण्यकर्म तस्य फलं–विपा कमनुभूयायुषः स्थितिक्षयात् प्रच्युतो मगधादावार्यदेशे क्षत्रियादौ मनुष्यजातौ इक्ष्वाकु- कुलादिषु शीलवत्सु–सच्चेष्टेषु [1]विद्या–मुक्त्यनुगुणं ज्ञानं विनयः–अभ्युत्थानादिः विभवः- धन-धान्य-द्रविणसम्पत् विषयाः–शब्दादयः सर्वेषामेवैषां विस्तरः–प्राचुर्यं विस्तर एव विभूतिस्तद्युक्तेषु प्रत्यायातिमवाप्य–जन्म समधिगम्य पुनः सम्यग्दर्शनादिविशुद्धं बोधिमवाप्नोति । सम्यग्दर्शनमादिर्ययोर्ज्ञानचारित्रयोर्बोधिस्वरूपयोस्तं बोधिमवाप्नोति । ज्ञान- चरणे बोधिशब्दवाच्ये समवाप्नोतीत्यर्थः । अनेन–उक्तलक्षणेन कुशलाभ्यासानुबन्धक्रमेण सुखपरम्परायुक्तेन परं–प्रकर्षतस्त्रिर्जनित्वा मनुष्यो देवः पुनर्मनुष्य इति एवं त्रीणि जन्मानि समवाप्य सम्यक्त्वज्ञानलाभादिहितसंवरस्तपसा क्षपितकर्मराशिः सिध्यति सिद्धिक्षेत्र इति । उक्तं च—

"एवं संवरवर्मा, पिनह्य सम्यक्त्ववाहमधिरूढः ।
सज्ज्ञानमहाचापो–ध्यानादितपःशितपृषत्कैः ॥ १ ॥—आर्या

1 'विद्या सूक्त्य०' इति च–पाठः ।

भा०—सुखप्रसुप्तवत् केचि-दिच्छन्ति परिनिर्वृतिम् ।
तदयुक्तं क्रियावत्त्वात्, सुखानुशयतस्तथा ॥ २८ ॥

टी०—सुखप्रसुप्तेत्यादि । शोभनेन स्वात्मनः सुखनिद्रया सुप्तवदिच्छन्ति निर्वृतिं तदेतदयुक्तं योगवत्त्वात् क्रियावत्त्वात् तथा सुखानुशयाच्च । अनुशयः प्रकर्षापकर्षत्वम् ॥

भा०—श्रम-क्लम-मद-व्याधि-मदनेभ्यश्च सम्भवात् ।
मोहोत्पत्तेर्विपाकाच्च, दर्शनघ्नस्य कर्मणः ॥ २९ ॥

टी०—श्रमेत्यादि । श्रमः-खेदः क्लमो-ग्लानिः मदो-मद्यपानादिजनितः व्याधिः-ज्वरादिः मदनः-कामसेवनं एभ्यश्च सुखप्रसुप्तत्वस्य सम्भवात् रत्यरतिभयशोकादिको मोह-स्तस्माच्च सुप्तत्वसम्भवः । दर्शनघ्नं-दर्शनावरणकर्म तस्य विपाकात्-उदयात् सुखप्रसुप्तत्व-मिति । न चैतानि कारणानि मुक्तानां सम्भवन्ति ॥ २९ ॥

भा०—लोके तत्सदृशो ह्यर्थः, कृत्स्नेऽप्यन्यो न विद्यते ।
उपमीयेत[1] तद् येन, तस्मान्निरुपमं सुखम् ॥ ३० ॥

टी०—लोके इत्यादि । मोक्षसुखसदृशोऽर्थः सकलेऽपि लोके न कश्चिदस्ति ततो-ऽनुपमं तत् ॥

भा०—लिङ्गप्रसिद्धेः प्रामाण्या-दनुमानोपमानयोः ।
अत्यन्तं चाप्रसिद्धं तद्, यत् तेनानुपमं स्मृतम् ॥ ३१ ॥

टी०—लिङ्गेत्यादि । नाप्युपमानं तत्र क्रमते सादृश्याभावात् । सादृश्याख्यं लिङ्गं नास्ति मोक्षसुखस्य । नाप्यनुमानस्य मुक्तिसुखं गोचरीभवति । यस्मात्तस्य प्रामाण्यं लिङ्गप्रसिद्धेः कारणात् । पक्षधर्मान्वयव्यतिरेकयेव लिङ्गम् । न चास्ति तादृशो मोक्षसुखप्रतिपत्तावित्यतो नाप्यनुमेयम् ॥ ३१ ॥

भा०—प्रत्यक्षं तद्भगवता-मर्हतां तैश्च भाषितम् ।
गृह्यतेऽस्तीत्यतः प्राज्ञै-र्न छद्मस्थपरीक्षया ॥ ३२ ॥ इति

टी०—प्रत्यक्षमित्यादि । अर्हतां-सर्वज्ञानामेव तत् प्रत्यक्षं प्रत्यक्षीकृत्य च तैर्यथावद् भाषितं-व्यपेतरागद्वेषमोहैः श्रद्धेयवाक्यैः सर्वज्ञैरेव तदाख्यातम् । अतः सर्वज्ञप्रणीतागमप्रामाण्यात् तदस्तीति गृह्यते । प्रज्ञाऽसामर्थ्यान्न छद्मस्थपरीक्षया आगमव्यतिरिक्तैश्च छद्मस्थ-प्रत्यक्षादिभिः परीक्ष्यमाणं न जातुचिदुपलभ्यत इति ॥ ३२ ॥

एवमनुपममव्याबाधं च शाश्वतं स्वाभाविकं मुक्तिसुखमनुभवति क्षपितसकलकर्मजालः ।

१ ' उपनीयते ' इति ग-पाठः ।

भा०—यस्त्विदानीं सम्यग्दर्शनज्ञानचरणसम्पन्नो भिक्षुर्मोक्षाय घटमानः कालसंहननायुर्दोषादल्पशक्तिः कर्मणां चातिगुरुत्वादकृतार्थ एवोपरमति स सौधर्मादीनां सर्वार्थसिद्धान्तानां कल्पविमानविशेषाणामन्यतमस्मिन् देवतयोपपद्यते ।

टी०—यः पुनरधुना दुःखबहुलं संसारमवेक्ष्य तन्निःसरणकृतप्रयत्नः सम्यग्दर्शनज्ञानचरणसम्पन्नो भिक्षुर्मोक्षाय घटमानो–मोक्षार्थकृतोत्साहो दुःषमाकालदोषात् परिपेलवकीलिकासेवार्तसंहननदोषादनेकापायाल्पायुर्दोषाच्चाल्पशक्तिः–अतीव स्तोकवीर्यः कर्मणां च–मोहनीयादीनामतिगुरुत्वादिति तीव्रानुभावादकृतार्थ एव–अक्षपितकर्माष्टक एव उपरमति–कालं करोति स खलूपचितशुभराशिः सौधर्मादीनां द्वादशानां कल्पानां विमानानां च सर्वार्थसिद्धान्तानामन्यतमस्मिन् कल्पे विमाने वा देवत्वायोपपद्यते—देवत्वेनोपपद्यत इत्यर्थः ।

भा०—तत्र सुकृतकर्मफलमनुभूय स्थितिक्षयात् प्रच्युतो देशजातिकुलशीलविद्याविनयविभवविषयविस्तरविभूतियुक्तेषु मनुष्येषु प्रत्यायातिमवाप्य पुनः सम्यग्दर्शनादिविशुद्धबोधिमवाप्नोति । अनेन सुखपरम्परायुक्तेन कुशलाभ्यासानुबन्धक्रमेण परं त्रिर्जनित्वा सिध्यतीति ॥

टी०—तत्र–सौधर्मादिषु कल्पेषु विमानेषु वा सुकृतकर्म–पुण्यकर्म तस्य फलं–विपाकमनुभूयायुषः स्थितिक्षयात् प्रच्युतो मगधादावार्यदेशे क्षत्रियादौ मनुष्यजातौ इक्ष्वाकुकुलादिषु शीलवत्सु–सच्चेष्टेषु [1]विद्या–मुक्त्यनुगुणं ज्ञानं विनयः–अभ्युत्थानादिः विभवः-धन-धान्य-द्रविणसम्पत् विषयाः–शब्दादयः सर्वेषामेवैषां विस्तरः–प्राचुर्यं विस्तर एव विभूतिस्तद्युक्तेषु प्रत्यायातिमवाप्य–जन्म समधिगम्य पुनः सम्यग्दर्शनादिविशुद्धं बोधिमवाप्नोति । सम्यग्दर्शनमादिर्ययोर्ज्ञानचारित्रयोर्बोधिस्वरूपयोस्तं बोधिमवाप्नोति । ज्ञानचरणे बोधिशब्दवाच्ये समवाप्नोतीत्यर्थः । अनेन–उक्तलक्षणेन कुशलाभ्यासानुबन्धक्रमेण सुखपरम्परायुक्तेन परं–प्रकर्षतस्त्रिर्जनित्वा मनुष्यो देवः पुनर्मनुष्य इति एवं त्रीणि जन्मानि समवाप्य सम्यक्त्वज्ञानलाभादिहितसंवरस्तपसा क्षपितकर्मराशिः सिध्यति सिद्धिक्षेत्र इति । उक्तं च—

"एवं संवरवर्मा, पिनह्य सम्यक्त्ववाहमधिरूढः ।
सज्ज्ञानमहाचापो–ध्यानादितपःशितपृषत्कैः ॥ १ ॥—आर्या

[1] 'विद्या सूक्त्य०' इति च–पाठः ।

भा०—सुखमसुप्तवत् केचि-दिच्छन्ति परिनिर्वृतिम् ।
तदयुक्तं क्रियावत्त्वात्, सुखानुशयतस्तथा ॥ २८ ॥

टी०—सुखमसुप्तेत्यादि । शोभनेन स्वात्मनः सुखनिद्रया सुप्तवदिच्छन्ति निर्वृतिं तदेतदयुक्तं योगवत्त्वात् क्रियावत्त्वात् तथा सुखानुशयाच्च । अनुशयः प्रकर्षापकर्षवत्त्वम् ॥

भा०—श्रम-क्लम-मद-व्याधि-मदनेभ्यश्च सम्भवात् ।
मोहोत्पत्तेर्विपाकाच्च, दर्शनघ्नस्य कर्मणः ॥ २९ ॥

टी०—श्रमेत्यादि । श्रमः-खेदः क्लमो-ग्लानिः मदो-मद्यपानादिजनितः व्याधिः-ज्वरादिः मदनः-कामसेवनं एभ्यश्च सुखापसुप्तत्वस्य सम्भवात् रत्यरतिभयशोकादिश्च मोहस्तस्माच्च सुप्तत्वसम्भवः । दर्शनघ्नं-दर्शनावरणकर्म तस्य विपाकात्-उदयात् सुखमसुप्तत्वमिति । न चैतानि कारणानि मुक्तानां सम्भवन्ति ॥ २९ ॥

भा०—लोके तत्सदृशो ह्यर्थः, कृत्स्नेऽप्यन्यो न विद्यते ।
उपमीयेत तद् येन, तस्मान्निरुपमं सुखम् ॥ ३० ॥

टी०—लोके इत्यादि । मोक्षसुखसदृशोऽर्थः सकलेऽपि लोके न कश्चिदस्ति ततोऽनुपमं तत् ॥

भा०—लिङ्गप्रसिद्धेः प्रामाण्या-दनुमानोपमानयोः ।
अत्यन्तं चाप्रसिद्धं तद्, यत् तेनानुपमं स्मृतम् ॥ ३१ ॥

टी०—लिङ्गेत्यादि । नाप्युपमानं तत्र क्रमते सादृश्याभावात् । सादृश्याख्यं लिङ्गं नास्ति मोक्षसुखस्य । नाप्यनुमानस्य मुक्तिसुखं गोचरीभवति । यस्मात्तस्य प्रामाण्यं लिङ्गप्रसिद्धेः कारणात् । पक्षधर्मान्वयव्यतिरेक्येव लिङ्गम् । न चास्ति तादृशो मोक्षसुखप्रतिपत्तावित्यतो नाप्यनुमेयम् ॥ ३१ ॥

भा०—प्रत्यक्षं तद्भगवता-मर्हतां तैश्च भाषितम् ।
गृह्यतेऽस्तीत्यतः प्राज्ञै-र्न छद्मस्थपरीक्षया ॥ ३२ ॥ इति

टी०—प्रत्यक्षमित्यादि । अर्हतां-सर्वज्ञानामेव तत् प्रत्यक्षं प्रत्यक्षीकृत्य च तैर्यथावद् भाषितं-व्यपेतरागद्वेषमोहैः श्रद्धेयवाक्यैः सर्वज्ञैरेव तदाख्यातम् । अतः सर्वज्ञप्रणीतागमप्रामाण्यात् तदस्तीति गृह्यते । प्रज्ञाऽसामर्थ्यान्न छद्मस्थपरीक्षया आगमव्यतिरिक्तैश्च छद्मस्थप्रत्यक्षादिभिः परीक्ष्यमाणं न जातुचिदुपलभ्यत इति ॥ ३२ ॥

एवमनुपममव्याबाधं च शाश्वतं स्वाभाविकं मुक्तिसुखमनुभवति क्षपितसकलकर्मजालः ।

१ ' उपनीयते ' इति ग-पाठः ।

इदमुच्चैर्नागरवा-चकेन सत्त्वानुकम्पया दृब्धम् ।
तत्त्वार्थाधिगमाख्यं, स्पष्टमुमास्वातिना शास्त्रम् ॥ ५ ॥—आर्या
यस्तत्त्वाधिगमाख्यं, ज्ञास्यति च करिष्यते च तत्रोक्तम् ।
सोऽव्याबाधं सौख्यं, प्राप्स्यत्यचिरेण परमार्थम् ॥ ६ ॥—आर्या

टी०—सम्प्रदायाविच्छेदेनायातमर्हद्वचनं सम्यगवधार्य शारीरैर्मानसैश्च दुःखैरार्तं दुरागमैरैहिकसुखोपदेशप्रायैस्त्रयैः प्रभृतिभिः प्रमाणविघट्टनायामक्षमैर्विहतमतिम्–उपहत-विज्ञानमवलोक्य लोकमुच्चैर्नागरवाचकेनेति स्वशाखासूचकं तत्त्वार्थाधिगमाख्यं शास्त्रं भव्यसत्त्वानुकम्पया विरचितं स्फुटार्थमुमास्वातिनेति । तदेतच्छास्त्रं जीवादितत्त्वाधिगमार्थं योऽभ्येत्स्यते सूत्रतोऽर्थतश्चानुष्ठास्यति तत्रोक्तं सोऽव्याबाधसुखलक्षणमनन्तमनुपमं परमार्थं मोक्षमचिरेण प्राप्स्यतीति ॥

इति श्रीतत्त्वार्थाधिगमेऽर्हत्प्रवचनसंग्रहे भाष्यानुसारिण्यां वृत्तौ
मोक्षस्वरूपनिरूपको दशमोऽध्यायः ॥ १० ॥

॥ तत्समाप्तौ च समाप्तेयं तत्त्वार्थटीका ॥

आसीद् दिन्नगणिः क्षमाश्रमणतां प्रापत् क्रमेणैव यो
विद्वत्सु प्रतिभागुणेन जयिना प्रख्यातकीर्तिर्भृशम् ।
वोढा शीलभरस्य सच्छ्रुतनिधिर्मोक्षार्थिनामग्रणी-
र्जज्वालामलमुच्चकैर्निजतयस्तेजोभिरव्याहतम् ॥ १ ॥—शार्दूल०
यत्र स्थितं प्रवचनं, पुस्तकनिरपेक्षमक्षतं विमलम् ।
शिष्यगणसम्प्रदेयं, जिनेन्द्रवक्त्राद् विनिष्क्रान्तम् ॥ २ ॥—आर्या
तस्याभूत् परवादिनिर्जयपटुः सैंहीं दधच्छूरतां
नाम्ना व्यज्यत सिंहसूर इति च ज्ञाताखिलार्थागमः ।
शिष्यः शिष्टजनप्रियः प्रियहितव्याहारचेष्टाश्रयाद्
भव्यानां शरणं भवौघपतनक्लेशार्दितानां भुवि ॥ ३ ॥—शार्दूल०
निर्धूततमःसंहति-रखण्डमण्डलशशाङ्कसच्छाया ।
अद्यापि यस्य कीर्ति-र्भ्रमति दिगन्तानविश्रान्ता ॥ ४ ॥—आर्या
शिष्यस्तस्य बभूव राजि( जी )कशिरोरत्नप्रभाजालक-
व्यासङ्गाच्छुरितस्फुरन्नखमणिप्रोद्भासिपादद्वयः ।

---

१ 'गणी' इति ज-पाठः । २ 'पदः' इति ङ पाठः । ३ 'राजत' इति च-पाठः । ४ 'जातक' इति ङ-पाठः । ५ 'सङ्गच्छुरित०' इति च-पाठः ।

संयमरणाजिरस्थः, क्लेशनमूः संनिभूय भव्यात्मा ।
कर्मनृपरिपून् हत्वा–ऽपराराज्यश्रियं लभते ॥ २ ॥—आर्या
एवं कर्मोदयजी-र्णैरेः कर्मक्षयोपशमजैश्च ।
संसारसुखाचार्दैन, सिद्धिं कर्मक्षयादेव ॥ ३ ॥–"
ज्ञानं सुमार्गदीपं, सम्यक्त्वं तु तदविप्रणाशाय ।
चारित्रमास्रवत्वं, क्षपयति कर्माणि तु तपोऽग्निः ॥ ४ ॥–"
एतेन भवति सिद्धिः, सिद्धान्तचतुष्टयेन जिनवचने ।
न तु संवररहितस्य च, सा स्यान्न ज्ञानमात्रेण ॥ ५ ॥–"
इत्येकान्तसमेक-द्वीपं विविधं श्रमेरुपातालम् ।
अष्टाहं द्विरयं, चतुरावर्तं चतुःकूलम् ॥ ६ ॥–"
त्रिमहावातं त्र्युदयं, षड्वेगं चतुरशीतिनियतोर्मिम् ।
संसारार्णवमात्मा, नावा चतुरङ्गयोत्तरति ॥ ७ ॥–"

सम्प्रति वाचको निजाचार्यान्वयं द्विप्रकारमप्यावेदयते—

भा०—वाचकमुख्यस्य शिव–श्रियः प्रकाशयशसः प्रशिष्येण ।
शिष्येण घोषनन्दि-क्षमाश्रमणस्यैकादशाङ्गविदः ॥ १ ॥–गीतिः
वाचनया च महावा-चकक्षमणमुण्डपादशिष्यस्य ।
शिष्येण वाचकाचा-र्यमूलनाम्नः प्रथितकीर्तेः ॥ २ ॥—आर्या
न्यग्रोधिकाप्रसूते-न विहरता पुरवरे कुसुमनाम्नि ।
कौभीषणिना स्वातित-नयेन वात्सीसुतेनार्घ्यम् ॥ ३ ॥–"

टी०—तत्रायं प्रव्राजकान्वयः–शिवश्रीर्नाम वाचकः पितामहः सङ्ग्रहकारस्य, तस्य शिष्यो घोषनन्दिक्षमणस्तस्यायं सङ्ग्रहकारः शिष्यः । सम्प्रति वाचनाचार्यान्वयो मुण्डपादो नाम महावाचकः क्षमणः सोऽस्य पितामहः सङ्ग्रहकारस्य । तस्य शिष्यो मूलनामा वाचकस्तस्यायं सङ्ग्रहकारः शिष्यः । सम्प्रत्यात्मीयजन्मान्वयस्थानमाचष्टे—न्यग्रोधिका नाम ग्रामस्तत्र जातेन पाटलिपुत्रे कुसुमपुरनाम्नि विहरता । कौभीषणिनेति गोत्राख्यानम्, स्वातितनयेनेति पितुराख्यानम्, वात्सीसुतेनेति गोत्रेण नाम्ना उमेति मातुराख्यानम् ॥

भा०—अर्हद्वचनं सम्यग्, गुरुक्रमेणागतं समवधार्य ।
दुःखार्तं च दुरागम-विहतमतिलोकमवलोक्य ॥ ४ ॥—आर्या

१ 'मवाप्या' इति ज–पाठः । २ 'वाचकाचार्यान्वयो' इति ग–पाठः । ३ 'समुपधार्य' इति ज–पाठः ।

# सूत्रक्रमेणान्तराधिकारसूचा

